# कालनिर्णयः ।

BIBLIOTHECA INDICA

LLECTION OF ORIENTAL WC

PUBLISHED BY

'HE ASIATIC SOCIETY OF BENGAL.

NEW SERIES, NOS. 540, 558, 622, 676.

---

# KÁLA NIRṆAYA

## (KÁLA MÁDHAVA)

BEING

REATISE ON THE TIME PROPER FOR RELIGIOUS OBSERVANCES

BY

MÁDHAVÁCHÁRYYA.

EDITED WITH NOTES

BY

MAHÁMAHOPÁDHYÁYA CHANDRAKÁNTA TARKÁLANKÁRA.

PROFESSOR, SANSKRIT COLLEGE.

CALCUTTA:

PRINTED AT THE BAPTIST MISSION PRESS.

1890.

# कालनिर्णयः।

महामहोपाध्यायमाधवाचार्य्यविरचितः।

राजकीयसंस्कृतविद्यालयाध्यापक-

महामहोपाध्याय-

श्रीचन्द्रकान्ततर्कालङ्कारकृत-

संक्षिप्तटिप्पणीसमेतः

तेनैव परिशोधितः

वङ्गीयाशियाटिक-सोसाइटिसभानामनुमत्या

प्रकाशितः।

कलिकातानगर्य्यां

ब्याप्टिष्टमिसनयन्त्रे मुद्रितः।

शकाब्दाः १८०९.

# भूमिका।



कालमाधवनाम्ना प्रसिद्धोऽयं कालनिर्णयाभिधोग्रन्थः। क्वचित् कालमाधवीयतयाऽप्यस्य निर्द्देशो दृश्यते। सोऽयं ग्रन्थः पराशरस्मृतिव्याख्यापरिशिष्टरूपः पराशरस्मृतिव्याख्याप्रणयनानन्तरं प्रणीतः। तथाचास्य ग्रन्थस्योपक्रमणिकागतः श्लोकः,—

> "व्याख्याय माधवाचार्य्यो धर्म्मान् पाराशरानथ।
> तदनुष्ठानकालस्य निर्णयं वक्तुमुद्यतः"॥

ग्रन्थेऽस्मिन् पञ्च प्रकरणानि सन्ति। तेषु प्रथममुपोद्घातप्रकरणम्। द्वितीयं वत्सरप्रकरणम्। तृतीयं प्रतिपत्प्रकरणम्। चतुर्थमवशिष्टतिथिप्रकरणं वा द्वितीयादिप्रकरणम्। पञ्चमं नक्षत्रादिप्रकरणम्, प्रकीर्णकप्रकरणं वा।

दर्शनशास्त्ररीत्या विचारेण कालतत्त्वं, तस्य निर्णययोग्यता, नित्यानित्यभेदेन कालद्वैविध्यं, नित्यकालस्त्वीश्वरएव, स च कर्म्मादौ स्मर्त्तव्यः, अन्यकालमध्ये त्वब्दस्य मुख्यत्वं निमेषादीनान्तु तदाश्रिततया गौणत्वमित्येतदर्थजातमुपोद्घातप्रकरणेऽभिहितम्।

द्वितीये वत्सरप्रकरणे वत्सरायनऋतुमासपक्षा निरूपिताः। तत्र चान्द्र-सौर-सावन-नाक्षत्र-वार्हस्पत्य-भेदात् वत्सरः पञ्चविधः, विषयविशेषे तेषामुपयोगश्च निर्णीतः। दक्षिणायनोत्तरायणभेदेन द्विविधमयनं कर्म्मविशेषे तयोर्विनियोगश्च दर्शितः। वसन्तग्रीष्मवर्षाशरद्धेमन्तशिशिरभेदात् षोढा ऋतवः। ते च चान्द्राः सौराश्च। तेषां विषयविशेषे विनियोगश्च समर्थितः। चान्द्र-सौर-सावन-नाक्षत्रभेदात् चतुर्विधोमासः। चान्द्रोऽपि द[illegible]न्त-पूर्णिमान्तभेदात् द्विविधः। कर्म्मविशेषेषु च तेषां विनियोग' तत्र चान्द्रएव

मासोऽसंक्रान्तो मलमासोभवति। स चोत्तरमासान्तर्गतः। एकवर्षे असंक्रान्तमासद्वयपाते तद्वर्षे एकोमासोद्विसंक्रान्तोऽपि भवति। तेषु चादिमः संसर्पाख्यः, अन्तिमोऽधिमासः, द्विसंक्रान्तस्तु क्षयमासद्वयंहस्पतिरिति चोच्यते। तेषु किं कर्म्म करणीयं किं वा न करणीयमित्येतत् सर्व्वं द्वितीयप्रकरणे उक्तम्।

तृतीये प्रतिपत्प्रकरणे तिथयो निर्णीताः। तिथीनां शुद्धत्व-विद्धत्वे निरूपिते। प्रतिपदि उपवासैकभक्तनक्तायाचितव्रतदानभेदेन षड्विधदैव कर्म्मणः, एकोद्दिष्टपार्व्वणभेदेन द्विविधपित्र्यकर्म्मणश्च कालोनिरूपितः।

चतुर्थे द्वितीयादिप्रकरणे द्वितीयाद्यादर्शान्तास्तिथयः कर्म्मयोग्यतया निरूपिताः। इष्टौ पर्व्वनिर्णीतम्। पर्व्वसन्धिश्च व्यवस्थापितः। इष्टेरिष्टिविकृतीनाञ्चानुष्ठानकालोदर्शितः।

पञ्चमे नक्षत्रादिप्रकरणे नक्षत्र-योग-करण-वारा निरूपिताः। संक्रान्तिपुण्यकालः, तत्र कर्त्तव्यञ्च दर्शितम्। ग्रहणं निर्णीतम्। तत्र ग्रहणविशेषे क्षेत्रविशेषस्य नदीविशेषस्य च माहात्म्यमुपदर्शितम्। ग्रहणे भोजन-विधिनिषेधौ चिन्तितौ। ग्रहणे वेधश्च निरूपितः।

उपोद्घातप्रकरणस्यादौ श्लोकैरेकाऽनुक्रमणिका ग्रन्थकृता रचिता। या कालमाधवकारिकेत्याख्यायते। सा स्वतीव समीचीना, विचाररहिता, समस्तव्यवस्थानिर्णायिका च। मूलग्रन्थमनधीत्यापि केवलं तयैव शक्यन्ते कर्म्मविशेषेषु तिथिविशेषानिर्णेतुम्।

सोऽयं ग्रन्थोऽस्यातिकसमाजानामनुमत्या मुद्रितोऽभूत्। अस्य ग्रन्थस्य शोधनार्थं चत्वारि पुस्तकानि संगृहीतानि। एकं अस्यातिकसमाजपुस्तकालयस्थं सो० चिह्नितं नातिसमीचीनम्। अपरं कलिकातां-शोभाविपणिस्थराजगृहादानीतं क० चिह्नितं नातिपरिशुद्धम्। अन्यत्क्रीतः क्रीतं मु० चिह्नितं प्रायः परिशुद्धम्। इतरत् श्रीमदीश्वरचन्द्रविद्यासागरमहाशयपुस्तकालयादाहृतं वि० चिह्नितं परिशुद्धम्। प्रायः सर्व्वत्रैव विवरणाहे स्थाने विवरणं कृतम्। अस्य शोधनादौ यथा-

मपि कृतोयत्नः, तथापि यद्यदसङ्गतमुपलभ्यते तत्तत् कृपया शो
धनीयं विद्वद्भिरिति शिवम्।

सोऽयं ग्रन्थो महामहोपाध्यायेन माधवाचार्य्येण रचितइत्येतदुपक्रम
णिकायामेव स्पष्टम्। माधवाचार्य्यश्च बुक्कणमहाराजस्य कुलगुरुर्मन्
त्र्यासीदित्येतदप्यत्रैव व्यक्तम्। सोऽयं मायणाचार्य्यस्य श्रीमत्याश्च पु
त्रः, ख्यातस्य वेदभाष्यादिग्रन्थकर्त्तुः सायणाचार्य्यस्य भ्राता यजुःशाखी भार
द्वाजगोत्रश्चेति एतत्प्रणीतपराशरस्मृतिव्याख्यातोऽवगम्यते। तथाच तदु
पक्रमणिकागतौ श्लोकौ,—

"श्रीमती जननी यस्य सुकीर्त्तिर्मायणः पिता।
सायणो भोगनाथश्च मनोबुद्धी सहोदरौ॥
यस्य बौधायनं सूत्रं शाखा यस्य च याजुषी।
भारद्वाजं कुलं यस्य सर्व्वज्ञः स हि माधवः"—इति॥

सोऽयं सायणाचार्य्यस्याग्रजएवासीन्न त्वनुजः,—इति सायणाचार्य्यकृत-
यज्ञतन्त्रसुधानिधिग्रन्थादवगम्यते। तथाच तद्ग्रन्थे सायणाचार्य्येणोक्तम्,—

"तस्याभूदन्वयगुरुस्तत्त्वसिद्धान्तदर्शकः।
सर्व्वज्ञः सायणाचार्य्यो मायणार्य्यतनूद्भवः॥
उपेन्द्रस्येव यस्यासीदिन्द्रः सुमनसां प्रियः।
महाक्रतूनामाहर्त्ता माधवार्य्यसहोदरः"—इति॥

अतएव सायणाचार्य्येण, ज्येष्ठे भ्रातरि भक्त्यतिशयात् प्रायः स्वनिर्म्मिता-
ग्रन्था माधवीयतया निर्दिष्टाः। न तु माधवसायणयोरैक्यमिति भ्रमितव्यं,
उक्तप्रमाणाभ्यान्तयोर्भेदावगतेः। परं सायणेति माधवाचार्य्याणुजनामवत्
वंशनामापीति प्रतीयते। तथाच सायणाचार्य्यविरचितायां माधवीया-
ख्यायां धातुवृत्तौ उपक्रमणिकायां तेनोक्तम्,—

"तस्य मन्त्रिशिखारत्नमस्ति मायणसायणः।
यः ख्यातिं रत्नगर्भेति यथार्थयति पार्थिवीम्॥

+ + + +

तेन मायणपुत्रेण सायणेन मनीषिणा ।
व्याख्यया माधवीयेयं धातुवृत्तिर्विरच्यते" ॥

अत्र हि पूर्व्वश्लोके मायणस्य सायणतयोल्लेखो वंशनामत्वमस्यावगमयति । उत्तरश्लोके च व्यक्तमस्य व्यक्तिविशेषनामत्वमभिहितम् । सायणशब्दस्य वंशनामत्वादेव सर्व्वदर्शनसंग्रहे माधवाचार्य्यस्यापि सायणतयोल्लेखः सङ्गच्छते । यथा,—

"श्रीमत्सायणमाधवः प्रभुरुपन्यास्यत् सतां प्रीतये" ।

सायणशब्दस्य वंशनामत्वं सुव्यक्तमवगम्यते तत्रैव । यथा,—

"श्रीमत्सायणदुग्धाब्धिकौस्तुभेन महौजसा ।
क्रियते माधवार्य्येण सर्व्वदर्शनसंग्रहः" ॥

कालमाधवाद्युपक्रमणिकासु "सोऽहं प्राप्य विवेकतीर्थपदवीं"—इति स्वयमभिधानात् "विवेकतीर्थ" इत्युपाधिर्माधवाचार्य्यस्यासीदित्यवगम्यते । "विवेकतीर्थेति पदवीमभिधां"—इति कालमाधवटीकायां व्याख्यातम् । सोऽयं भारतीतीर्थाभिधस्य कस्यापि यतीन्द्रस्य शिष्य इत्येतदेतत्कृतग्रन्थेषु बहुशोलेखदर्शनादवगम्यते । परं सर्व्वदर्शनसंग्रहे साङ्गपाणितनयः सर्व्वज्ञविष्णुगुरुरपि नमस्कृतोऽनेन ।

अनेन किल माधवाचार्य्येण जैमिनीयन्यायमालाविस्तरोऽपि निरमायि, पुराणसारोऽपि व्याख्यातः । तथा च न्यायमालागतौ श्लोकौ,—

"निर्माय माधवाचार्य्यो विद्वदानन्ददायिनीम् ।
जैमिनीयन्यायमालां व्याचष्टे बालबुद्धये ॥
श्रुतिस्मृतिसदाचारपालको माधवोबुधः ।
स्मार्त्तं व्याख्याय सर्व्वार्थं द्विजार्थं श्रौतयतः" ॥

उत्तरश्लोकः स्वयमेव व्याख्यातो यथा,—सर्व्ववर्णाश्रमानुग्रहाय पुराणसारपराशरस्मृतिव्याख्यानादिना स्मार्त्तोधर्म्मः पूर्व्वं व्याख्यातः, इदानीं द्विजानां विशेषानुग्रहाय श्रौतधर्म्मव्याख्यानाय प्रवृत्तः,—इति । वेदभाष्येषु

न माधवाचार्य्यप्रणीतं, किन्तु तदनुजसायणाचार्य्यप्रणीतमेव। तथा च सायणाचार्य्यकृतयज्ञतन्त्रसुधानिधिग्रन्थे सायणाचार्य्यं प्रति सभासदामुक्तिः,—

"अधीताः सकला वेदास्ते च दृष्टार्थगौरवाः।
त्वत्प्रणीतेन तद्भाष्यप्रदीपेन प्रथीयसा"॥

अतएव वेदभाष्ये जैमिनीयन्यायमालाश्लोकोद्धरणवेलायां, न्यायविस्तरकार आह,—इत्युक्तिः सङ्गच्छते। अतएव च वेदभाष्यादौ सायणाचार्य्यकृतित्वोल्लेखः। यच्च क्वचित्,

"कृपालुर्माधवाचार्य्यो वेदार्थं वक्तुमुद्यतः"।

इत्युक्तिर्दृश्यते, साऽपि ज्येष्ठे भ्रातरि भक्तयतिशयख्यापनार्था। स्वकृतेरेव तत्कृतित्वोल्लेखस्तस्मिन् भक्तयतिशयमेव ख्यापयति। अतएव तत्रैव तत्तत्प्रपाठकादिपरिसमाप्तौ "इति सायणाचार्य्यविरचिते माधवीये वेदार्थप्रकाशे" इति पुष्पिकायां लिखितम्।

सोऽयं बुक्कस्य बुक्कणस्य वा महाराजस्य कुलगुरुर्मन्त्री चासीत्। बुक्कस्तु चन्द्रवंशीयः सङ्गमनाम्नो महाराजस्यात्मजः। बुक्कस्यात्मजस्तु हरिहरनामा आसीत् इति यज्ञतन्त्रसुधानिधौ सुव्यक्तम्। यथा,

"वंशे चान्द्रमसे तदन्वयनिधिः श्रीसङ्गमोऽभून्नृप-
स्तस्मात् प्रादुरभूदभीष्टसुरभिः श्रीबुक्कपृथ्वीपतिः॥
हरिहरनिभभूमा कामदोऽभूज्जगत्यां
हरिहरनरपालस्तस्य भूपाल्लतनूजः"॥

सायणस्तु सङ्गमस्य मन्त्री बभूव इति माधवीयधातुवृत्तौ दृश्यते। यथा,—

"अस्ति श्रीसङ्गमक्ष्मापः पृथ्वीतलपुरन्दरः।
+ + + +
तस्य मन्त्रिशिखारत्नमस्ति मायणसायणः"॥

सायणस्तु बुक्कस्य परतो हरिहरस्य च मन्त्री आसीदिति तदीयादेदभाष्यात् यज्ञतन्त्रसुधानिधिग्रन्थाच्चावगम्यते। स खल्वयं माधवाचार्य्यः

रामानुजाचार्य्यात् जैनहेमचन्द्राचार्य्यात् काव्यप्रकाशाच्च पराचीन इति एतत्कृतसर्व्वदर्शनसंग्रहे तेषामुल्लेखदर्शनादवधार्य्यते।

तदेवं माधवसायणयोर्ग्रन्थेभ्यो यावत्तयोरितिवृत्तमुपलब्धुं शक्यं, तावदेव मयोपनिबद्धं, नात्र किमपि स्वप्रतिभयोट्टङ्कितं कल्पनया वा कलुषीकृतम्। इत्यास्तां विस्तरः।

कलिकातामहानगर्य्यां<br>राजकीयसंस्कृतविद्यालयः।<br>शाकाः १८०९ चैत्रे मासि।

मेरपुरनगरवास्तव्यः<br>श्रीचन्द्रकान्तशर्म्मा।

---

# वर्णक्रमानुसारिणी कालमाधवस्य विषयसूची।

अ



आ

## आ

क



ख



ग

ग



च

ज



त



द

ष



स

ॐ

# काल-निर्णयः

वा

## काल-माधवीयः

वा

# काल-माधवः ।

तत्र

## प्रथममुपोद्घात-प्रकरणम् ।

श्रीगणेशाय नमः ।

वागीशाद्याः सुमनसः सर्व्वार्थानामुपक्रमे ।

यं नत्वा कृत-कृत्याः स्युस्तं नमामि गजाननम् ॥ १ ॥

सोऽहं प्राप्य(१)विवेक-तीर्थ-पदवीमाम्नाय-तीर्थे परं

मज्जन् सज्जन-सङ्ग-तीर्थ-निपुणः सद्वृत्त-तीर्थं श्रयन् ।

लब्धामाकलयन् प्रभाव-लहरीं श्रीभारती-तीर्थतो-

विद्या-तीर्थमुपाश्रयन् हृदि भजे श्रीकण्ठमव्याहतम् ॥ २ ॥

---

(१) विवेकतीर्थेति पदवीमभिधां, विवेकस्य आत्मानात्मविवेकस्य प्रतिपादकं तीर्थं शास्त्रमुपायो वा तस्य पदवीं सरणिञ्च प्राप्य, इति टीकासम्मता व्याख्या । अनया च व्याख्यया 'विवेकतीर्थ' –इति माधवाचार्य्यस्योपनाम आसीदिति प्रतीयते ।

सत्यैक-व्रत-पालको द्विगुणधीस्त्रयर्थी चतुर्व्वेदिता
पञ्च-स्कन्ध-कृती षडन्वय-दृढ़ः सप्ताङ्ग-सर्व्वंसहः ।
अष्ट-व्यक्ति-कला-धरो नव-निधिः पुष्यद्दश-प्रत्ययः
स्मार्त्तोच्छ्राय-धुरन्धरो विजयते श्रीबुक्कण-क्ष्मा-पतिः(१) ॥ ३ ॥
व्याख्याय माधवाचार्य्यो धर्मान् पाराशरानथ ।
तदनुष्ठान-कालस्य निर्णयं वक्तुमुद्यतः* ॥ ४ ॥

---

* कर्त्तुमुद्यतः, - इति पाठान्तरम् ।

---

(१) सत्यरूपमेकं मुख्यं एकमद्वितीयञ्च यत् व्रतं, तस्य पालकः । अन्यापेक्षया द्विगुणा धीर्यस्य सोऽयं द्विगुणधीः । अथवा द्वौ गुणौ सत्वरजसी यस्यां तादृशी धीर्यस्य । सात्त्विकी राजसी च बुद्धिर्न तामसीत्यर्थः । बुद्धेस्त्रिगुणत्वेऽपि द्विगुणत्वोक्तिराधिक्याभिप्रायेण । त्रीन धर्म्मार्थकामानर्थयते इति त्र्यर्थी । चतुर्णां वेदानां, साम-दान-भेद-दण्डरूपाणामुपायानां, “आन्वीक्षिकी त्रयी वार्त्ता दण्डनीतिश्च शाश्वती । विद्याश्चैताश्चतस्रस्तु लोकसंस्थिति-हेतवः” —इत्युक्तविद्यानां वा वेदिता । पञ्चसु स्कन्धेषु रूप-वेदना-विज्ञान-संज्ञा-संस्कारेषु सौगताद्युक्तेषु, “सहायाः साधनोपाया विभागो देशकालयोः । विनिपातप्रतीकारः सिद्धिः पञ्चाङ्गमिष्यते”—इत्युक्तलक्षणेषु मन्त्राङ्गेषु वा, कृती कुशलः । षसां “सन्धिर्ना विग्रहो यानमासनं द्वैधमाश्रयः”—इत्युक्त लक्षणानामन्वयेन दृढ़ः । “स्वाम्यमात्य-सुहृत्-कोश-राष्ट्र-दुर्ग-बलानि च । सप्ताङ्गानि”—इत्युक्तलक्षणानि सप्त अङ्गानि यस्यां तादृशी सर्व्वंसहा पृथिवी यस्य । अष्टानां व्यक्तिकलानां बुद्धिगुणानां धरः, अष्टौ व्यक्तयो मूर्त्तयो यस्यासौ अष्टव्यक्तिर्महादेवः तस्य कलाया अंशस्य धरः इति वा । अष्टानां व्यक्तानां लोकपालानां कलाधर इत्यन्ये । नवानां रसानां प्रभावादीनां वा निधिः । अथवा नवसङ्ख्यका निधयः “महापद्मश्च पद्मश्च शङ्खोमकरकच्छपौ । मुकुन्द-कुन्द-नीलाश्च खर्व्वश्च निधयो नव”—इत्युक्तलक्षणा यस्य इत्यर्थः । पुष्यन्तो वर्द्धमानाः दश प्रत्ययाः सम्यक्‌हेतवः शास्त्रादयो यस्य, पुष्यन् दशसु दिक्षु वेदवेदाङ्गेषु वा, प्रत्ययो ज्ञानं यस्येति वा ।

व्यामूढानामिह तनुभृतां जाह्नवी तीर्थमेकं(१)
विद्या तीर्थं प्रकृति-विमलं सद्विवेकोदयानाम् ।
सर्व्वेषां तत् प्रथम-सुखदं* भारती(२) तीर्थमाङ्-
स्तद्भावान्मे विपुल-मनसो† निश्चये शक्तिरस्ति ॥ ५ ॥
अर्थोऽनुक्रम्यते श्लोकैरखिलो निर्णिनीषितः ।
तावतैवानुतिष्ठासुर्निःसन्देहः‡ प्रवर्त्तताम्
ततो मीमांसु-चित्तस्य समाधानाय तत् पुनः—
विवरिष्ये यथान्यायं श्रुति-स्मृति-वचोबलात् ॥
पञ्च प्रकरणान्यत्र तेषूपोद्घात-वत्सरौ—
प्रतिपत् शिष्टतिथयो नक्षत्रादिरिति क्रमः (३) ॥

* परमसुखदं,— इति पाठान्तरम् ।
† विमलमनसो, इति पाठान्तरम् ।
‡ निःसन्देहं, इति मु० पुस्तके पाठः ।

(१) तीर्थं पुरुषार्थप्राप्त्युपायभूतम् ।

(२) भारती सरस्वती तीर्थम् । भारतीतीर्थं तन्नामानं निजगुरुं प्रथम-सुखदमाङ्रिति वा । तस्मिन् चरमतीर्थे भावात् श्रद्धातिशयेन मनःसंयोगात् भक्त्यतिशयाद्वा, विपुलं विस्तृतं सकल-विषय-ग्राहि मनो यस्य, तस्य मे इत्यर्थः । विमलमनस इति पाठे विमलं संशय-शून्यं मनो यस्येत्यर्थः ।

(३) उप समीपे उद्धृत्य हन्यते इत्युपोद्घातः । स च "चिन्तां प्रकृतसिद्ध्यर्थामुपोद्घातं विदुर्बुधाः" इत्युक्तलक्षणः । प्रकृत-निर्व्वाहक-साधारण-परिभाषेति केचित् । प्रतिपदिति भिन्नं पदम् । तथा च, १ उपोद्घातप्रकरणम्, २ वत्सर-प्रकरणम्, ३ प्रतिपत्प्रकरणम्, ४ अवशिष्टद्वितीयादितिथिप्रकरणम्, ५ नक्षत्रादिप्रकरणम्, इति पञ्च प्रकरणानि । नक्षत्रादिरित्यादि-पदात् योग-करण-ग्रहणकालादयोऽप्यत्र ।

(१) उपोद्घाते काल-सत्त्वं तस्य निर्णय-योग्यता ।
ईश्वरोनित्यकालात्मा चिन्तनीयः स कर्मसु ॥
जन्ये कालेऽब्दमुख्यत्वम्—उक्तमेतच्चतुष्टयम् (२) ।

---

(३) अब्दायनर्तुमासाश्च पक्षः प्रकरणान्तरे ॥
(४) अब्दः पञ्चविधश्चान्द्रोव्रतादौ * तिलकादिके ।
सुजन्मादिव्रते सौरो गोसत्रादिषु सावनः ॥
त्रयोऽप्याचार्य्य-सेवादौ विकल्प्यन्ते निजेच्छया ।
आयुर्दाये हि नाक्षत्रो वार्हस्पत्योऽधिवत्सरे† (५) ॥
(६) चान्द्राणां प्रभवादीनां पञ्चके पञ्चके युगे ।

---

* अब्दस्त्रिधा तत्र चान्द्रोव्रतादौ,—इति से० पुस्तके पाठः ।
† नास्तीदमर्द्धं से० पुस्तके ।

---

(१) उपोद्घात-प्रकरण-प्रतिपाद्यार्थमाह उपोद्घाते इत्यादिना, उक्तमेतच्चतुष्टयमित्यन्तेन ।

(२) जन्यकाले विषये अब्दस्य मुख्यत्वं निमेषादीनां तदाश्रयतया गौणत्वमित्यर्थाल्लभ्यते । एतच्चतुष्टयमुपोद्घाते उक्तमिति सम्बन्धः ।

(३) द्वितीय-प्रकरण-प्रतिपाद्यार्थमाह अब्देत्यादिना, कृष्णः पित्र्ये विशिष्यते इत्यन्तेन । प्रकरणान्तरे वत्सरप्रकरणे ।

(४) अब्दभेदानाह अब्द इति । तन्नामानि सव्यवस्थान्याह चान्द्रोव्रतादाविति । तिलकादिके चान्द्र इति संबन्धः ।

(५) मध्यमगणनया गुरोः संक्रान्तिशून्योयश्चान्द्रवत्सरः सोयमधिवत्सर इति वक्ष्यते ।

(६) चान्द्रस्यावान्तरभेदमाह चान्द्राणामिति । प्रभवादयः षष्ठिसङ्ख्यकाः संवत्सराश्चान्द्राः, तेषु द्वादश-पञ्चकानि, तत्रैकैकस्मिन् पञ्चके क्रमेण संवत्सरादयः भवन्ति । तत्र संवत्सरः प्रथमः, परिवत्सरो द्वितीयः, इदावत्सरस्तृतीयः, अनुवत्सरश्चतुर्थः, इद्वत्सरः पञ्चम इति विवेकः । सोऽयं युगसंज्ञितः कालः ।

संपरीदान्विदित्येत* च्छब्दपूर्व्वास्तु वत्सराः ॥
तिलोयवो वस्त्र-धान्यौ† रजतं दीयतेऽत्र तु(१) ।
(२) उग्रे कर्म्मणि शान्ते च सोऽयने दक्षिणोत्तरे ॥
(३) वसन्ताद्यृतवो द्वेधा चान्द्राः सौराश्च, चान्द्रकाः‡—
चैत्राद्या, अथ§ मीनाद्या मेषाद्या वा विवस्वतः ॥
तेष्वाधानादयस्तद्वत् षण्मूर्त्ति-व्रत-पूजनम् ।
(४) मासास्तु सावनः सौरश्चान्द्रो नाक्षत्र|| इत्यमी ॥
(५) दर्शान्तः पूर्णिमान्तो वा चान्द्रोऽसौ विप्र-वैश्ययोः ।
सौरोराज्ञः, सावनस्तु यज्ञे, ज्योतिषिके परः ॥
माघादि-मास-भेदेषु तिल-दानादयः स्मृताः ।
(६) चान्द्रोऽधिमासोऽसंक्रान्तः सोऽन्तर्भवति चोत्तरे ॥

---

* सम्परीदान्विदद्देत—इति सो॰ पुस्तके पाठः ।
† वस्त्रधान्य—इति मु॰ पुस्तके पाठः ।
‡ चान्द्रगाः,—इति मु॰ पुस्तके पाठः ।
§ ह्यथ,—इति मु॰ पुस्तके पाठः ।
|| नक्षत्र —इति मु॰ पुस्तके पाठः ।

---

(१) अत्र प्रभवादिपञ्चके यथाक्रमं तिलादिपञ्चकं दीयते इत्यर्थः ।
(२) अयनविभागमाह उग्रे इति ।
(३) ऋतून् विभजते वसन्तादीति । तथा च चान्द्रावसन्ताद्या ऋतवस्त्वान्ते चैत्रमारभ्य प्रवर्त्तन्ते । सौरास्तु रवेर्मीनराशिभोगमारभ्य मेषराशिभोगमारभ्य वा प्रवर्त्तन्ते,—इति विवेकः ।
(४) मासविभागमाह मासास्त्विति ।
(५) मध्यवस्थं चान्द्रादीनां स्वरूपमाह दर्शान्त इत्यादि । विप्रस्य दर्शान्तः, वैश्यस्य पूर्णिमान्त इत्यर्थः । परः नाक्षत्रः ।
(६) चान्द्रमासे विशेषान्तरमाह चान्द्रोऽधिमास इत्यादिना । सः अधिमासः उत्तरे प्रक्रान्ते मासि अन्तर्भवतीत्यर्थः ।

असंक्रान्तावेकवर्षे द्वौ चेत् संसर्प आदिमः(१)।
क्षयमासोद्विसंक्रान्तः स चांहस्पति-संज्ञकः॥
क्षयस्त्याज्या विवाहादौ, संसर्पांहस्पती उभौ—
शुद्धौ श्रौते तथा स्मार्त्ते,(२) मलमासोविविच्यते॥
काम्यारम्भं तत्-समाप्तिं मलमासे विवर्ज्जयेत्।
आरब्धं मलमासात् प्राक् कृच्छ्रं सत्रादिकं तु यत्* ॥
तत् समाप्यं सावनस्य मानस्यानतिलङ्घनात्† (३)।
आरम्भस्य समाप्तेश्च मध्ये स्याच्चेन्मलिम्लुचः॥
प्रवृत्तमखिलं काम्यं तदाऽनुष्ठेयमेव तु।
कारीर्य्यादि तु यत् काम्यं तस्यारम्भ-समापने—
कार्य्ये, काल-विलम्बस्य प्रतीक्षाया असम्भवात् (४)।
अनन्य-गतिकं नित्यमग्निहोत्रादि न त्यजेत्॥
गत्यन्तर-युतं नित्यं सोम-यागादि वर्ज्जयेत् (५)।

---

* कृच्छ्रसत्राब्दिकं च यत्,—इति सो० पुस्तके पाठः।
† मासस्यानतिलङ्घनात्,—इति सो० पुस्तकपाठः।

---

(१) अर्थादन्तिमोऽधिमास इति भावः।

(२) तथा च अधिमाससंसर्पांहस्पतिषु त्रिष्वेव विवाहादिमङ्गलकर्म्माणि न कार्य्याणि श्रौतस्मार्त्तकर्म्माणि तु संसर्पांहस्पत्योः कार्य्याणीत्यर्थः।

(३) तथा च यत्र नवतिदिनसाध्यं कर्म्मारब्धं तत्र तथाविधसावनमानानुरोधेन मलमासेऽपि तत्समापनं कार्य्यमित्यर्थः।

(४) कारीरी नाम यागविशेषः। अवग्रहेण शुष्यतां शस्यानां वृष्ट्या सञ्जीवनं तत्फलम्, अतस्तत्र कालप्रतीक्षा न सम्भवति॥

(५) अग्निहोत्रादेरनन्यगतिकत्वमहरहः कर्त्तव्यत्वात्। तद्वैपरीत्याच्च सोमयागादेर्गत्यन्तरयुतत्वं बोध्यम्।

(१) अगति ग्रहण-स्नानं जातेष्टिर्गति-संयुता—
द्वयं नैमित्तिकं, तस्य व्यवस्था नित्यवन्मता।
शुद्धमास-मृतानां स्यान्मलिने प्रथमाब्दिकम् (२)॥
मलमास-मृतानान्तु मले स्यादाब्दिकान्तरम् (३)।
(४) दैवे मुख्यः शुक्लपक्षः कृष्णः पित्र्ये विशिष्यते॥

(५) तृतीये तु प्रकरणे वर्णिता* प्रतिपत्तिथिः।
प्रतिपन्नाम विज्ञेया चन्द्रस्य प्रथमा कला (६)॥

* वर्ण्यते,—इति पाठान्तरम्।

(१) अगतीति अनन्यगतिकमित्यर्थः। ग्रहणस्नानस्यानन्यगतिकत्वञ्च मलिम्लुचे ग्रहणे सति तद्विहितस्य स्नानस्य शुद्धमासे कर्त्तुमशक्यत्वात् बोध्यम्। "वैश्वानरं द्वादशकपालं निर्व्वपेत् पुत्रे जाते" इति विहिताया-जातेष्टेः पुत्रजननानन्तरकाले प्राप्तत्वेपि जातेष्टि-जातकर्म्म स्तन्यपानानां क्रमेण विहितत्वात् तदानीं तत्करणे च कदाचित् बाल-विपत्ति-शङ्कापि स्यात्, अतस्तयाशङ्कायामशौचापगमेऽपि तदाचरणात् तस्याः सगतिकत्व-मिति भावः। तथा च अनन्यगतिकं नैमित्तिकं मलमासेऽपि कार्य्यं गत्य-न्तरयुतन्तु नेत्यर्थः।

(२) पूर्व्वाब्दे शुद्धचैत्रादौ मृतानां पराब्दे चैत्रादेर्म्मलमासत्वे मलमास एव प्रथमाब्दिकं स्यादित्यर्थः।

(३) मलमासचैत्रादौ मृतस्य प्रत्याब्दिकश्राद्धं पुनश्चैत्रादेर्मलमासत्वे मल-मास एव कर्त्तव्यं न तु शुद्धचैत्रे इत्यर्थः।

(४) सव्यवस्थं पक्षभेदमाह दैव इति।

(५) तृतीय-प्रकरण-प्रतिपाद्यार्थमाह तृतीयेत्वित्यादिना नोद्धृणा इह इत्यन्तेन ग्रन्थेन।

(६) कलाविशेषवाचिनः प्रतिपच्छब्दस्य तिथिविशेषे प्रवृत्तौ निमित्तन्तु प्राशस्त्यमेवोभयसाधारणमित्युन्नेयम्।

शुक्लपक्षे विशेषचन्द्रं कृष्णपक्षे विनिःसरेत् (१)।
(२)शुद्धा विद्धा तिथिः, शुद्धा हीना तिथ्याऽन्ययाऽहनि॥
उदये पूर्व्वया तिथ्या विध्यते त्रिमुहूर्त्तकैः।
सायं तूत्तरया तद्वत् न्यूनया तु न विध्यते॥
वेध्याऽपि त्रिमुहूर्त्तैव न न्यूना वेधमर्हति(३)।
शुद्धायां नास्ति सन्देहो दैवे पित्र्ये च कर्म्मणि(४)॥
उपवासस्त्वेकभक्तं नक्तं चायाचितं व्रतम्* (५)—
दानञ्च षड्विधं दैवं क्रमादत्र विविच्यते॥
एकोद्दिष्टं पार्व्वणञ्च पित्र्यं द्विविधमीर्य्यते।
शुक्लपक्षे दर्श-विद्धा कृष्णे विद्धा द्वितीयया—

* चायाचितव्रतम्,—इति सो॰ पुस्तके पाठः।

(१) चन्द्रादितिशेषः। अत्र प्रथमायाः कलायाः कर्त्तृत्वेनान्वयो बोध्यः।

(२) निर्णय-तिथि-परिचयार्थं तिथि-विभागमाह शुद्धेति। तिथिः प्रथमतो द्विविधा शुद्धा विद्धा च। तत्र सूर्य्योदयमारभ्य सूर्य्यास्तपर्य्यन्तकालरूपे अहनि अन्यया पूर्व्वया उत्तरया वा तिथ्या रहिता तिथिः शुद्धेत्यर्थः। "इदमपि तावन्मात्र-साध्ये कर्म्मणि। एतेन सूर्य्योदयमारभ्य द्वितीयसूर्य्योदय-पर्य्यन्ता सर्व्वत्र कर्म्मणि शुद्धेति कैमुतिकन्यायेन सूचितम्"—इति टीका।

(३) तद्वदिति त्रिमुहूर्त्तकैर्विध्यते इत्यर्थः। तथा च वेधिकायास्तिथे-र्द्वैविध्यात् विद्धाया द्वैविध्यमुन्नेयम्। उभयशेषमाह न न्यूनेति।

(४) तथा च विद्धाया एव निर्णेयत्वं न शुद्धाया इति फलितम्। "तत्रापि मन्वादि-युगादि-ग्रहण-वैधृति-व्यतीपातेषु तत्कालव्यापितैव"—इति टीका।

(५) उपवासोऽहोरात्राभोजन-सङ्कल्प-पालनरूपः, तदहोरात्रान्तर्द्वितीय-भोजनाभाव-विशिष्टं मध्याह्न-भोजनमेकभक्तं, तादृशमेव प्रदोष-भोजनं नक्तं, अयाचित-लब्धस्य तादृशमेव भोजनमयाचितं, व्रतं पूजादिरूपम्।

उपोष्या प्रतिपच्छुक्ले (१) मुख्या स्यादापराह्णिकी।
तदभावे तु सायाह्न-व्यापिनी* परिगृह्यताम्॥
प्रातः-सङ्गव-मध्याह्नापराह्णाः सायमित्यमी—
अत्राह्नः† पञ्चधा भागो मुख्योद्दिष्टयादिभागतः (२)॥
अभावेऽपि प्रतिपदः सङ्कल्पः प्रातरिष्यते।
तिथिस्त्रियामतोऽर्व्वाक् चेत्(३) तिथ्यन्ते पारणं भवेत्॥
यामत्रयोर्द्धगामिन्यां प्रातरेव हि पारणम् ‡।
वत्सोत्सवं च पूर्व्वेद्युरुपवासमत्रदाचरेत्॥
मुख्यतिथ्यन्तराये तु तिथि-शेषोऽपि गृह्यताम् (४)।
शुद्धाधिका तु कृष्णाऽपि पूर्व्वा संपूर्त्ति-सम्भवात्॥
गृहीतव्या त्वेकभक्ते मध्याह्न-व्यापिनी तिथिः।

---

* सायाह्ने व्यापिनी,—इति मु० पुस्तके पाठः।
† तत्राह्नः,—इति पाठान्तरम्।
‡ नास्तीदमर्द्धं सो० पुस्तके।

---

(१) "मतान्तरमाह शुक्ले इति। कृष्णे चेत्यपि बोध्यम। मुख्येतिसूचितानु-कल्पमाह तदभावे त्विति। अत्र, तुनास्यादित्यादिना चास्य स्वानभिमतत्वं सूचितम्"—इति टीका।

(२) द्विधा, त्रेधा, चतुर्धा, पञ्चधा, पञ्चदशधा,—इत्येते मतभेदेन पञ्चाह्नोवि-भागाः सन्ति, तत्र पञ्चधाभागोमुख्य इत्यर्थः। सर्व्वमेतदग्रे स्फुटी भविष्यति।

(३) समाप्यते इति शेषः।

(४) पूर्व्वविद्धैव तिथिर्मुख्या तद्विधानात्। पूर्व्वविद्धायामन्तराये विघ्न सति। विघ्नेन पूर्व्वविद्धायां विहितकर्म्माकरणे उत्तरविद्धायामपि तत्करण-मिति फलितार्थः।

परेद्युरेव तद्व्याप्तिः, पूर्व्वेद्युर्व्वा, दिनद्वये* ॥
नोभयत्रोभयत्रांशे साम्यं वैषम्यमित्यमी(१)—
षट् पक्षा(२)स्तेषु चैकैकव्याप्तौ सैवात्र गृह्यताम् ॥
दिनद्वयेऽपि तद्व्याप्त्यव्याप्तौ चैकदेशतः—
सम-व्याप्तौ च पूर्व्वैव वैषम्ये त्वधिकेष्यताम् (३)॥
अन्याङ्गस्यैकभक्तस्य कालस्त्वङ्ग्यनुसारतः † ।
उपवास-प्रतिनिधेस्तिथिः‡ स्यादुपवासवत् (४) ॥
प्रदोष-व्यापिनी नक्ते तिथिर्व्याप्तिर्दिनद्वये ।
अव्याप्तिर्वाऽप्यत्राऽंशेन व्याप्तिः स्यात् सर्व्वथोत्तरा (५) ॥
सौर-नक्ते तु सायाह्न-व्यापिनी(६) न प्रदोषगा ।

---

* परेद्युरेव पूर्व्वेद्युरेव व्याप्तिर्दिनद्वये,—इति सो० पुस्तके पाठः ।
† कालस्तदनुसारतः—इति पाठान्तरम् ।
‡ उपवासप्रतिनिधेः स्थितिः,—इति मु० पुस्तके पाठः ।

---

(१) पूर्व्वेद्युरेव मध्याह्न-व्याप्तिरित्येकः पक्षः । उत्तरेद्युरेव तथेत्यपरः दिनद्वयेऽपि मध्याह्न-व्याप्तिरित्यन्यः । नैकस्मिन्नपि दिने मध्याह्न-व्याप्तिरित्यपरः कस्मिन्नपि दिने न सम्पूर्ण-मध्याह्न-व्याप्तिः किन्तूभयत्रैवांशतस्तद्व्याप्तिरित्यन्य पक्षः । अयञ्च पक्षोऽंशस्य साम्य वैषम्याभ्यां द्विधा भिद्यते,—इत्यमी षट् पक्षाः
(२) तत्र व्यवस्था माह तेषु चेति ।
(३) अव्याप्तौ चेति च्छेदः । एकदेशतः समव्याप्तौ चेत्यन्वयः ।
(४) तथा चैकभक्तत्रयं सिद्धं प्रधानमन्याङ्गमुपवास-प्रतिनिधि-रूपञ्चेति
(५) पूर्व्ववदत्रापि षट् पक्षा । तत्र पूर्व्वेद्युरेव परेद्युरेव वा व्याप्तौ संशयाभावात् अवशिष्टपक्षेष्वेकमेव निर्णयमाह व्याप्तिरित्यादिना । अंशे व्याप्तिर्द्विविधा साम्येन वैषम्येण चेत्यर्थः ।
(६) मुख्येतिशेषः । प्रदोष-व्याप्तिस्तु तत्रानुकल्प इति भावः ।

अयाचिते तु तिथयः स्वीकार्य्या उपवासवत्॥

सोदयत्रिमुहूर्त्तायां(१) कुर्य्याद्दानं व्रतानि च।

(२) उभयत्र तथात्वे तु* पूर्व्वेद्युस्तदनुष्ठितिः॥

परत्रैव तथात्वं चेत्; पूर्व्वा ग्राह्या तिथि-क्षये।

तिथेः साम्ये च वृद्धौ च गृह्यतां तिथिरुत्तरा (३)॥

अस्पर्शे चैकदेशस्य व्याप्तौ पूर्व्वैव गृह्यताम् (४)।

एकोद्दिष्टे तु मध्याह्न-युक्ता स्यादेकभक्तवत्॥

एकदेश-सम-व्याप्तौ क्षये पूर्व्वाऽन्यथोत्तरा (५)।

(६) कुतपाद्यपराह्णान्ता† व्याप्तिराब्दिक उत्तमा॥

---

* उभयत्र तु साम्ये तु,—इति सा० पुस्तके पाठः।

† कुतपाद्यपराह्णान्तं, इति सा० पुस्तके पाठः।

---

(१) उदयेन सहितास्त्रयोमुहूर्त्ता यस्यामिति विग्रहः।

(२) अत्रापि पूर्व्ववत् षट् पक्षाः। तत्र पूर्व्वेद्युरेव तथात्वे संशयाभावात् अवशिष्टपक्षेषु क्रमेण निर्णयमाह उभयत्रेति।

(३) यदा तु पूर्व्वेद्युः सोदय-त्रिमुहूर्त्तमस्पृष्ट्वा परेद्युरेव सोदय-त्रिमुहूर्त्तं व्याप्नोति, तदा ग्राह्य-तिथेर्वृद्धि-क्षय-साम्यानुरोधेन निर्णयः। तत्र ग्राह्य-तिथेः क्षये पूर्व्वा, साम्ये वृद्धौ चोत्तरेति वर्त्तुलार्थः।

(४) दिनद्वये सोदय-त्रिमुहूर्त्त-स्पर्शाभावे साम्य-वैषम्याभ्यामेकदेश-व्याप्तौ चोत्तरेत्यर्थः।

(५) अत्रापि पूर्व्ववत् षट् पक्षाः। तत्रैकदेशे समव्याप्तौ ग्राह्या तिथेर्वृद्धि-साम्य-क्षयैर्निर्णयः, अवशिष्ट-पक्षेष्वेकभक्तवत् निर्णय इत्यर्थः।

(६) पार्व्वणे तन्निर्णयमाह कुतपाद्येति टीका। प्रत्याब्दिक-प्रकरणोऽयं ग्रन्थ इत्यन्ये। अह्नोऽष्टमो मुहूर्त्तः कुतपः। तस्य द्वादश-मुहूर्त्तेनापराह्ण-समाप्तिः। तथा च, कुतपादि-मुहूर्त्त-पञ्चक व्यापिनी मुख्येत्यर्थः।

तदभावेऽपराह्णस्य व्यापिका गृह्यतां तिथिः ।
(१) क्षये पूर्व्वोत्तरा वृद्धौ व्याप्तिश्चेदपराह्णयोः ॥
न ग्राह्य-तिथि-गौ* वृद्धि-क्षयावूर्द्ध-तिथेस्तु तौ ।
साम्ये तूर्द्ध-तिथेर्ग्राह्या† पर-विद्धैव वृद्धिवत् ॥
(२) न स्पृशेदपराह्णौ चेत्‡ पूर्व्वा स्यात्, कुतपोऽन्यथा ।
वैषम्येणैकदेशस्य व्याप्तौ ग्राह्या महत्त्वतः ॥
(३) साम्येन चेत्; क्षये पूर्व्वा, परा स्याद्वृद्धि-साम्ययोः ।
वृद्धि-साम्य-क्षया ग्राह्य§ तिथिगा नोर्द्धगा इह ॥

---

(४) द्वितीयाद्यास्तु पर्वान्तास्तर्य्य-प्रकरणोदिताः ।

---

* न ग्राह्यतिथिजौ,—इति मु० पुस्तके, न ग्राह्या तिथिगौ,—इति सो० पुस्तके पाठः ।

† साम्यात्तूर्द्धतिथेर्ग्राह्या,—इति मु० पुस्तके पाठः ।

‡ न स्पृशत्यपराह्णौ चेत्,—इति सो० पुस्तके पाठः ।

§ ग्राह्या—इति सो० पुस्तके पाठः ।

---

(१) अत्रापि पूर्व्ववत् षट् पक्षाः । पूर्व्वेद्युरेव परेद्युरेव वा तद्व्याप्तौ संशयाभावः । उभयत्रापराह्ण-व्याप्तौ क्षय-वृद्धिभ्यां निर्णयः । उभयदिने कृत्स्नापराह्ण-व्याप्तौ अभिमतायास्तिथेर्वृद्धि-नियमेन ग्राह्य-तिथि-क्षयासम्भवादाह न ग्राह्यतिथिगाविति ।

(२) दिनद्वयेऽपराह्णस्पर्शाभावे निर्णयमाह न स्पृशेदिति । परदिने कुतपसत्त्वादाह परेद्युः कुतपोऽन्यथा, न नियमक इत्यर्थः । महत्त्वत आधिक्येन ।

(३) साम्येनैकदेश-प्राप्तौ निर्णयमाह साम्येन चेदिति । पूर्व्ववदत्रोत्तरतिथेर्वृद्ध्यादिकं न नियामकं किन्तु ग्राह्यतिथेरेवेत्याह वृद्धिसाम्येत्यादिना ।

(४) चतुर्थ-प्रकरण-प्रतिपाद्यार्थमाह द्वितीयाद्यास्तु इत्यादिना, पर्व्वण्येवेति निर्णयः इत्यन्तेन ग्रन्थेन । सामान्यात् समानत्वात् । तिथिषु द्वितीयाद्यासु । तयोर्निर्णयः ।

सञ्चारणीयः सामान्यात् तिथिषु प्रतिपन्नयः ॥
क्वचित् क्वचित् विशेषोऽस्ति सोऽयमत्राभिधीयते ।
पूर्वेद्युरसती प्रातः परेद्युस्त्रि-मुहूर्त्त-गा ;—
सा द्वितीया परोपोष्या पूर्व-विद्धा ततोऽपरा * (१) ।
रक्षा-तृतीया पूर्वास्यादुत्तरा स्याद् व्रतान्तरे ॥
परेद्युर्नास्ति चेत्† पूर्व-विद्धाप्यस्तु व्रतान्तरे ।
मुहूर्त्तमात्र-सत्त्वेऽपि दिने गौरी-व्रतं परे‡ ।
शुद्धाधिकायामप्येवं गण-योग-प्रशंसनात् (२) ॥

---

* ततोऽन्यथा—इति पाठान्तरम् ।
† परेह्नि नास्ति चेत्,—इति मु० पुस्तके पाठः ।
‡ 'परेद्युर्नास्ति चेत्'—इत्यादिः 'गौरीव्रतं परे'—इत्यन्तोग्रन्थः सो० पुस्तके नास्ति ।

---

(१) प्रातः मुहूर्त्तत्रयात्मके । अपरा भिन्ना ; पूर्व्वेद्युस्त्रिमुहूर्त्त-व्यापिनी परेद्युस्तद्व्यापिनी सर्व्वथाऽसती वेत्यर्थः । अयमर्थ, यद्यपि द्वितीया कृष्णा पूर्व्वा, शुक्ला परा,—इति सामान्यतो निर्णयस्तथापि पूर्व्वेद्युः त्रिमुहूर्त्त-व्यापित्वएव कृष्णा पूर्व्वा, नोचेत् परैव, यदि परदिनेऽपि त्रिमुहूर्त्त-न्यूना नास्त्येव वा तदापि पूर्व्वैव । एवं परदिने त्रिमुहूर्त्तव्यापित्वएव शुक्ला परा, यदि परदिने ततोन्यूना नास्त्येव वा, तदा सापि पूर्व्वैवेति ।

(२) परे दिने,—इत्यन्वयः । 'मुहूर्त्तमात्रेति पूर्व्वविद्धा-विषयम्' इति टीका । परदिने मुहूर्त्तमात्र-सत्त्वेपीत्यन्ये । ते तु वदन्ति, मुहूर्त्तमात्रेति मतान्तरं न तु ग्रन्थकर्त्तुर्मतं तन्मते त्रिमुहूर्त्तादरएवेति । सर्व्वमिदं टीकायां विस्तरेणोक्तं तत्रैव द्रष्टव्यम् । 'शुद्धाधिकायामिति तु पूर्व्वदिने घटिकात्रयोत्तरं प्रवृत्त-विषयं तदा तस्याः खण्डात्वेऽपि द्विविध-विद्धात्वा-भावेन पूर्णावत् शुद्धत्वात्'—इति टीका । गणो गणपतिस्तत्तिथिः चतुर्थी ।

चतुर्थी तु परोपोष्या(१) गणनाथ-व्रतस्य तु—

मध्याह्न-व्यापिनी पूज्या तद्वन्नाग-चतुर्थ्यपि ॥

(२) परेद्युरेव मध्याह्न-व्याप्तौ विघ्नस्य सोत्तरा।

अन्यथा पूर्व्व-विद्धैव मातृ-योग-प्रशस्तितः ॥

(३) पूर्व्वेद्युरेव तद्व्याप्तौ पूर्व्वा सर्प-प्रिया तिथिः।

नोचेत्, सर्पस्य पञ्चम्या योगोऽत्यन्तं प्रशस्यते ॥

(४) गौर्य्याः शुद्ध-जयाऽप्यस्तु नाग-विद्धा निषिध्यते।

सर्व्वत्र पञ्चमी पूर्व्वा ग्राह्या स्कन्द-व्रते परा(५) ॥

नाग-विद्धा स्कन्द-षष्ठी सा निषिद्धा व्रतान्तरे।

उत्तरस्या अलाभे तु नाग-विद्धैव* गृह्यताम् ॥

---

* नागविद्धापि, —इति सो० पुस्तके पाठः।

---

(१) उपोष्येति वैदिककर्म्ममात्रोपलक्षणम्। अयञ्च निर्णयो गणेश-नाग-गौरी-व्रतोपवास-पूजाऽन्य-विषयः।

(२) गणेशव्रते विशेषमाह परेद्युरेवेति। विघ्नो विघ्नेशः गणेश इत्यर्थः। अन्यथा अन्येषु चतुर्षु पक्षेषु। अत्रापि पूर्व्ववत् षट पक्षा द्रष्टव्याः। माता मातृ-देवताका तृतीया। मध्याह्न-व्याप्तिश्चात्र संपूर्ण-मध्याह्न-व्याप्तिरेकदेश-व्याप्ति-पक्षेऽधिक-व्याप्तिश्चेति द्विविधा वोद्धव्या।

(३) नागव्रते विशेषमाह पूर्व्वेद्युरेवेति। तद्व्याप्तौ प्रागवत् द्विधा मध्याह्न-व्याप्तौ। नोचेदिति अन्येषु चतुर्षु पक्षेष्वित्यर्थः। अत्रापि पूर्व्ववत् षट् पक्षाः। सर्पस्य सर्पदैवतचतुर्थ्याः।

(४) गौरीव्रते विशेषमाह गौर्य्या इति। व्रते इति शेषः। शुद्धजयेति बहुव्रीहिः, तृतीया-युतेत्यर्थः। तत्र हेतुः नागविद्धेति। यत इत्यादिः।

(५) परेति सापि त्रिमुहूर्त्त-चतुर्थी-वेधे परदिने त्रिमुहूर्त्त सत्त्वे, अन्यथा तु पूर्व्वैवेति हेमाद्रिः। उपवासे पूर्व्वा तदन्यकर्म्मसु परेत्यपि पक्षान्तरं सएवाह। सर्व्वा कृष्णा पूर्व्वा शुक्ला परेति गौड़ाः।

विना द्वादश-नाडीभिर्नाग-वेधो न दोषकृत् (१)।
सप्तमी पूर्व्व-विद्धैव व्रतेषु निखिलेष्वपि॥
अलाभे* पूर्व्व-विद्धायाः परविद्धैव† गृह्यताम्।
व्रतमात्रेऽष्टमी कृष्णा पूर्वा, शुक्लाऽष्टमी परा॥
दूर्व्वाष्टमी तु शुक्लाऽपि पूर्व्व-विद्धा विधीयते।
पक्ष-द्वयेऽप्युत्तरैव शिव-शक्ति-महोत्सवे (२)॥
ज्येष्ठर्क्ष-योगे पूर्वाऽपि‡ ग्राह्या ज्येष्ठा-व्रते तिथिः।
मध्याह्नादूर्द्ध्वमृक्षं चेत् परेद्युः सा प्रशस्यते॥
ज्येष्ठर्क्ष-भानुवाराभ्यां युक्ताष्टम्यतिदुर्लभा§ (३)।
जयन्त्याख्यं व्रतं भिन्नं कृष्ण-जन्माष्टमी-व्रतात्॥
शुद्धा च सप्तमी-विद्धेत्येवं जन्माष्टमी द्विधा।

---

* अभावे,—इति टीका सम्मतः पाठः।
† परविद्धापि,—इति सो० पुस्तके पाठः।
‡ पूर्व्वैव,—इति भट्टाचार्य्यधृतपाठः।
§ योगोऽष्टम्याः सुदुर्लभः,—इति सो० पुस्तके पाठः।

---

(१) षण्मुहूर्त-पञ्चमी-विद्धाया एव त्याज्यत्वं न त्रिमुहूर्त्त-विद्धायाः,—इति भावः। अयञ्च षण्मुहूर्त्त-पञ्चमी-विद्ध-निषेधोनक्तैकभक्तादि व्यतिरिक्त-विषयः,—इति हेमाद्रिः। तदपि पूर्व्वदिनएव मध्याह्नादि-व्याप्ता द्रष्टव्यमिति टीका।
(२) मिलित-शिव-शक्ति-दैवत्य-व्रते नवगौर्य्यादावित्यर्थः।
(३) परेद्युरेव ऋक्षयोगे परैव, पूर्व्वेद्युरेव तद्योगे पूर्व्वा। स च ऋक्ष-योगो यदि परदिने मध्याह्नादूर्द्धमप्यनुवर्त्तते, तदा परैव। यदा भानुवार-योगोभवति, तदा ऋक्षभानुवारयोगेनैव निर्णय इति भावः।

सप्तमी चेत् निशीथात् प्राक् विद्धा, शुद्धाऽन्यथा भवेत् (१) ॥
शुद्धायां नास्ति सन्देहोविद्धा च त्रिविधेष्यते ;—
निशीथ-योगः पूर्व्वेद्युः परेद्युर्वा द्वयोरुत * (२) ॥
पूर्व्वैव प्रथमे पक्षे परैवोत्तर-पक्षयोः ।
अष्टमी रोहिणी-युक्ता जयन्ती, सा चतुर्विधा ;—
शुद्धा शुद्धाधिकेत्येवं विद्धा विद्धाधिकेति च (३) ।
(४) शुद्धायामपि विद्धायां न सम्भाव्योत्तरा तिथिः ॥
(५) शुद्धाधिकायां † योगश्चेदेकस्मिन् ‡ वा दिनद्वये ।

---

* परेद्युर्व्वोभयोरुत,—इति मु० पुस्तके पाठः ।
† शुद्धाधिकाया,—इति सो० पुस्तके पाठः ।
‡ योगः स्यादेकस्मिन्,—इति पाठान्तरम् ।

---

(१) यद्यप्यन्यत्र दिवा वेध उक्तः, तथापि जन्माष्टम्यां रात्रि-वेधोऽपि । स च रात्रि-वेधस्तदा सम्पद्यते, यदि सूर्य्यास्तोत्तरं निशीथादर्व्वाक् कियत्यपि सप्तमी स्यात्, नोचेदष्टमी शुद्धैव भवतीति भावः ।

(२) उतेति निपातो वा-शब्दार्थे द्रष्टव्यः । पूर्व्वेद्युः परेद्युरित्युभयत्रावधारणं बोध्यम् ।

(३) या पूर्व्व-दिने सप्तमी-योगमप्राप्ता सती तत्रैव परिसमाप्यते, साऽष्टमी शुद्धा । यातु पूर्व्वदिने सम्पूर्णा सती परदिनेऽपीषन्निःसरति सा शुद्धाधिका । या पुनः सप्तमी-युक्तापि पूर्व्वदिन एव परिसमाप्यते, सा विद्धा । या तु पूर्व्वदिने सप्तमीविद्धा सती परदिनेऽपि निःसरति, सा विद्धाधिकेति विवेकः ।

(४) अत्र शुद्धायां विद्धायाञ्चोत्तरतिथेः सम्भावनैव नास्तीत्याह शुद्धायामिति ।

(५) द्वितीयपक्षस्य सनिर्णयमवान्तरभेदमाह शुद्धाधिकायामिति । योगो रोहिण्यायोगः । एकयोगे, एकस्य दिनस्य रोहिणी-योगे । द्वियोगे द्वयोर्दिनयो रोहिणी-योगे ।

नैक-योगेऽस्ति सन्देहो द्वि-योगे प्रथमं दिनम्॥
सदा निशीथे पश्चादित्युत्तमोमध्यमोऽधमः।
योगस्त्रिधाऽपि पूर्वेद्युः संपूर्णत्वादुपोषणम् (१)॥
(२) विद्धाधिकायामप्येक-दिन-योगे* स गृह्यताम्।
द्वयोर्योगस्त्रिधा भिन्नो निशीथे वृत्ति-भेदतः॥
(३) तद्वृत्तिर्दिनएकस्मिन् उभयोर्नोभयोरिति।
एकस्मिंश्चेत् तद्दिनं स्यात् पक्षयोरन्ययोः परम् †॥
(४) बुधे सोमे जयन्ती चेत् वारे साऽतिफलप्रदा ‡।
तिथ्यृक्षयोर्द्वयोरन्तउत्तमं पारणं भवेत्॥

---

* दिने योगे,—इति मु॰ पुस्तके पाठः।

† परा,—इति मु॰ पुस्तके पाठः।

‡ सति फलप्रदा,—मु॰ पुस्तके पाठः।

---

(१) शुद्धाधिकायां सदा अहोरात्रे, अर्थात् पूर्व्वदिने सूर्य्योदयमारभ्य प्रवृत्तो नक्षत्रयोगः परेद्युरुदयपर्य्यन्तमनुवर्त्तमान उत्तमः। निशीथे अर्द्धरात्रे, निशीथमारभ्य प्रवृत्तो मध्यमः। पश्चान्निशीथादूर्द्धं प्रवृत्तोऽधमः। एते त्रयोऽपि पक्षाः फल-तारतम्यायैवोपयुज्यन्ते। उपवासस्तु सर्व्वत्र पूर्व्वदिनएवेत्यर्थः।

(२) चतुर्थपक्षस्यावान्तरभेदं सनिर्णयमाह विद्धाधिकायामिति। स एकदिनयोगः।

(३) निशीथे वृत्तिभेदतः,—इत्येतद्व्याचष्टे तद्वृत्तिरित्यादिना। एकस्मिन् दिने पूर्व्वत्रैव परत्रैव वा दिने, तद्वृत्तिरर्द्धरात्रे रोहिणीयोगः। परं परदिनम्।

(४) वार-विशेष-योगस्तु फलाधिक्याय न तु निर्णयायेत्याह बुधे इति। बुधे सोमे वारे इत्यन्वयः।

एकस्यान्ते मध्यमं स्यादुत्सवान्तेऽधमं स्मृतम् (१)।
यस्मिन् वर्षे जयन्त्याख्यो योगो* जन्माष्टमी तदा॥
अन्तर्भूता जयन्त्यां स्यादृत्त-योग-प्रशस्तितः(२)।
नवमी पूर्व-विद्धैव पक्षयोरुभयोरपि॥
मध्याह्ने रामनवमी पुनर्वसु-समन्विता (३),—
ग्राह्या, नैवाष्टमी-युक्ता सनक्षत्राऽपि वैष्णवैः॥
कृष्णा पूर्वोत्तरा शुक्ला दशम्येवं व्यवस्थिता।
जयन्ती-व्रतवन्नित्यं काम्यं चैकादशी-व्रतम्॥
अरुणोदय-वेधोऽत्र वेधः सूर्य्योदये तथा (४)।
उक्तौ द्वौ दशमी-वेधौ वैष्णव-स्मार्त्तयोः क्रमात्॥

---

* जयन्त्याख्ययोगे,—इति से० पुस्तके पाठः।

---

(१) पूजोपवासजागरणरूप उत्सवः। तदन्ते तत्समाप्तौ द्वितीयदिने प्रातः-काले इत्यर्थः।

(२) यदाप्युक्तनिर्णयानुसारेण जन्माष्टमी पूर्व्वदिने जयन्ती परदिने, तदा पूर्व्व-निर्णयमुपेक्ष्यालभ्य-योग-वशात् परदिनएव तदनुष्ठानमिति टीका। रोहिण्यष्टम्योर्योगाभावे तु जन्माष्टमीव्रतमेवानुष्ठेयमिति बोध्यम्।

(३) मध्याह्नोऽत्र पञ्चधा विभागेन। त्रिधा विभागेनेति केचित्। अष्टम मुहूर्त्तएवात्र मध्याह्नः कृष्णाष्टम्यां मध्यरात्रवदित्यपरे। तथा च रामनवमी मध्याह्न-व्यापिनी ग्राह्या, दिनद्वये मध्याह्न-व्याप्तौ तदव्याप्तौ तदेक-देश-व्याप्तौ वा पुनर्व्वसु-युता, दिन-द्वये पुनर्व्वसु-योगे मध्याह्ने तद्योगवती, दिन-द्वयेपि मध्याह्ने तद्योगे मध्याह्नं विहाय तद्योगे वा सर्व्वथाऽयोगे वा उत्तरे-वेति टीका-सम्मता व्यवस्था।

(४) उदयात् प्राक् चतस्रो नाड़िका अरुणोदयः। तत्र दशमी-प्रवेशेऽरुणो-दय-वेधः, सूर्य्योदये तत्प्रवेशे सूर्य्योदयवेध इति विवेकः।

कला-काष्ठादि-वेधोऽपि ग्राह्योऽत्र त्रिमुहूर्त्तवत् ।
वैखानसाद्यागमोक्त-दीक्षां प्राप्तोहि वैष्णवः (१) ॥
विद्धा त्याज्या वैष्णवेन शुद्धाऽप्याधिक्य-सम्भवे (२) ।
(३) एकादशी द्वादशी वाऽधिका चेत् त्यज्यतां दिनम्—
पूर्वं, ग्राह्यं तूत्तरं स्यादेष वैष्णव-निर्णयः ॥
एकादशी द्वादशीचेत्युभयं वर्धते यदा ।
तदा पूर्व्व-दिनं त्याज्यं स्मार्त्तैर्ग्राह्यं परं दिनम् ॥
(४)एकादशीमात्र-वृद्धौ गृहि-यत्यो र्व्यवस्थितिः;—
उपोष्या गृहिभिः पूर्व्वा यतिभिस्तूत्तरा तिथिः ॥
द्वादशीमात्र-वृद्धौ तु शुद्धा-विद्धे व्यवस्थिते ;—
शुद्धा पूर्वोत्तरा विद्धा स्मार्त-निर्णय ईदृशः ॥
(५)श्रवणेन युता चेत्स्याद्द्वादशी सा हि वैष्णवैः ;—
स्मार्त्तैश्चोपोषणीया स्यात्त्यजेदेकादशीं तदा ॥

---

(१) आदिना नारद-पञ्चरात्रादि। हिः प्रसिद्धौ। तेनाप्रसिद्ध-वैष्णवोऽपि भागवताख्यः सूचितः। यद्यपि स स्मार्त्त एव, तथापि तेनारुणोदय विद्धाऽपि सर्व्वथा त्याज्येति सूचन-फलम् इति टीका।

(२) अत्रापि 'त्याज्या,'—इत्यनुषङ्गः।

(३) आधिक्यं विधेत्याह एकादशीति। अत्रैकादशी द्वादशीति द्वयं सावधारणं तन्मात्रमधिकमित्यर्थः। वा शब्देनोभयाधिक्य-संग्रहः। आधिक्यञ्चात्र द्वितीयदिने निःसरणमात्रं बोध्यम्। पूर्वमिति पूर्व्वत्रान्वयि।

(४) स्मार्त्तं प्रति निर्णयमाह, 'एकादशी' इत्यादिना, 'स्मार्त्तनिर्णय ईदृशः'—इत्यन्तेन। व्यवस्थितिश्चोत्तरार्द्धेन स्पष्टीकृता। एवं परत्र।

(५) यथोक्त निर्णयस्यापवादमाह श्रवणेनेति। यदा द्वादश्यामेव श्रवणा-नक्षत्रं, तदा शुद्धैकादशीमपि त्यक्त्वा द्वादश्यामेवोपवासेदित्यर्थः।

उपवास-व्रतादन्य-व्रते सार्द्ध-मुहूर्त्तकैः ।
सप्तभिर्दशमी-विद्धामेतामेकादशीं त्यजेत् ।
(१)द्वादशी पूर्व-विद्धैव व्रतेषु निखिलेष्वपि ॥
(२)शुक्ल-त्रयोदशी पूर्वा परा कृष्णा त्रयोदशी* ।
अलाभे साऽपि पूर्वैव, पराऽनङ्ग-त्रयोदशी† ॥
या शुक्ला गृह्यते पूर्वा, गृह्यतां साऽऽपराह्णिकी(३) ।
(४)चतुर्दश्युत्तरा शुक्ला पूर्वा कृष्णा चतुर्दशी ॥
उदये द्विमुहूर्त्ताऽपि‡ ग्राह्याऽनन्त-व्रते तिथिः ॥
(५)शुक्लाऽपि रात्रि-युक्ता स्याच्चैत्र-श्रावण-मासयोः ।
(६)शुक्ला सर्वाऽपि पूर्वैव यदिस्यादापराह्णिकी ॥

---

* कृष्णात्रयोदशी,—इति का० पुस्तके पाठः ।
† पूर्व्वाऽनङ्गत्रयोदशी, इति मु० सो० पुस्तकयोः पाठः ।
‡ त्रिमुहूर्त्तापि, इति मु० का० पुस्तकयोः पाठः ।

---

(१) द्वादश्यां निर्णयमाह द्वादशीति ।

(२) त्रयोदश्यां निर्णयमाह शुक्लेति । परदिने त्रिमुहूर्त्तालाभे कृष्णा-त्रयोदश्यपि पूर्व्वैव सर्व्वकर्म्मसु ग्राह्या । परेति "मार्गशीर्षशुक्लत्रयोदशी परविद्धैवेत्यर्थः । पूर्व्वानङ्गेत्यपाठः"—इति टीका ।

(३) या शुक्ला त्रयोदशी पूर्व्वा ग्राह्यत्वेनोक्ता, सा न सायाह्नमात्रव्यापिनी । किन्त्वापराह्णिकीत्यर्थः ।

(४) चतुर्दश्यां निर्णयमाह चतुर्दशीति । "उपवासभिन्नविषयमिदम्"—इति टीका । विशेषमाह उदये इति । द्विमुहूर्त्तापीत्यपिना त्रिमुहूर्त्तादि परिग्रहः । "त्रिमुहूर्त्तापीत्यपपाठः"—इति टीका ।

(५) दमनक-पवित्रारोहणयोर्निर्णयमाह शुक्लापीति । पूर्व्वैवेत्यर्थः ।

(६) सदुदयव्योपवासे निर्णयमाह शुक्ला सर्व्वापीति । अपिर्भिन्नक्रमे, सर्व्वा शुक्लापीत्यर्थः । अपिना कृष्णापरिग्रहः । 'यदिस्यात्'—इत्यनेनापराह्णेऽलाभे पराऽपीति सूचितम् ।

(१)प्रदोषे वा निशीथे वा द्वयोर्वा याऽस्ति सा भवेत्;—
शिवरात्रि-व्रते, तत्र द्वयोः सत्ता प्रशस्यते॥
तदभावे निशीथैक-व्याप्ताऽपि परिगृह्यताम्* ।
तस्याश्चासम्भवे ग्राह्या प्रदोष-व्यापिनीतिथिः॥
तिथ्यन्ते पारणं याम-त्रयादर्वाक् समापने (२)।
अन्यथा पारणं प्रातरन्य-तिथ्युपवासवत्॥
(३)पूर्व-विद्धैव सावित्री-व्रते पञ्चदशी तिथिः।
नाड्योऽष्टादश भूतस्य स्युश्चेन्नत्र† परेऽहनि॥
व्रतान्तराणि सर्वाणि परेऽहन्येव सर्वदा(४)।
श्राद्धेऽपराह्ण-कालीनोदर्श आब्दिकवन्मतः॥

---

* तदभावे निशीथैव व्यापिनी गृह्यतां तिथिः,— इति पाठान्तरम्।
† स्युश्चेत्तत्र— इति भु० का० पुस्तकयोः पाठः।

---

(१) शिवरात्रौ निर्णयमाह प्रदोषेवेति। सा शिवरात्रिव्रते भवेदित्यन्वयः। प्रदोषेवेत्यादि विकल्पत्रयस्य व्यवस्थितत्वं दर्शयति तत्रेत्यादिना।

(२) यामत्रयादर्व्वाक् चतुर्दश्याः समापने सति इति शेषः।

(३) पञ्चदश्यां निर्णयमाह पूर्व्वविद्धैवेति। पञ्चदशी चात्र शुक्ला कृष्णा च। चेदिति पूर्व्वत्रान्वयि। यद्यपि पूर्व्वदिने चतुर्दश्या अष्टादश नाड्यः सन्ति तथापि पूर्व्वविद्धैवेत्यर्थः। एवकार-व्यवच्छेद्यमाह न परेऽहनीति। पाठान्तरे तु तत्र पूर्व्वदिने भूतस्याष्टादशनाड्यः सन्ति चेत्, तदा परेऽहनि व्रतं नातश्च पूर्व्वविद्धा ग्राह्येत्यर्थः साहजिकः। टीकाकारास्तु, "तत्र परेऽहनीति पाठेऽपि तस्मिन् परे उत्कृष्टे पूर्व्वरूपेऽहनि, तस्य ताः स्युर्यद्यपि"— इति कष्टकल्पनया व्याख्यातम्।

(४) सर्व्वाणि उपवासादीनि। सर्व्वदा तादृशवेधे सति असति च।

दिन-द्वयेऽप्येक-देशे वृत्तौ* ग्राह्यो महत्त्वतः ।
तुल्यत्वं चेदेक-देशे क्षये पूर्वोऽन्यथोत्तरः(१) ॥
कृत्स्न-व्याप्तौ द्वयोरक्ष्णो रुत्तरस्तिथि-वृद्धितः(२) ।
(३)साग्न्यनग्नि-व्यवस्था-स्यान्न स्याच्चेदपराह्णयोः† ॥
पूर्वेद्युः साग्निकः कुर्य्यादुत्तरेद्युरनग्निकः‡ ।
(४)पर्व-प्रतिपदोः सन्धिर्मध्याह्ने वा ततः पुरा ॥
अन्वाधानं पूर्व-दिने यागः सन्धि-दिने भवेत् ।
ऊर्द्ध्वं मध्याह्नतः सन्धावन्वाधानन्तु§ तद्दिने ॥
इष्टिं पर-दिने कुर्य्यादन्योवाजसनेयिनः ।
यस्तु वाजसनेयी स्यात् तस्य सन्धि-दिनात्पुरा ॥
न क्वाप्यन्वाहितिः|| किन्तु सदा सन्धि-दिने हि सा¶ ।

---

* दिनद्वयेप्येकदेशवृत्तौ,—इति का० पुस्तके पाठः ।
† नचेत् स्यादपराह्णयोः,—इति का० पुस्तके पाठः ।
‡ निरग्निकः—इति का० पुस्तके पाठः ।
§ वन्वाधानं हि,—इति सो० पुस्तके पाठः ।
|| काप्यन्वाहितिः,—इति भु० पुस्तके पाठः ।
¶ सन्धिदिने तु सा,—इति पाठान्तरम् ।

---

(१) अन्यथा इत्यस्य वृद्धिसाम्ययोरित्यर्थः । अत्र क्षयादिक ग्राह्यतिथे-रेव बोध्यम् ।

(२) अत्र साम्यक्षययोरसम्भवात् तिथिवृद्धित इत्युक्तम् ।

(३) अपराह्णद्वयास्पर्शे आह्विकादिविशेषमाह साग्न्यनग्नीति । सैवाधि कारिभेदेन व्यवस्था परार्द्धेन स्पष्टीकृता ।

(४) इष्टौ पर्व्वनिर्णयमाह पर्व्वेत्यादिना निर्णय इत्यन्तेन ग्रन्थेन ।

(१)सन्धिश्चेत् सङ्गवादूर्ध्वं प्राक् पर्य्यावर्तनाद्रवेः* ॥
सा पौर्णमासी विज्ञेया सद्यस्काल-विधौ† तिथिः ।
(२)वृद्धिः प्रतिपदो याऽस्ति तदर्द्धं पर्वणि क्षिपेत्॥
क्षयस्यार्द्धं तथा हित्वा‡ सन्धिर्निर्णीयतां सदा ।
(३)बौधायन-मते दर्श-श्राद्धं चेष्टिर्विधिष्यते ॥
(४)द्वितीया त्रिमुहूर्त्ता चेत् प्रतिपद्यापराह्णिकी§ ।

---

* प्राक् चेदावर्त्तनाद्रवेः,—इति का० से० पुस्तकयोः पाठः ।
† सद्यः कालविधौ,—इति मु० पुस्तके पाठः ।
‡ क्षिप्त्वा,—इति से० पुस्तके पाठः
§ प्रतिपच्चापराह्णिकी,—इति का० मु० पुस्तकयोः पाठः ।

---

(१) पूर्णिमायां विशेषमाह सन्धिश्चेदिति । सङ्गवः पञ्चधा विभक्तदिनस्य द्वितीयोभागः । पर्य्यावर्त्तनमह्नोऽष्टममुहूर्त्तः ।

(२) प्रसिद्धसन्धिनिरासाय विशेषमाह वृद्धिरिति । यदा घटिकान्यूने मध्याह्ने पर्व्वसमाप्तिः परेद्युश्च घटिका-चतुष्टय-वृद्धि-वशात् मध्याह्नादूर्द्धं घटिकात्रयं प्रतिपदनुवृत्तिः, तदा घटिका-चतुष्टय-वृद्धेरर्द्धस्य घटिकाद्वयस्य पर्व्वणि प्रक्षेपे पूर्व्वेद्युर्मध्याह्नादूर्द्धमपि घटिकामात्रं पर्व्वानुवृत्तिर्लभ्यते । ततश्च तत्र सन्धिदिनेऽन्वाधानं परेद्युरिष्टिरिति फलितम् । इष्य पर्व्वसमाप्त्यनुसारेण सन्धिनिर्णये तु तत्र सन्धिदिने इष्टिः तत्पर्व्व-दिनेऽन्वाधानमिति प्राप्नोति। एवं यत्र पूर्व्वदिने मध्याह्नात्परतो घटिकामात्रं पर्व्वानुवृत्तिः परदिने च घटिकाचतुष्टयं प्रतिपदुपक्षयः, तत्र क्षयार्द्धस्य घटिकाद्वयस्य पर्व्वणि प्रक्षेपे मध्याह्नात् पूर्व्वघटिकातः सन्धिर्भवति । तत्र स्वाभाविकसन्ध्यनुसारेण सन्धिदिनेऽन्वाधानं परदिनेचेष्टिः प्राप्नोति, क्षयप्रक्षेपे तु सन्धिदिने इष्टिः पूर्व्वदिने अन्वाधानमिति विशेषः।

(३) आश्वलायनमतेन निर्णीय बौधायनमतेन निर्णयमाह बौधायनेति । चोभिन्नक्रमः श्राद्धमिष्टिश्चेत्यर्थः ।

(४) तदुक्तिमेव पठति द्वितीयेति । या प्रतिपत् आपराह्णिकी, ततो

अन्वाधानं चतुर्दश्यां दर्शे स्वल्पेऽपि वर्त्तयेत् ॥
दर्श-श्राद्धं तथा कार्य्यमिति बौधायनोऽब्रवीत्* ।
इष्ट्यादि-विकृतिः सर्वा पर्वण्येवेति निर्णयः(१) ॥

---

(२)पञ्चमे तु प्रकरणे पूर्वार्द्धे भादि-निर्णयः ।
उत्तरार्द्धे काल-भेदात् कर्म-भेदोपदर्शनम्† ॥
(३)यस्मिन्नस्तमियाद्भानुस्तन्नक्षत्रमुपोषणे ;—
मुख्यं, तस्यासम्भवे तु ग्रहीतव्यं निशीथयुक ॥
उपवासे यदुक्तं स्यात् तद्धि नक्तैक-भक्तयोः(४) ।
उदये त्रिमुहूर्त्तस्थं नक्षत्रं व्रत-दानयोः ॥
दिन-द्वये तथात्वे तु पूर्वं स्याद्बलवत्त्वतः(५) ।

---

* बौधायनोदितम्,—इति सो॰ पुस्तके पाठः ।
† कर्म्मभेदोपदेशनम्,—इति मु॰ का॰ पुस्तकयोः पाठः ।

---

द्वितीया यदि सूर्य्यास्तात् प्राक् त्रिमुहूर्त्ता, तदा सा प्रतिपत् इष्टियोग्या न, किन्तु ततः पूर्व्वदिनमेव । अतएवाह अन्वाधानमिति ।

(१) इष्टिर्दर्शपौर्णमासेष्टिः । आदिना पशुसोमौ गृह्येते । एतत् सर्व्वं प्रकृतिः, विकृतयस्तु "ऐन्द्राग्नमेकादशकपालं निर्व्वपेत्"—इत्यादिना विहिताः ।

(२) पञ्चमप्रकरणप्रतिपाद्यार्थमाह पञ्चमेत्विति । पूर्व्वार्द्धे पूर्व्वभागे । भं नक्षत्रम् । आदिना योग-करण-वार परिग्रहः । उत्तरार्द्धे उत्तरभागे काल-विशेषेण कर्म्मविशेषनिरूपणमित्यर्थः । संक्रान्त्यादिनिरूपणमिति यावत् ।

(३) नक्षत्रनिर्णयमाह यस्मिन्निति । मुख्यमिति पूर्व्वान्वयि ।

(४) तथा च नात्र तिथिवत् मध्याह्नप्रदोषव्याप्त्या निर्णय इति भावः ।

(५) संपूर्णाहोरात्र-व्यापित्वाद्बलवत्त्वं बोध्यम् ।

श्रवणं तूत्तरं(१) ग्राह्यमुपाकरण-कर्मणि ॥

पित्र्ये तु तिथिवत्सर्वो नक्षत्रस्य विनिर्णयः।

(२) * पूर्वः स्यादुपवासादावुत्तरो व्रत-दानयोः ॥

योगः श्राद्धे कर्म-काल-व्याप्तस्तु परिगृह्यताम्।

(३)करणं यद्दिने तत्तु ग्राह्यं, रात्रौ यदा, तदा ;—

दिनद्वयैकभक्ताभ्याम्† उपवासः प्रसिध्यति।

वारेषु संशयाभावात् ग्रहीतव्यं यथास्थितम् ॥

(४)आसन्न-नाड्यः संक्रान्तेः पुण्याः स्नानादि-कर्मसु।

चरे तु‡ कर्कटे पूर्वा मकरे विंशतिः परा ॥

वर्त्तमाने तुला-मेषे नाड्यस्तूभयतोदश।

---

* पूर्व्वःस्यात्,—इत्यारभ्य, ग्रहदोषो न विद्यते,—इत्यन्तोग्रन्थः सो० पुस्तके भ्रष्टः।

† दिनद्वयैकभक्तायाम्,—इति मु० पुस्तके पाठः।

‡ चरेषु,—इति मु० पुस्तके पाठः।

---

(१) उत्तरं धनिष्ठायुक्तम्।

(२) योगे निर्णयमाह पूर्व्वः स्यादिति। पूर्व्वः पूर्व्व-दिन-संबन्धी। आदिना नक्तैकभक्त-परिग्रहः। योग इति सर्व्वत्र विशेष्यतयाऽन्वेति।

(३) करणे निर्णयमाह करणमिति। करणस्य तिथ्यर्द्धमितत्वात् दिनद्वयव्याप्त्यसम्भवेन सन्देहाभावात् यद्दिने करणं तद्दिने उपवासः। यदा तु सायं सन्ध्यामारभ्य प्रवृत्तं करणं परेद्युः सूर्य्योदयात् प्रागेव परिसमाप्यते, तदा पूर्व्वोत्तरयोर्दिनयोरेकभक्ताभ्यामुपवास-सिद्धिरिति समुदितार्थः।

(४) संक्रान्तौ सामान्यतो निर्णयमाह आसन्नेति। विशेषतः तन्निर्णयमाह चर इति। चरे चरराशौ मेष-कर्कट-तुला-मकर-रूपे। "चर-स्थिर-द्व्यात्मक-नामधेया मेषादयोऽमी क्रमशः प्रदिष्टाः"—इत्युक्तेः।

वृषभादौ स्थिरे पुण्याः प्राक् पश्चादपि षोड़श ॥
मिथुनादौ द्वि-स्वभावे(१) उत्तराः षष्ठि-नाड़िकाः ।
अहः-संक्रमणे रात्रावनुष्ठान-निषेधतः ;—
उक्तौ कालौ व्यवस्थाप्यौ तद्वशात्* पूर्व-पश्चिमौ(२) ।
रात्रौ संक्रमणे भानो दिनार्द्धं स्नान-दानयोः ॥
अर्द्धरात्रादधस्तस्मिन् मध्याह्नस्योपरि क्रिया ।
ऊर्द्धं संक्रमणे चोर्ध्वं उदयात् प्रहर-द्वयम्(३) ॥
पूर्णे चेदर्धरात्रे तु यदा संक्रमते रविः ।
प्राहुर्दिन-द्वयं पुण्यं मुक्ता मकर-कर्कटौ ॥
कर्कटे मकरे रात्रावप्याचारादनुष्ठितिः† (४) ।
(५)पूर्णिमा-प्रतिपत्-सन्धौ राहुः सम्पूर्ण-मण्डलम् ;—
ग्रसते चन्द्रमर्कञ्च पर्व-प्रतिपदन्तरे ॥

---

* तद्बलात्,—इति का० पुस्तके पाठः ।
† रात्रौ यथाचारादनुष्ठितिः,—इति पाठान्तरम् ।

---

(१) द्विःस्वभावे द्व्यात्मके राशौ ।
(२) "उक्तौ पूर्व्व-पश्चिमौ कालौ व्यवस्थाप्यौ विरुद्धतया व्यत्ययेनानुष्ठेयत्वेनाश्रयणीयौ।"—इति टीका ।
(३) अर्द्धरात्रात् परतः संक्रमणे पर-दिने उदयादूर्द्धं प्रहरद्वयमित्यर्थः ।
(४) शिष्टाचारानुसारेणानुष्ठानमित्यर्थः। तत्र, रात्रावयन-संक्रमे रात्रावेव पूर्व्वापर-भावेन स्नानादि-क्रियेति प्राच्य-शिष्टाचारः। रात्रौ कर्कटसंक्रान्तौ पूर्व्वमेव दिनं, मकर-संक्रान्तौ तु परमेव दिनं ग्राह्यमिति दाक्षिणात्य-शिष्टाचारः। तथाच शिष्टाचारादुभयं प्रमाणमिति भावः।
(५) ग्रहण-निर्णयमाह पूर्णिमेति। पूर्णिमा-प्रतिपत्-सन्धौ चन्द्रं, पर्व्व-प्रतिपत्-सन्धौ सूर्य्यं राहुर्ग्रसते इत्यर्थः। पर्व्व अमावस्या।

ग्रस्यमाने भवेत् स्नानं ग्रस्ते होमोविधीयते ॥
मुच्यमाने भवेद्दानं मुक्ते स्नानं विधीयते ।
सूर्य्य-ग्रहे तु नाश्नीयात् पूर्वं याम-चतुष्टयम् ॥
चन्द्र-ग्रहे तु यामांस्त्रीन् बाल-वृद्धातुरैर्विना ।
(१)अपराह्णे न मध्याह्ने मध्याह्ने न तु सङ्गवे ;—
भुञ्जीत, सङ्गवे चेत् स्यात् न पूर्वं भुजिमाचरेत् ।
ग्रस्तोदये विधोः पूर्वं नाहर्भोजनमाचरेत् ॥
ग्रस्तावेवास्तमानस्य रवीन्दू प्राप्नुतो यदि ।
(२)तयोः परेद्युरुदये स्नात्वाऽभ्यवहरेन्नरः ॥
त्रयोदश्यादितोवर्ज्यं दिनानां नवकं ध्रुवम् ।
मङ्गलेषु समस्तेषु ग्रहणे चन्द्र-सूर्य्ययोः ॥
(३)द्वादश्यादि*स्तृतीयान्तो वेध इन्दु-ग्रहे स्मृतः ।
एकादश्यादिकः सौरे चतुर्थ्यन्तः प्रकीर्त्तितः ॥
खण्ड-ग्रहे तयोः प्राक्सुभयत्र दिन-द्वयम्† ।
नित्ये नैमित्तिके जप्ये होम-यज्ञ-क्रियासु च ॥

---

* द्वादश्यादि,—इति मु० पुस्तके पाठः ।
† दिनत्रयम्—इति का० पुस्तके पाठः ।

---

(१) बालवृद्धातुर-विषये भोजन-व्यवस्थामाह अपराह्णे इति । पञ्चधा विभक्त-दिनस्य यस्मिन् भागे ग्रहणं, तदव्यवहित-पूर्व्वभागे भोजनमेषां नेत्यर्थः ।

(२) तदा,—इत्यादिः । अभ्यवहारो भोजनम् ।

(३) ग्रहणे वेध-निर्णयमाह द्वादश्यादिरित्यादिना ।

उपाकर्मणि चोत्सर्गे ग्रह-दोषो न विद्यते ।

तमेव निर्णयं* शास्त्र-न्यायाभ्यां कर्तुमुद्यमः ॥

ननु, नायमुद्यमः सफलः, कालस्य गगन-कुसुमायमानत्वात् । तदे-तत्परम-रहस्यमभिजानानः कपिल-महामुनिस्तत्त्वानि(१) विवेक्तुकामः कालमुपेक्ष्यान्यान्येव पञ्चविंशति-तत्त्वानि विविवेच,—

"मूल-प्रकृतिरविकृतिर्महदाद्याः प्रकृति-विकृतयः सप्त ।

षोड़शकस्तु विकारो न प्रकृति र्न विकृतिः पुरुषः"(२)—इति ।

नचैतेष्वेव तत्त्वेषु कालस्यान्तर्भावो मुनिना विवक्षितः,—इति शङ्कनीयम् । त्वदभिमतस्य कालस्य यथोक्त-पञ्चविंशति-तत्त्वानाञ्च परस्परमत्यन्तविलक्षणत्वात् । तथा हि,—चिर-क्षिप्रादि-व्यवहारस्या-साधारणहेतुः कालः,—इति त्वदभिमतं काल-लक्षणम्(३) । तत्त्वानां त्वन्यदृशानि लक्षणानि;—सत्त्वरजस्तमोगुणानां साम्यावस्था मूलप्रकृतिः, महदहङ्कार-पञ्चतन्मात्राख्यानां सप्तानां प्रकृति-विकृतीनां मध्येऽध्यव-

---

* इष्टप्रं नियमं,—इति पाठान्तरम् । सो० पुस्तके क० पुस्तके च एतद-र्द्धात् पूर्व्वं, इष्टप्रं नियमं न्यायैर्विवरीतुमिहोद्यमः,—इत्यर्द्धमधिकं वर्त्तते ।

---

(१) तत्त्वानि पदार्थान् ।

(२) षोड़श-संख्या-परिमितोगणः षोड़शकः । परिमाणे कन् । यद्यपि ईश्वरकृष्णस्य कारिकैषा न त्वियं कपिलमुनेरुक्तिः, तथापि कपिल-मतस्यैवात्र संग्रहात् कपिल-मतमेवेदित्यविरोधः ।

(३) तथा च वैशेषिकसूत्रम् । "अपरस्मिन्नपरं युगपच्चिरं क्षिप्रमिति काललिङ्गानि (२अ० २आ० ६सू०)"। परापरव्यवहारासाधारणकारण-तया युगपच्चिरादि-व्यवहारासाधारण-कारणतया च कालसिद्धिरिति तस्य संक्षेपतोऽर्थः ।

साय-हेतुर्महत्तत्त्वम्, अभिमान-हेतुरहङ्कारः, शब्द-स्पर्श-रूप-रस-गन्धात्मकानि पञ्च तन्मात्राणि(१), पृथिव्यादि-पञ्चमहाभूतानां एकादशेन्द्रियाणां च षोड़श-विकाराणां लक्षणानि प्रसिद्धानि, अप्रकृतिरविकृतिः पुरुषश्चिदात्मकः। न ह्येवंलक्षणकेषु तत्त्वेषु कालस्यान्तर्भावः सम्भाव्यते। नापि षड्विंशं तत्त्वान्तरं* मुनिरनुमन्यते। कथं तर्हि मुनि-प्रणीतानि तत्त्वानि आर्य्याभिः संग्टह्णानः ईश्वरकृष्णोबहिःकरणान्तःकरणे(२) विविचन्† कालं व्यवजहार;—

"साम्प्रत-कालं बाह्यं त्रिकालमाभ्यन्तरं करणम्(३)—इति।

---

* षड्विंशतत्त्वान्तरं,—इति मु० पुस्तके पाठः।

† विविञ्चन्,—इति मु० पुस्तके पाठः।

---

(१) सत्त्वरजस्तमांसि द्रव्याणि। तेषु गुणत्वव्यपदेशः पुरुषोपकरणत्वात। मूलप्रकृतिरित्यनेन नास्या मूलान्तरमस्तीत्युक्तम्। तेनेयमविकृतिः। महत्तत्त्वमहङ्कारस्य प्रकृतिर्विकृतिश्च मूलप्रकृतेः, अहङ्कारतत्त्वं पञ्चतन्मात्राणामिन्द्रियाणाञ्च प्रकृतिर्विकृतिश्च महतः, पञ्चतन्मात्राणि पृथिव्यादीनां प्रकृतयोविकृतयश्चाहङ्कारस्य। तेन सप्तानामेषां प्रकृतिविकृतित्वम्। तत्र, अध्यवसायोनिश्चयात्मिका वृत्तिः, तद्धेतुर्महत्तत्त्वम्। इदमेव बुद्धिरित्युच्यते। अभिमानात्मकवृत्तिहेतुरहङ्कारः। पृथिव्यादिषु महाभूतेषु शब्दादयोगुणा न व्यवस्थिताः, "आद्याद्यस्य गुणं तेषामवाप्नोति परःपरः"—इत्युक्तः। तन्मात्रेषु त्वेकैकेषु शब्दादय एकैके एव गुणा न तु तत्र गुणान्तरमस्तीति इति तेषां तन्मात्रसंज्ञा। तत्रत्य शब्दादिषु शान्तत्वादिविशेषविरहादपि तेषां तन्मात्रत्वं बोध्यम्। तदुक्तम्,—"तस्मिंस्तस्मिंस्तु तन्मात्रतास्तेन तन्मात्रता स्मृता। न शान्तानापि घोरास्ते न मूढ़ाश्चाविशेषिणः"—इति।

(२) बहिःकरणानि चक्षुरादीनि, अन्तःकरणानि महदहंकारमनांसि।

(३) चक्षुरादिकं वर्त्तमानमेव गृह्णातीति साम्प्रतकालं बाह्यं करणम्। अन्तःकरणन्तु अतीतमनागतं वर्त्तमानञ्च विषयीकरोतीति त्रिकालमाभ्यन्तरं करणम्।

'पर-प्रसिद्ध्या परो बोधनीयः ;—इति न्यायेनायं व्यवहारो न तु स्व-सिद्धान्ताभिप्रायेण,—इति वदामः । अतएवैतद्वचनं व्याचक्षाणा वाचस्पतिमिश्रास्तत्त्वकौमुद्यामेवमाहुः "कालस्तु वैशेषिकाभिमत एको नातीतानागतादि-व्यवहार-भेदं प्रवर्त्तयितुमर्हति (१)। तस्मादयं यै-रुपाधि-भेदैरतीतानागतादि-भेदभावं प्रतिपद्यते, सन्तु तएवोपाधयो व्यवहार-हेतवः कृतमन्तर्गडुना कालेनेति साङ्ख्याचार्य्याः। तस्मान्न काल-रूप-तत्त्वान्तराभ्युपगमः",—इति । अथोच्येत,—भूतकालोवर्त्त-मानकालोभविष्यत्कालः,—इति एवं त्रिष्वपि भूतादिष्वनुगतः(२) काल-प्रत्यय एकमनुगतं कालतत्त्वमन्तरेणानुपपन्नः,—इति । तन्न । पदार्थ-प्रत्ययवदुपपत्तेः। यथा भवन्मते द्रव्य-पदार्थो गुणपदार्थः,—इति षट्सु भावेषु चतुर्ष्वभावेषु अपि (३) अनुगतः पदार्थ-प्रत्यय एकमनुगतं पदार्थ-शब्द-वाच्यं तत्त्वान्तरम्* अन्तरेणाप्युपपन्नः। तथा काल-प्रत्ययः कुतो नोपपद्यते। तस्मात्, निस्तत्त्वं कालं निर्णेतुं महानयं उद्यमः प्रेक्षा-वच्छिरोमणे र्माधवाचार्य्यस्य न कथञ्चिदप्युपपन्नः,—इत्येवं प्राप्ते ब्रूमः।

आयुष्मतस्तैतस्यैवं† निरूढ़-कालतत्त्वे(४) यः प्रद्वेषः, स कस्य हेतो-

* तत्त्वान्तरं, —इति नास्ति मु° पुस्तके।

† आयुष्मतश्चेत्तस्यैवं,—इति मु° पुस्तके पाठः।

(१) कालस्यातीतानागतादिव्यवहारप्रवर्त्तकत्वाभावे तस्यैकत्वं हेतुरिति बोध्यम्।

(२) अनुगतत्वञ्च कालप्रत्ययस्य भूतादिषु व्यावर्त्तमानेष्वपि कालस्यानुवर्त्त-नादवसेयम्।

(३) द्रव्य गुण-कर्म्म-सामान्य-विशेष-समवायाः षटभावाः,प्रागभाव--ध्वंसा-भावात्यन्ताभावान्योन्याभावाश्चत्वारोऽभावाश्च वैशेषिकतन्त्रे प्रसिद्धाः।

(४) आयुष्मतः पूर्व्वपक्षिणः। सोल्लुण्ठोक्तिरियम्। निरूढं सर्व्वलोक-प्रसिद्धम्।

रिति वक्तव्यम्। किं कपिल-महामुनिना निराकृतत्वात्, किं वा साङ्ख्य-शास्त्र-प्रणीतेषु तत्त्वेष्वसंगृहीतत्वात्, उत लक्षणाभावात्, आहो-स्वित् प्रमाणाभावात्, अथ वा प्रयोजनाभावात्, अथ वा तत्त्व-गत-पञ्चविंशतिः-सङ्ख्या*ऽभ्यास-पाटवेनावसिताच्छ्रद्धाजाड्यात्† ? न प्रथमः, काल-निराकरण-सूत्रस्य मुनिना प्रणीतस्यानुपलम्भात्। न द्वितीयः, अतिप्रसङ्गात्। ऋग्वेदादिप्रोक्तानां ज्योतिष्टोमादीनां आयुर्व्वेद-धनुर्व्वेद-गान्धर्व्ववेद‡प्रोक्तानामौषध-शस्त्र-स्वरादीनाञ्चासंगृहीतत्वेन तेष्वपि भवतः प्रद्वेषः केन वार्य्येत§।

अथ, तेषां विशिष्यासंग्रहेऽपि सुख-दुःख-मोहात्मकत्वेन गुण-त्रयान्तर्भावात् अस्त्येवार्थात् संग्रहः,—इत्युच्येत‖। तर्हि कालस्याप्यसौ न दण्ड-वारितः,—इति बुद्धिं समाधत्स्व। कालस्य गुण-त्रय-परिणामत्वे सावयवत्वमनित्यत्वं च घटादेरिव प्रसज्येत,—इति चेत्। नित्य-निरवयव-काल-तत्त्वाभिनिवेशवतो वैशेषिकादेः पतत्वयं वज्र-प्रहारः शिरसि। वेद-वादिनां तु न काऽपि क्षतिः। कालस्योत्पत्ति-सावयवत्वयोः प्रत्यक्ष-श्रुतावुपलभ्यमानत्वात्। तैत्तिरीय-शाखायां नारायणीये कालोत्पत्तिराम्नायते,—

"सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधि।
कलामुहूर्त्ताः काष्ठाश्चाहोरात्राश्च सर्व्वशः॥

---

* तत्वसंख्या,—इति मु० पुस्तके पाठः।

† नाभ्यसितात् श्रद्धाजाड्यात्,—इति कौ० पुस्तके पाठः।

‡ वेद,—इति नास्ति मु० पुस्तके।

§ वार्य्यते,—इति मु० पुस्तके पाठः।

‖ इत्युच्यते,—इति मु० पुस्तके पाठः।

अर्धमासामासा ऋतवः संवत्सरश्च कल्पन्ताम्"—इति ।

तस्यामेव शाखायाम्, अरुणकेतु-चयन-ब्राह्मणे सावयवत्वं श्रूयते,—
"उक्तो वेषोवासांसि च कालावयवानामितः प्रतीच्येषु"—इति । इतोऽस्मादनुवाकात् प्रतीच्येष्वधस्तनेषु अनुवाकेषु कालावयवानामृतूनां ध्यातव्योवेष उक्तः वस्त्राणि चोक्तानीत्यर्थः । नित्यत्व-निरवयवत्वाभिधायिनो वैशेषिकादि-शास्त्रस्य 'अमृता देवता'—इति वदापेक्षिक-नित्यतायामन्तर्द्धान-शक्त्युपेत-यक्ष-राक्षसादिवत् संस्पर्श-योग्यावयव-शून्यतायां च तात्पर्य्यं वर्णनीयम् । एवञ्च सति विरोधाधिकरण-न्यायः (मी० १ अ० ३ पा० २ अ) अत्रानुगृहीतो भवति । तस्य च न्यायस्य संग्राहकावेतौ श्लोकौ,—

"औदुम्बरी वेष्टितव्या सर्व्वेत्येषा स्मृतिर्मितिः ।
अमितिर्वेति सन्देहे मितिः स्यादष्टकादिवत् ॥
औदुम्बरीं स्पृशन् गायेदिति प्रत्यक्ष-वेदतः ।
विरोधान् मूलवेदस्याननुमानादमानता"—इति ।

अयमर्थः । अध्वरे महावेद्यां सदोनामकस्य मण्डपस्य मध्ये काचिदुदुम्बर-शाखा स्तम्भत्वेन निखाता भवति । तामुद्दिश्य वस्त्र-वेष्टनं स्मर्य्यते,—"औदुम्बरी सर्व्वा वेष्टयितव्या"—इति । तत्र संशयः ;—एषा स्मृतिः प्रमाणं नवा,—इति । तत्र, पूर्व्वाधिकरणे(१) 'अष्टकाः कर्त्तव्याः'—इत्यस्याः स्मृतेर्मूल-वेदानुमापकत्वेन प्रामाण्यमुक्तम् । तेनैव न्यायेन सर्व्व-वेष्टन-स्मृतिः प्रमाणम्,—इति पूर्व्वः पक्षः । "औदुम्बरीं

(१) स्मृतिप्रामाण्याधिकरणे इत्यर्थः । तच्च मीमांसा-प्रथम-तृतीय-प्रथमम् ।

स्पृष्ट्वोदगायेत्"—इति प्रत्यक्ष-श्रुतौ स्पर्शो विधीयते। न चासौ सर्व्व-वेष्टने सत्युपपद्यते। तथा च, सर्व्व-वेष्टन-स्मृति-मूल-भूत-वेदानुमानस्य प्रत्यक्ष-श्रुति-विरुद्धस्य* कालात्ययापदिष्टत्वेन(१) निर्मूला वेष्टनस्मृति-रप्रमाणम्,—इति सिद्धान्तः,—इति।

अथ मन्यसे;—महता तपसा शिवमाराध्य तत्प्रसाद-लब्ध-सर्व्वज्ञत्व-पदः कणाद-महामुनिर्वेद-तात्पर्य्यं सम्यग्वेत्तीति वेदस्यैव मन्द-मति-प्रतीतादर्थादर्थान्तरं नेतव्यम्,—इति। एवमपि, यस्य प्रसादादयं सर्व्वज्ञतामलभत सएव शिवोमुख्यः सर्व्वज्ञः,—इति तन्मतानुसारेण कणाद-मतस्यैवान्यथा नयनमत्यन्तमुचितम्। शिवोहि, सर्व्वेष्वागमेषु षट्‌त्रिंशत्तत्त्वानि निरूपयन् काल-तत्त्वस्योत्पत्तिमङ्गीचकार। निखिल-शैवागम-सारमार्य्याभिः संग्टह्णानोभोजराजः शुद्धानि पञ्च तत्त्वानि शिव-शक्ति-सदाशिवेश्वरविद्याऽऽख्यानि निर्द्दिश्येतराणि निर्द्दिशन्मायाकार्य्योक्ति-पूर्व्वकमेव कालं निरदिक्षत्,—

"पुंसोजगतः कृतये मायातस्तत्त्वपञ्चकं भवति।

कालोनियतिश्च तथा कला च विद्या च रागश्च(२)"—इति।

तानि माया-तत्त्व-सहितान्येकादश तत्त्वानि, साङ्ख्यप्रसिद्ध-पञ्च-विंशति-तत्त्वानि चोद्दिश्य(३) क्रमेण विवृण्वन्निदमाह,—

* प्रत्यक्षश्रुतिविरुद्धत्वेन,—इति क० पुस्तके पाठः।

(१) यस्य बलवत्प्रमाणेन पक्षे साध्याभावोनिर्णीयते, स हेतुः कालात्ययापदिष्टः इत्युच्यते। अयमेव बाधितविषयइत्यप्युच्यते।

(२) पुंसः सकाशात् जगतः कृतये जगदुत्पत्त्यर्थम्। नियतिरदृष्टम्। कला कौशलम्। राग इच्छा।

(३) शुद्धानि शिवादीनि पञ्च, कालादीनि च पञ्च, माया चेत्येकादश,

"नानाविध-शक्तिमयी सा(१) जनयति काल-तत्त्वमेवादौ।
भाविभवद्भूतमयं कलयति जगदेष कालोऽतः"—इति।

तत्र, टीकाकार इत्थं व्याचख्यौ,—"नन्वेष कालो नैयायिकादिभिर्नित्योऽभ्युपगतः, अतआह; भाविभवद्भूतमयम्,—इति। भूतादिरूपेण त्रिविधत्वादचेतनत्वे सत्यनेकत्वेनास्यानित्यत्वं(२) सिद्धमिति भावः। केन कार्य्येणास्य सिद्धिः, अतआह; कलयति जगदेष कालोऽतः,—इति। चिर-क्षिप्रादि-प्रत्ययोपाधिद्वारेण* कलयत्याक्षिपतीत्यर्थः"—इति। इत्थं प्रत्यक्ष-श्रुति-सहकृतैरागमैः कणाद-शास्त्रस्य बाधे सत्युत्तर-मीमांसा-गत-द्वितीयाध्याय-प्रथमाधिकरण-न्यायोऽनुगृह्यते। तस्य च न्यायस्य संग्राहकौ श्लोकौ,—

"साङ्ख्य-स्मृत्याऽस्ति सङ्कोचो नवा वेद-समन्वये।
धर्मे वेदः सावकाशः सङ्कोच्योऽनवकाशया॥
प्रत्यक्ष-श्रुति-मूलाभिर्मन्वादि-स्मृतिभिः स्मृतिः।
अमूला कापिली बाध्या न सङ्कोचोऽनया ततः"—इति।

अयमर्थः। ऋग्वेदादिभिरग्निहोत्रादि-धर्मा ब्रह्मणोजगत्कर्तृत्वं च

* प्रत्ययद्वारोपाधिद्वारेण,—इति मु॰ पुस्तके पाठः।

साङ्ख्यप्रसिद्धानि च पञ्चविंशतितत्त्वानीति मिलित्वा षट्त्रिंशत्तत्त्वानि भवन्ति।

(१) सा माया।

(२) तथा च कालोऽनित्यः अचेतनत्वे सत्यनेकत्वात् घटवत्,—इत्यनुमानात् कालस्यानित्यत्वम्। जीवात्मनामप्यनेकत्वाभ्युपगमात् तत्रानैकान्तिकत्वमाशङ्क्याचेतनत्वे सतीति हेतुर्व्विशेषितः। अचेतनत्वमात्रन्तु न हेतुर्मायायां शक्तौ चानैकान्तिकत्वात्।

प्रतीयते, साङ्ख्यस्मृत्यादिस्तु प्रधानस्य जगत्कारणत्वं प्रतिपादयति। तत्र, तया स्मृत्या वेदस्य सङ्कोचोऽस्ति न वा,—इति संशयः। स्मृतेर्जगत्-कारणत्वमन्तरेण निरवकाशत्वात् प्राबल्यम्, वेदस्य तु धर्मेऽपि चरितार्थत्वाद्दौर्बल्यम्। ततः स्मृत्यनुसारेण वेदः सङ्कुचितः,—इति पूर्वः पक्षः। प्रत्यक्षश्रुतिभिर्बह्वीभिरनुगृहीताबह्वीमन्वादि-स्मृतयोब्रह्मणः कारणतामाचक्षते। साङ्ख्यस्मृतिस्त्वेका मूल-हीना चेति दुर्बलत्वात् सैव बाध्या। अतो नास्ति वेदस्य सङ्कोचः,—इति राद्धान्त इति।

अथ, तार्किकत्वाभिमान-ग्रह-गृहीतः सन् परवश एवं ब्रूषे;—भूतादीनामौपाधिकानां काल-विशेषाणामेवोत्पत्तिर्न तु निरुपाधिकस्य मुख्य-कालस्य,—इति। तर्हि, 'कपर्दकान्वेषणाय प्रवृत्तश्चिन्तामणिमलभत'—इत्यस्य वासिष्ठ-रामायण-प्रोक्तस्याभाणकस्य त्वमेव विषयोऽभूः। यतः, साधर्म्य-वैधर्म्य-ज्ञानाय द्रव्याण्यन्विष्यन् परब्रह्म-तत्त्वमवागमः। व्यवहारहेतूनां भूतादि-काल-विशेषाणां आधारः स्वयं व्यवहारातीतो नित्यो निरवयवोमुख्यः कालो यः, स परमात्मैव। तथा च श्वेताश्वतरा आमनन्ति, "कालकालो* गुणी सर्वविद्यः"—इति। आस्तां नित्यत्वानित्यत्व-सावयवत्व-निरवयवत्व-चिन्ता। सर्वथाऽप्यस्ति साङ्ख्यतत्त्वेष्वार्थिकः काल-संग्रहः। साक्षात् संग्रहाभावस्तु ज्योतिष्टोमादिवत् प्रकृति-पुरुष-विवेकानुपयोगादित्यवगन्तव्यम्। तृतीय-चतुर्थ-पक्षौ तु भवतो वैशेषिक-परिचर्य-गन्धोऽपि नास्तीति प्रकटयतः, वैशेषिक-ग्रन्थेषु सर्वेष्वपि काल-प्रकरणे तल्लक्षणस्य तत्साधकानुमानस्य च प्रपञ्चितत्वात्। प्रमाणान्तराणि तु काल-साधकानि श्रुत्यैवोपन्य-

* ज्ञः कालकालो,—इति क० पुस्तके पाठः।

स्तानि। तथा च तैत्तिरीया आरुणकेतुके मन्त्रमामनन्ति,—

"स्मृतिः प्रत्यक्षमैतिह्यमनुमानश्चतुष्टयम्।

एतैरादित्यमण्डलं सर्वैरेव विधास्यते"—इति।

तत्र, स्मृतिरनुमेय-श्रुति-मूलं मन्वादि-शास्त्रम्। प्रत्यक्षं श्रोत्रग्राह्यो-ऽक्षरराशि- र्वेदाख्योऽक्षरराशि योगि-प्रत्यक्षमौपनिषदाभिमतं साक्षि-प्रत्यक्षं वा। ऐतिह्यमितिहास-पुराणादिकम्। ज्योतिःशास्त्रस्याप्यत्रा-न्तर्भावो द्रष्टव्यः। अनुमीयते स्व-मूल-भू .-स्मृति-वाक्यमनेनेत्यनुमानः शिष्टाचारः। तस्य च स्मृत्यनुमापकत्वमाचार्यैर्विस्पष्टमभिहितम्,—

"आचाराच्च स्मृतिं ज्ञात्वा स्मृतेश्च श्रुति-कल्पनम्"—इति।

तदेवं स्मृत्यादीनां चतुष्टयं सम्पन्नम्। एतैश्चतुर्भिः सर्वैरप्यादित्य-मण्डलं प्रमीयते,—इति मन्त्रस्यार्थः।

ननु, स्मृत्यादीनि मण्डले साधकत्वेनात्रोपन्यस्तानि न तु काल-साधकत्वेनेति चेत्। मैवम्। मण्डलस्य सार्वजनीन-प्रत्यक्षसिद्धत्वेन तत्र स्मृत्याद्यनुपयोगात्। काल-विवक्षयैवात्र काल-निर्वाहके मण्डले तान्युपन्यस्तानि। तथा च मण्डल-द्वारा कालस्तैः प्रमीयते। काल-विवक्षा चोत्तर-मन्त्रेष्वतिस्फुटा। तत्रानन्तरो मन्त्र एवमाम्नायते,—

"सूर्यो मरीचिमादत्ते सर्वस्माद्भुवनादधि।

तस्याः पाक-विशेषेण स्मृतं काल-विशेषणम्"—इति।

तस्यायमर्थः। भुवन-गतं सर्व-भूत-जालमधिकृत्य* रस-वीर्य-विपा-कादिभिस्तत्तदनुग्रह-समर्थं मरीचिं सूर्यः स्वीकरोति। तत्करेण च भूत-पाक-विभेदेन निमेषादि-परार्द्ध-पर्यन्तः काल-विशेषोऽस्माभिरव-

---

* सर्व्व इति नास्ति क० पुस्तके।

गतो भवति,—इति।

काल-प्रतिपादकानि वचस्त्यादीन्युदाहरामः। तत्र मनुः,—"कालं काल-विभक्तिं च"—इति सृष्टि-प्रकरणे कालं व्यवजहार। याज्ञवल्क्योऽपि,—"श्राद्ध-कालाः प्रकीर्त्तिताः"—इति। एवमन्यास्वपि स्मृतिषूदाहार्य्यम्। श्रुतिष्वपि;—"कृतं य त्वन्ने विचिनोति काले"—इति बह्वृचाः। "अहमेव कालो नाहं कालस्य"—इति तैत्तिरीयकाः। "का च सन्ध्या कश्च सन्ध्यायाः कालः"—इति सामगाः। योगशास्त्रेऽपि संयम-विशेषाद्धारणा-ध्यान-समाधि-त्रयरूपाद्योगिनोऽतीतादिकालं प्रत्यक्षतः पश्यन्तीत्यभिहितम्। तथा च पातञ्जलसूत्रम्। "परिणाम-त्रय-संयमादतीतानागत-ज्ञानम्"—इति(१)। साक्षिप्रत्यक्षमपि; अहमस्मिन् काले निवसामीत्यनुभवस्तावत् सर्वजनीनः। न चासौ बाह्येन्द्रिय-कृतः, कालस्य रूपादि-हीनत्वात्। नापि मानसः, तार्किकैस्तदनङ्गीकारात् (२)। नाप्यनुमानादिजन्यः, अपरोक्षप्रत्ययत्वात्। अतः सामग्र्यभावेऽपि अपरोक्षदर्शनात् साक्षि-प्रत्यक्षमेतदित्यौपनिषदामन्यन्ते। इतिहासेऽपि महाभारते पठ्यते,—

> "प्रहरौ घटिका-न्यूनौ प्रहरौ घटिकाऽधिकौ।
> स कालः कुतपो ज्ञेयः पितॄणां दत्तमक्षयम्"—इति।

पुराणेऽपि,—

---

(१) परिणामत्रयश्च धर्म्मलक्षणावस्थापरिणामरूपम्। तत्र, धर्म्मिणोमृदादेर्घटादिरूपेण परिणामोधर्म्मपरिणामः, घटादेरतीतानागतत्वादि लक्षणपरिणामः, नवपुराणत्वादिरवस्थापरिणामः। व्यक्तमिदं पातञ्जले-विभूतिपादे-त्रयोदशसूत्र-भाष्यादौ।

(२) "चक्षुराद्युक्तविषयं परतन्त्रं बहिर्म्मनः"—इति तदभ्युपगमादिति भावः।

"अनादिरेष भगवान् कालोऽनन्तोऽजरः परः"—इति ।

शिष्टाश्च पौर्णमासाख्ये काले अङ्किनैबुक-संज्ञकान्* स्व-स्व-कुलोचितान् देवता-विशेषेभ्यः क्षीर-दध्यादि-समर्पणादिकान् धर्म-विशेषान् भानुवारादि† काल-विशेषे समाचरन्ति। तदेवमनेक-प्रमाण-प्रमिते काले प्रमाणाभाव-रूपश्चतुर्थ-पक्षः कथमाशङ्क्यते। नापि प्रयोजनाभावादिति पञ्चमः पक्षोयुज्यते। तार्किकैस्तावत् सर्वोत्पत्तिमन्निमित्त कारणत्वमुद्घोषितम्(१)। लोके च कृष्याद्युपयोगः काल-विशेषस्य कृषीवलादिभिर्व्यवह्रियते। गृहप्रवेश-प्रयाणाद्युपयोगोऽपि ज्योतिःशास्त्र-प्रसिद्धः। श्रौत-स्मार्त्त-कर्मोपयोगस्तु प्रदर्शयिष्यते।

तस्मात्, श्रद्धा-जाड्य-कृतस्तव प्रद्वेषः,—इत्ययं षष्ठः पक्षः परिशिष्यते। तथा च, पापात्मनस्तव बुध्यपराधं पुण्यात्मनि माधवाचार्य्ये समारोपयन् कया वा शिक्षया न दण्ड्योऽसि। तदेवं कालस्य प्रत्याख्यातुमशक्यत्वात् तन्निर्णयोद्यमः सफलः,—इति सुस्थितम्।

'ननु, कतरः कालोऽत्र निर्णीयते; किं केवलः कालः, उत कालकालः'। 'ननु, किमित्यप्रसिद्धया भाषया भीषयसि'। 'न भीषयाम्यहं, किन्त्वस्त्येव कलयितव्य-भेदात् कालस्य द्वैविध्यम्। येन प्राणि-देहादयोऽतीत-वर्त्तमानादि-रूपेण कलयितव्याः, स केवलः कालः। सच तत्त्वप्रकाश-वचनेन पूर्वमुदाहृतः,—"कलयति जगदेष कालोऽतः"—इति। तादृशोऽपि कालः उत्पत्ति-स्थिति-विनाशकारिणा येन

* 'अङ्कीनिवकसंज्ञकान्,' इति क॰ पुस्तके पाठः। अङ्कैनवुकसंज्ञकान्,—इति च स॰ पुस्तके।

† भानुचारादि,—इति मु॰ पुस्तके पाठः।

(१) कालस्य,—इति शेषः।

कलयितव्यः, स काल-कालः,—इति। सच वासिष्ठरामायणे दर्शितः,—
"कालोऽपि कल्यते येन"—इति। श्रुतिश्च भवति,—

"स विश्वकृद्विश्वविदात्मयोनि-
र्ज्ञः काल-कालोगुणी सर्ववित्यः।
प्रधानं क्षेत्रज्ञपतिर्गुणेशः
संसार-मोक्ष-स्थिति-बन्ध-हेतुः"—इति।

कूर्मपुराणेऽपि,—

"अनादिरेष भगवान् कालोऽनन्तोऽजरः परः।
सर्वगत्वात् स्वतन्त्रत्वात् सर्वात्मत्वान्महेश्वरः॥
ब्रह्माणो बहवोरुद्रा अन्ये नारायणादयः।
एको हि भगवानीशः कालः कविरिति स्मृतः॥
ब्रह्म-नारायणेशानां त्रयाणां प्राकृतोलयः।
प्रोच्यते काल-योगेन पुनरेव च सम्भवः॥
परं ब्रह्म च भूतानि वासुदेवोऽपि शङ्करः।
कालेनैवच सृज्यन्ते सएव ग्रसते पुनः॥
तस्मात् कालात्मकं विश्वं सएव परमेश्वरः"—इति।

विष्णुधर्मोत्तरेऽपि,—

"अनादिनिधनः कालोरुद्रः सङ्कर्षणः स्मृतः।
कलनात् सर्वभूतानां स कालः परिकीर्त्तितः॥
कर्षणात् सर्व-भूतानां स तु सङ्कर्षणः स्मृतः।
सर्व-भूत-शमित्वाच्च स रुद्रः परिकीर्त्तितः॥
अनादिनिधनत्वेन स महान् परमेश्वरः"—इति।

ज्योतिःशास्त्रेऽपि,—

"भूतानामन्तकृत्कालः कालोऽन्यः कलनात्मकः"—इति ।

तत्रैवं सति द्वयोर्मध्ये काल-कालोऽत्र तावन्न निर्णतव्यः । तस्य धर्मानुष्ठाने,हेतुत्वात् । अनुपादेयत्वाच । यस्त्वितरो मास-पक्ष-तिथ्यादि-रूपः,सोऽपि ज्योतिःशास्त्र एव सम्यक् निर्णीतः,—इति कृतमनया काल-निर्णय-प्रवृत्त्या'—इति प्राप्ते ब्रूमः । उभयमप्यत्र निर्णतव्यम् । काल-कालस्य जगदीश्वरस्य सर्वेषु कर्मारम्भेष्वनुस्मर्त्तव्यत्वात् । अतएव शिष्टाः पुण्याह-वाचनादावीश्वरमनुस्मरन्ति,—

"सर्वेषु कालेषु समस्तदेशे-
ष्वशेषकार्येषु तथेश्वरेश्वरः ।
सर्वैः स्वरूपैर्भगवाननादिमान्
ममास्तु माङ्गल्य-विवृद्धये हरिः ।

यस्य स्मृत्या च नामोक्त्या तपोयज्ञक्रियादिषु ।
न्यूनं सम्पूर्णतां याति सद्यो वन्दे तमच्युतम्"—इति ॥

मासादि-रूप-भेदस्य तु स्वरूपेण निर्णीतत्वेऽपि श्रौत-स्मार्त्त-कर्म-विशेषेण सह कालस्याङ्गाङ्गिभावो निर्णेतव्यः। यद्यप्यसौ हेमाद्रि-प्रभृतिषु ग्रन्थेषु निर्णीतस्तथाप्यनेकत्र विप्रकीर्णस्यैकत्र सङ्ग्रहाय यत्नः क्रियते। तदेवं चिकीर्षितस्य ग्रन्थस्य कालरूपोविषयः सङ्ग्रहरूपं प्रयोजन-ञ्चास्तीत्ययं ग्रन्थ आरभ्यते ।

"नित्योजन्यश्च कालौ द्वौ तयोराद्यः परेश्वरः ।
सोऽवाङ्मनस-गम्योऽपि देही भक्तानुकम्पया" ।

इति नित्यकालस्य परमेश्वरत्वेऽपि प्रमाणं पूर्वमेवोपन्यस्तम् । परमेश्वरस्य

च, अवाङ्मनस-गोचरत्वे सर्वे वेदान्तास्तदनुसारि-स्मृति-पुराणानि तत्त्व-विदनुभवश्च प्रमाणम्। भक्तानुग्राहि-मूर्ति-स्वीकारस्य तलवकाराख्ये* सामवेद-शाखा-विशेषे कस्यां चिदाख्यायिकायामाम्नायते। तस्यां ह्याख्यायिकायामेव मुक्तम् ;—'अग्निवाय्विन्द्रादयोदेवा ईश्वरानुगृहीताः सर्वत्र विजयमानाः स्वकीयमेवैतत् सामर्थ्यमित्यभिमन्यन्ते, तान् बोधयितुमवाङ्मनस-गम्यं परमेव ब्रह्म पूज्यां चतुर्गम्यां काञ्चिन्मूर्त्तिं धारयित्वा प्रादुर्बभूव, तया सह वादं कृत्वाऽपि राजस-चित्तावग्नि-वायू ब्रह्म-तत्त्वं नैव बुबुधाते, इन्द्रस्तु सात्त्विक-चित्तोबुबुधे',—इति। वासिष्ठरामायणेऽपि, शुक्रोपाख्याने शुक्रं मृतमवलोक्य तत्पिता भृगुः क्रुद्धोमारयितारं कालं शप्तुमुद्यतः, तदानीं कालोऽनुग्रहीतुमीदृशेन रूपेणाविर्बभूवेति पठ्यते,—

"अथाकलितरूपोऽसौ कालः कवलित-प्रजः।
आधिभौतिकमास्थाय वपुर्भुनिमुपाययौ॥
खड्ग-पाश-धरः श्रीमान् कुण्डली कवचान्वितः।
ऋतु-षट्क-मयोदार-वक्त्र-षट्क-समन्वितः† ॥
मास-द्वादशकोद्दाम-भुज-द्वादशकोद्भटः॥
स्वाकार-समया बह्व्या वृतः किङ्कर-सेनया।
स उपेत्य प्रणम्यादौ कुपितन्तं‡ महामुनिम्॥

---

* तवल्कराख्ये,—इति सो० पुस्तके पाठः।

† वस्त्रषट्कसमाश्रितः,—इति मु० पुस्तके पाठः।

‡ कुपितन्तु,—इति मु० पुस्तके, कुपितं च, इति सो० पुस्तके पाठः।

कल्प-क्षुब्धाब्धि-गम्भीरं सान्त्वपूर्वमुवाच ह ।
त्वमत्यन्ततपाविप्र, वयं नियति-पालकाः ॥
तेन संपूज्यसे पूज्य, साधो, नेतरयेच्छया ।
मा तपः क्षयपानल्पं* कल्प-काल-महानलैः ॥
येन दग्धोऽस्मि मे† तस्य किन्त्वं शापेन धक्ष्यसि ॥
संसारावलयोग्रस्ता निगीर्णारुद्र-कोटयः ।
भुक्तानि विष्णु-वृन्दानि केन शप्ता वयं मुने ॥
भोक्तारो हि वयं ब्रह्मन्, भोजनं युष्मदादयः ।
स्वयं नियतिरेषा हि नावयोरेतदीहितम्"—इति ।

न च भक्तानुजिघृक्षया स्वीकृता मूर्त्तिरीदृश्येवेति कश्चिन्नियमोऽस्ति, सर्वात्मकस्य परमेश्वरस्य भक्त-चित्त-प्रियायाः सर्वस्या अपि मूर्त्तेः स्वकीयत्वात् । अत एव भगवद्गीतायाम्,—

"यो यो यां यां तनुं भक्तः श्रद्धयाऽर्चितुमिच्छति ।
तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहम् ॥
स तया श्रद्धया युक्त स्तस्याराधनमीहते ।
लभते च ततः कामान् मयैव विहितान् हितान्"—इति ।

विष्णु-रुद्रादि-चेतन-मूर्त्तिवदचेतन-मूर्त्तयोऽपि तत्तत्फलविशेषार्थिभि‡रीश्वरत्वेनोपास्याः । तदेतदृग्वेदे समाम्नायते,—"एतं ह्येव बह्वृचामहत्युक्थे मीमांसंतएतमग्नावध्वर्यवएतं महाव्रते छन्दोगा एतम-

---

* क्षयपयाबद्धे,—इति क० सो० पुस्तकयोः पाठः ।
† दग्धोऽस्मि ते,—इति मु० पुस्तकेपाठः ।
‡ तत्तद्दिषादिभि,—इति सो० पुस्तकेपाठः ।

ध्यामेतं दिव्येतं वायावेतमाकाशएतमपस्वेतमौषधीष्वेतं वनस्पति-ष्वेतं चन्द्रमस्येतं नक्षत्रेष्वेतं सर्वेषु भूतेषु,(१)"—इति। वाजसनेयिनोऽपि मण्डलब्राह्मणे,—"तमेतमग्निमित्यध्वर्यवउपासते"—इत्यारभ्य पठन्ति;—"विषमिति सर्पाः, सर्प इति सर्पविदः, उर्गिति देवा रयिरिति मनुष्याः, मायेत्यसुराः, स्वधेति पितरो देवयजनइति देवयजन विदो* रूपमिति गन्धर्वा गन्धइत्यप्सरसस्तं यथा यथोपासते तदेव भवति,(२)"—इति। तैत्तिरीयाश्च पठन्ति,—"क्षेमइति वाचि योगक्षेमइति प्राणापानयोः"—इत्यादि। परब्रह्मण्यारोपितं यद्याव-ज्जगद्रूपमस्ति, तेन सर्वेणाप्युपासनाय परमेश्वरो रूपवान् भवति,—इति हिरण्मयाधिकरण-मनोमयाधिकरणयोः(३) प्रपञ्चितम्। एवञ्च सति यो यदा यत्कर्मारभते, स तदा तत्कर्मोपयुक्तां कालात्मकस्ये-श्वरस्य मूर्त्तिमिष्टदेवतारूपेणानुस्मरेत्। अत एव मन्त्र-शास्त्रेषु नाना-विधानि ध्यानान्युपदिष्टानि, लोकेऽप्याविद्वदागोपालं सर्वेऽपि जना एकैकां देवतां स्वेच्छया पूजयन्ति। तदेतद्भगवानाह,—

"यजन्ते सात्विकादेवान् यक्ष-रक्षांसि राजसाः।
प्रेतान् भूत-गणांश्चान्ये यजन्ते तामसाजनाः"—इति।

---

* देवजन इति देवजनविदो, इति सा॰ पुस्तके पाठः।

---

(१) सहस्त्युकथे प्रधानशास्त्रे, सोमांसते तदनुगं ब्रह्मानुसन्दधते। अस्मिन् तत्संबन्धिनि क्रतौ। महाव्रते महाव्रताख्ये क्रतौ। अस्यां पृथिव्याम।

(२) ऊर्गन्नं रयिर्धनम्। देवयजनमविमुक्तादि,—इति टीका।

(३) ते चाधिकरणे शारीरक-प्रथम-प्रथम-सप्तम, शारीरक-प्रथम द्वितीय प्रथमे।

तस्मादारभ्यमाण-कर्म-फल-प्रदो निजेष्ट-देवतारूपो* नित्यः कालः कर्मारम्भेष्वनुस्मर्त्तव्यः,—इति सिद्धम्।

---

## अथ जन्यकालं निरूपयामः।

'ननु, कालस्य जन्यत्वे सति कथं प्रलये काल-व्यवहारः(१) ; प्रलय-कालः, प्रलयोऽतीतः†, प्रलयोभावी,—इति(२)'। 'काल-नित्यत्व-वादिनस्त्वयापि समोदोषः ; नित्यस्य कालस्य तपन-परिस्पन्दाद्युपाधिभिः परिच्छेदे सत्येतावान् कालः,—इति कालेयत्ता वर्णयितव्या, न च प्रलये तदुपाधयः सन्ति, अतस्तव कथं प्रलय-काले इयत्ता-निर्णयः'।

'अथ, सत्कार्य्य-वादाभ्युपगमेनोपाधयोऽपि वासना-रूपेण सन्ति,(३)' 'तर्हि कालेऽपि तत्समानम्। नचैतावता नित्यत्वप्राप्तिः, उपाधिषु तदनङ्गीकारात्(४)'। (५)'अथ मन्यसे ; इयत्ता-रहितेऽपि प्रलय-

* निजेष्टदेवतादिरूपो,—इति स० पुस्तके पाठः।

† प्रलयकालोऽतीतः,—इति स० पुस्तके पाठः।

(१) तस्य जन्यमात्रानधिकरणत्वादिति भावः। प्रलये कालव्यवहारं दर्शयति प्रलयकाल इत्यादिना।

(२) प्रतिबन्धिमाह कालेति।

(३) सत्कार्य्यवादे अतीतानागतं स्वरूपतोऽस्ति अध्वभेदाद्धर्म्माणामित्यभ्युपगमादिति भावः। एतच्च पातञ्जलादौ व्यक्तं वक्ष्यते च।

(४) तथा च तन्मते यथोपाधीनां वासनारूपेण सत्त्वेपि स्थूलरूपेणासत्त्वान्न नित्यत्वं तथा कालस्यापीति भावः।

(५) इदानीं प्रलये कालाभावेपि कालव्यवहारमुपपादयितुमाह अथेति।

काले सृष्टि-कालेयत्ता-वासनावशादियत्ता व्यवह्रियते। तत्रोपाध्यायत्वादिर्दृष्टान्तः। यथा कश्चिन्माणवकस्त्रिंशद्वर्ष-वयस्कादध्येतुमुपक्रम्य संवत्सरमधीत्यास्मदुपाध्याय एकत्रिंशद्वर्ष-वयस्कः,—इत्यध्ययन-रहितेऽप्यतीते वयस्युपाध्यायत्वं व्यवहरति, तद्वदियत्ता-व्यवहारः'। 'एवं तर्ह्यनेन न्यायेन काल-रहिते प्रलये काल-व्यवहारः किं न स्यात्'। काल-रहितञ्च प्रलयादिकं वस्त्वस्तीति माण्डुक्यादि* श्रुतयोऽभ्युपगच्छन्ति। तथा च श्रूयते,—"यच्चान्यत्त्रिकालातीतं तदप्योङ्कार एव"—इति। प्राभाकराश्च, अपूर्वस्य काल-त्रयासंस्पृष्टां काञ्चिदवस्थामाहुः। तस्मात् कालः सुखेन जन्यताम्।

स च, सामान्य-विशेषाभ्यां द्विविधः। तस्य चोभयस्येश्वराख्यान्नित्यात् कालादुत्पत्तिं मनुराह,—

"कालं काल-विभक्तीश्च नक्षत्राणि ग्रहांस्तथा।
सृष्टिं ससर्ज चैवेमां स्रष्टुमिच्छन्निमाः प्रजाः"—इति।

तत्र, यः सामान्य-कालः, स विशेषानुगतत्वात् तदपेक्षया नित्योग्रहगत्यादिभिरनुमेयो भूतोत्पत्ति-निमित्तकारणम्,—इति तार्किक-ज्यौतिषिकादयः प्रतिपेदिरे। तत्र, ज्यौतिषा आहुः,—

"प्रभव-विरति-मध्य-ज्ञान-वन्ध्यानितान्तम्
विदित-परम-तत्त्वा यत्र ते योगिनोऽपि।
तमहमिह निमित्तं विश्वजन्मात्ययाना—
मनुमितमभिवन्दे भ-ग्रहैः कालमीशम्॥

युग-वर्ष-मास-दिवसाः समं प्रवृत्तास्तु चैत्र-शुक्लादेः।

* मण्डूक्यादि,—इति मु० पुस्तके पाठः।

कालोऽयमनाद्यन्तोग्रह-भैरनुमीयते चेत्"—इति ।

काल-विशेषेषु च संवत्सरः प्रधानभूतः, अन्ये तु सर्वे गुणभूताः । तथा चारुणकेतुके समाम्नायते,—

"नदीव प्रभवा काचिदक्षय्या स्यन्दते यथा ।
तां नद्योऽभिसमायन्ति सोरुः सती न निवर्त्तते ॥
एवं नानासमुत्थानाः कालाः संवत्सरं श्रिताः ।
अणुशश्च महत्शश्च सर्वे समवयन्ति तम् ॥
स तैः सर्वैः समाविष्ट उरुः सन्न निवर्तते"—इति ।

अयमर्थः । भागीरथी-गोदावर्य्यादिका नदीवायङ्कालः कुतश्चित् अविनाशात् उत्पत्ति-स्थानादुत्पद्यते । तच्चोत्पत्ति-स्थानं साङ्ख्योक्त-प्रकृतिर्वा, शैवागमोक्त-माया वा, श्रुति-स्मृत्युदित-नित्य-कालात्मक ईश्वरो वा, भविष्यति । यथा, तां गङ्गादिकां नदीमन्या अल्प-नद्यो अभितः प्रविशन्ति ; सा च, प्रविष्टैर्नद्यन्तरैः सह विस्तीर्णा प्रवहति, अप्रवाहा सती न कदाचिच्छुष्यति । एवं नानाविध-रूपैः समुत्पन्नाः काल-भेदाः संवत्सराख्यं प्रधानं कालमाश्रिताः । तत्र, निमेषाद्या अयन-पर्य्यन्ताः काल-भेदाः संवत्सरादणवः, युगाद्याः परार्द्ध-पर्य्यन्ताः संवत्सरान्महान्तः । ते सर्वे संवत्सरं सम्यक् प्रविशन्ति । अणूनामवयवत्वेन प्रवेशः, महतां तु संवत्सरावृत्ति-निष्पाद्यानामध्यक्षः संवत्सरः,—इति तत्र प्रवेशोऽभिधीयते । तथा च वेदाङ्ग ज्योतिषग्रन्थे पठ्यते,—

"पञ्च-संवत्सरमयं* युगाध्यक्षं प्रजापतिम् ।

---

* एवं रुवत्सरमयं,—इति क० पुस्तके पाठः ।

दिनर्त्वयनमासाङ्गं प्रणम्य शिरसा शुचिः*"—इति।

स च, संवत्सरस्तैरणुभिर्महद्भिश्च सर्वैः समाविष्टोऽतिदीर्घः सन्नस्मिन् जगति नोच्छिद्यते'—इति।

नन्वल्पत्वं निमेषे पर्य्यवसितं महत्त्वन्तु परार्द्धे, तथा च तयोरन्यतरस्य प्राधान्यमुचितम्, तत्र कथं संवत्सरस्य प्राधान्यमिति चेत्। ईश्वरेण प्रथमं सृष्टत्वादिति ब्रूमः। तथा च वाजसनेयिनः समामनन्ति,—"सोऽकामयत द्वितीयोमे आत्मा जायेतेति, स मनसा वाचा मिथुनं समभवत्, तद्यद्रेत आसीत् स संवत्सरोऽभवत्"—इति। तस्मात्, संवत्सरः प्रधानम्। अतएव वयं संवत्सरमारभ्य-कालविशेषं निर्णयामः।

तत्र, संवत्सरः अयनमृतुर्मासः पक्षस्तिथिर्नक्षत्रमित्येवं विधाः कर्मकालाः। यद्यपि, पुराणेषु मृत्यु-मार्कण्डेयादीनां युग-कल्पादि-परिमितं तपः स्मर्य्यते, तथापि शतसंवत्सरायुषोमनुष्यानधिकृत्य धर्मशास्त्र-प्रवृत्तेर्न युगादि-निर्णयोऽत्रोपयुक्तः। मनुष्याधिकारत्वं चास्माभिः पराशर-स्मृति-व्याख्याने, 'मनुष्याणां हितं धर्मं'—इत्यस्मिन् वचने प्रपञ्चितम्। ये तु, 'कलौ पञ्च विवर्जयेत्'—इत्यादयोमनुष्यधर्मास्तेष्वपि न युगादिकं निर्णेतव्यम्, सन्देहाभावात्। न च शतायुषामधिकारे कथं सहस्र-संवत्सर-सत्र-श्रुतिरिति शङ्कनीयम्। तत्र, संवत्सर-शब्दोदिवस-परः,—इति(१)षष्ठाध्याय-सप्तम-पादे निर्णीतत्वात्

* स्थितः,—इति क० पुस्तके पाठः।

(१) मीमांसाया इत्यादिः।

येच संवत्सरावृत्ति-साध्या अनन्त-व्रतादयस्तेष्वपि न संवत्सराधिकः कश्चित् कालो निर्णेतव्योऽस्ति। अतः, संवत्सरमारभ्यार्वाचएव निर्णेतव्याः कर्म्माङ्ग-कालाः। न च कालस्य कर्म्माङ्गत्वे विवदितव्यम्, "सायं जुहोति प्रातर्जुहोति"—इति वाक्यादङ्गत्वप्रतीतेः। तत्र, कर्म्मणस्तावद-पूर्व्व-विषयत्वात्(१) प्राधान्यमभ्युपन्तव्यम्, तथा च कालस्य गुणत्वे-नान्वयः परिशिष्यते। अत एव गर्गः,—

"तिथि-नक्षत्र-वारादि साधनं पुण्य-पापयोः।
प्रधान-गुण-भावेन स्वातन्त्र्येण न ते क्षमाः"—इति।

तस्मादङ्गभूतेषु निर्णेयेषु कालेष्ववयवित्वेन संवत्सरस्याभ्यर्हितत्वात् अल्प-वक्तव्यतया सूची-कटाह-न्यायानुसाराच्च, सएवादौ निर्णीयते,—इति स्थितम्।

॥०॥ इति माधवीये-काल-निर्णये उपोद्घात-प्रकरणम्॥०॥



## (अथ द्वितीयं वत्सर-प्रकरणम्।)

संवत्सरोनामायनाद्यवयवयुक्तोऽवयवी काल-विशेषः, सम्यक् वसन्त्य-स्मिन् अयनर्त्तुमासादयः,—इति व्युत्पत्तेः। स च द्वादशमासात्मकः। "द्वादश मासाः संवत्सरः"—इति श्रुतेः। मासानां तु, चान्द्र-सावन-सौ-राख्येन दिवस-भेदेन चान्द्रादि-त्रैविध्यं वक्ष्यते। मास-त्रैविध्येन संवत्सर-

(१) अपूर्व्वजनकत्वादिति पर्य्यवसितोऽर्थः।

स्त्रिविधः। तदुक्तं ब्रह्मसिद्धान्ते,—

"चान्द्र-सावन-सौराणां मासानां तु प्रभेदतः।

चान्द्र-सावन-सौराः स्युस्त्रयः संवत्सरा अमी"—इति।

तत्र, चान्द्रः संवत्सरः चैत्र-शुक्ल-प्रतिपदादिः फाल्गुन-दर्शान्तः, सौरस्तु मेषादिर्मीनान्तः, सावनः षष्ठ्युत्तर-शतत्रयाहोरात्रात्मकः। ते च त्रयः संवत्सराः केषु चित्कर्त्तव्येषु व्यवतिष्ठन्ते केषुचिच्च विकल्प्यन्ते। तथा च* भविष्योत्तर-पुराणे संवत्सर-साध्यं तिलकव्रतं पठ्यते,—

"वसन्ते किंशुकाशोक-शोभिते प्रतिपत्तिथिः।

शुक्ला, तस्यां प्रकुर्वीत स्नानं नियममास्थितः॥

ललाटपट्टे तिलकं कुर्य्याच्चन्दन-पङ्क-जम्।

ततः प्रभृत्यनुदिनं तिलकालङ्कृतं मुखम्॥

धार्य्यं संवत्सरं यावच्छशिनेव नभस्तलम्"—इति।

तत्र, संवत्सरश्चान्द्रोऽवगन्तव्यः। शुक्लपक्ष-प्रतिपत्तिथ्यास्तल्लिङ्गत्वात्। न हि, शुक्ल-कृष्ण-पक्षौ प्रतिपदादि-तिथयश्च सौर-सावनोपजीवनेन प्रवृत्ताः। यत्तु,—"नव वर्षाणि पञ्च च"—इत्यादौ संवत्सरस्यानन्त-व्रताद्यङ्गत्वं स्मर्य्यते, तत्रापि चान्द्र एव संवत्सरः। "शुक्लपक्षे चतुर्दश्याम्"—इत्यादिलिङ्गात्। न च, चैत्र-प्रतिपदुपक्रमाभावादचांद्रत्वं† शङ्कनीयम्। तदुपक्रमस्य संवत्सरस्य स्वल्पापेक्षत्वात्। अतएव ब्रह्म-पुराणेऽभिहितम्,—

---

* तद् यथा,—इति वि० पुस्तके पाठः।

† चैत्रशुक्लप्रतिपदि तदुपक्रमाभावादचान्द्रत्वं,—इति क० सो० मु० पुस्तकेषु पाठः।

"चैत्रे मासि जगद्ब्रह्मा ससर्ज प्रथमेऽहनि ।
शुक्लपक्षे समग्रन्तु तदा* सूर्य्योदये सति ।
प्रवर्त्तयामास तदा कालस्य गणनामपि ॥
ग्रहान्नागानृतून्मासान्† वत्सरान् वत्सराधिपान्"—इति ।

चान्द्र-सौर-सावन-शब्देषु तु प्रवृत्ति-निमित्तान्युच्यन्ते। चन्द्र-कला-वृद्धि-क्षय-प्रयुक्त-प्रतिपदादि-तिथीनां षष्ठ्यधिक-शतत्रयेण निष्पन्नो यः, स चान्द्रः। द्वादश-राशिषु सूर्य्य-संक्रमणैर्निष्पन्नो यः, स सौरः। सावन-शब्दोऽहोरात्रोपलक्षकः, सोम-यागे सवन-त्रयस्याहोरात्र-सम्पाद्यत्वात्। तैश्च सावनैः षष्ठ्यधिक-शतत्रय-सङ्ख्यैर्निष्पन्नो यः, स सावनः। एवं सति, वर्त्तमान-भाद्र-शुक्ल-चतुर्दशीमारभ्य आगामि-भाद्र-शुक्ल-चतुर्दश्याः प्राचीने तिथि-समुदाये चान्द्र-संवत्सरत्व-मविरुद्धम्।

यच्च, निरूढ-पशुबन्ध-प्रकरणे श्रूयते,—"तेन संवत्सरे संवत्सरे यजेत"—इति, "पशुना संवत्सरेणातीयात्"—इति च। तत्रापि चान्द्रएव द्रष्टव्यः। "सर्वान् लोकान् पशुबन्धयाज्यभिजयति, तेन यक्ष्यमाणोऽमावास्यायां पौर्णमास्यां वा"—इति कल्पसूत्र-कारैश्चान्द्र-तिथौ तदनुष्ठान-विधानात्। सौरस्तु संवत्सरः सुजन्मावाप्ति-व्रतादा-वुपयुज्यते‡। तच्च व्रतं विष्णुधर्मोत्तरे स्मर्य्यते,—

"भगवन् कर्मणा केन तिर्य्यग्योनौ न जायते ।

---

* समग्रन्तु तदा,—इति वि० पुस्तके पाठः।

† ग्रहान्नागान्ऋतून् मासान्,—इति भु० पुस्तके पाठः।

‡ व्रतदानादावुपयुज्यते,—इति क० वि० पुस्तकयोः पाठः।

म्लेच्छ-देशे च पुरुषस्तस्मात्स्व भोमुने—इति* ॥

मार्कण्डेय उवाच,—

मेष-संक्रमणे भानोः सोपवासो नरोत्तम ।

पूजयेद्भार्गवं देवं रामं शक्त्या† यथा विधि"—

इत्यारभ्य,—

"मीन-संक्रमणे मत्स्यं वासुदेवञ्च पूजयेत्"—

इत्यन्तेन ग्रन्थेन व्रतं विधायान्ते तदुपसंहृतम्,—

"कृत्वा व्रतं वत्सरमेतदिष्टं

म्लेच्छेषु तिर्यक्षु न चापि जन्म"—इति ।

तथा, स्कन्दपुराणे धान्यदान-व्रतं पठ्यते,—

"अथातः सम्प्रवक्ष्यामि धान्यव्रतमनुत्तमम् ।

अयनेविषुवे चैव स्नानं कृत्वा विचक्षणः"—

इत्यारभ्य व्रतं विधायैवमुपसंहृतम्,—

"एवं संवत्सरे पूर्णे कुर्यादुद्यापनक्रियाम्"—इति ।

सावनस्य सत्रादावुपयोगः । तदप्युक्तं विष्णुधर्मोत्तरे,—

"सत्राण्युपास्यान्यथ सावनेन

लोक्यं च यत्स्याद्व्यवहारकर्म"—इति ।

"गोसत्रं वै संवत्सरोय एवं विद्वान् स संवत्सरमुपयन्ति ऋध्नुवन्त्येव"—इति श्रुतौ गवामयनस्य सत्रस्य संवत्सर-नाम्ना व्यवहारात् संवत्सर-कालस्तदङ्गमिति प्रतीयते । तत्र सावनोग्रहीतव्यः, चान्द्र-सौर्य्योर्मास-

---

* 'इति' शब्दोऽत्राधिकः प्रतिभाति ।

† भक्त्या,—इति वि॰ पुस्तके पाठः ।

योस्तदनुष्ठानासम्भवात्। तथा हि,—अहोरात्रसाध्य एकः सोमयागो-वेदेष्वहःशब्देनाभिधीयते। तादृशानामहर्विशेषाणां गणः, षडहः। स च द्विविधः; अभिप्लवः पृष्ठ्यश्चेति(१)। तत्र, चत्वारोऽभिप्लवाः षडहाः, एकः पृष्ठ्यः षडहः,—इति षडह-पञ्चकेन एकोमासः सम्पद्यते। तादृशै-र्द्वादशभिर्मासैः साध्यं संवत्सरसत्रम्। तथा च, सावनेनैव तत्-सिद्धिः। चान्द्रस्य षड्भिरहोरात्रैर्न्यूनत्वात्। सौरस्य सपादैः पञ्चभिरहोरात्रैर-धिकत्वात्।

ननु, "संवत्सराय दीक्षिष्यमाणा एकाष्टकायां दीक्षेरन्"—इति माघ-मास-गतायामष्टम्यां* चान्द्रतिथौ सत्राय दीक्षा श्रूयते। ततश्चा-न्द्रेणैव संवत्सरेण भवितव्यम्। मैवम्, उक्तस्य दीक्षा-कालस्य पूर्वपक्ष-रूपत्वात्। तन्निराकरणं हि श्रूयते,—"आर्त्तं वा एते संवत्सरस्याभि-दीक्षन्ते यएकाष्टकायां दीक्षन्ते, व्यस्तं वा एते संवत्सरस्याभिदीक्षन्ते यएकाष्टकायां दीक्षन्ते"—इति।

ननु, पक्षान्तरमपि चान्द्र-तिथिमेवोपजीव्य श्रूयते,—"फल्गुनी-पूर्णमासे दीक्षेरन् मुखं वा एतत् संवत्सरस्य यत्फल्गुनी-पूर्णमासः"—इति। न, तस्यापि निराकृतत्वात्। "तस्यैकैव निर्य्या"—इति हि निराकृतम्। एकैव निर्य्या, एकएव दोष इत्यर्थः।

* गतायामष्टकायां,—इति वि० पुस्तके पाठः।

(१) प्रायणीयोऽतिरात्रः प्रथममहः चतुर्विंशोद्वितीयं, उक्थस्तृतीयं, ज्योतिर्गौः चतुर्थं, आयुर्गौः पञ्चमं, आयुर्ज्योतिः षष्ठमहः। सोऽयं षडहोऽभि-प्लव आभिप्लविकश्चोच्यते। त्रिवृत्स्तोमसाध्यं प्रथममहः, पञ्चदशस्तोमसाध्यं द्वितीयं, सप्तदशस्तोमसाध्यं तृतीयं, एकविंशस्तोमसाध्यं चतुर्थं, त्रिणवस्तोम-साध्यं पञ्चमं, त्रयस्त्रिंशस्तोमसाध्यं षष्ठमहः। सोऽयं पृष्ठ्यः षड़ह इत्युच्यते।

ननु, सिद्धान्तेऽप्येवं श्रूयते,—"चित्रा-पूर्णमासे दीक्षेरन् मुखं वा एतत् संवत्सरस्य यच्चित्रा-पूर्णमासो मुखतएव* संवत्सरमारभ्य दीक्षन्ते तस्य न काचन निर्य्या भवति चतुरहे पुरस्तात् पौर्णमासे दीक्षेरन् तेषामेकाष्टकायां क्रयः सम्पद्यते"—इति। वाढम्। अस्त्वेवमङ्गभूते दीक्षोपक्रमे चान्द्रतिथ्युपजीवनं, तथापि प्रधान-कर्म्मणि सावन-ग्रहे कोबाधः।

'नन्वस्ति बाधः, "तेषां पूर्वपक्षे सुत्या सम्पद्यते"—इति सुत्याख्ये प्रधान-कर्मणि चान्द्रस्य शुक्लपक्षस्योपजीवनात्'। उपजीव्यतां नाम शुक्लः पक्षः, तथापि यथोक्त-प्रकारेण कृत्स्नस्य प्रधान-कर्मणः सावनमन्तरेणानिर्वाहात् सएवात्र गृह्यते। अयमेव न्याय उत्सर्गिणामयने कुण्डपायिनामयने तुरायणादौ च योजनीयः। तेषां गोमत्र-विकृतित्वात्।

यत्र तु, चान्द्रादि-नियामकं नास्ति, तत्रैच्छिकोविकल्पः। तथा हि,—पिप्पलाद-शाखायामथर्वणिक-भारद्वाजादीनां षण्णां मुनीनां विद्याऽधिकार-सिद्धये गुरुणा पिप्पलादेनादिष्टं संवत्सरं वासमामनन्ति,—"भूयएव तपसा ब्रह्मचर्य्येण श्रद्धया संवत्सरं वत्स्यथ यथाकामं प्रश्नान् पृच्छत"—इति। बह्वृचास्त्वेतमेवार्थं व्यतिरेक-मुखेनामनन्ति,—"ताएताः संहिता नानन्तेवासिने प्रब्रूयान्नासंवत्सरवासिने"—इति। तैत्तिरीयाश्चारुणकेतुसंज्ञे चेष्यमाणस्यादौ त्रिषवण-स्नानादिरूपं व्रतमामनन्ति,—"संवत्सरमेतद्व्रतञ्चरेत्"—इति। एवंविधेषु

* मुख्यतएव,—इति मु० पुस्तके पाठः।

प्रदेशेषु नियामकाभावात् चान्द्रादीनामब्दानामन्यतमः इच्छया ग्रहीतव्यः।

ननु, संवत्सरस्य चान्द्र-सौर-सावन-भेदेन त्रैविध्यमेवाङ्गीकृत्य तत्स्वरूप-विनियोगावुक्तौ। तत्रैवं त्रैविध्य-नियमो न युक्तः, अन्ययोरपि नाक्षत्र-बार्हस्पत्ययोर्द्विविधयोः संवत्सरयोर्विद्यमानत्वात्। तथा ह्यायुर्वेदविदः पठन्ति,—

"सौर-बृहस्पति-सावन-चान्द्रिक*नाक्षत्रिकाः क्रमेण स्युः।

मातुल-पातालातुल-विमल-रवाङ्गास्य वत्सराः पञ्च"—इति।

अस्यायमर्थः। गणक-प्रसिद्धया ऽक्षर-सङ्ख्यया मातुल-शब्दः पञ्चषष्ट्यधिक-शतत्रयमाचष्टे। तावद्दिवस-परिमितः सौर-संवत्सरः। पाताल-शब्द एकषष्ट्यधिक-शतत्रयमाचष्टे। तावद्दिवस-परिमितो बार्हस्पत्य-संवत्सरः। अतुलशब्दः षष्ट्यधिक-शतत्रयमाचष्टे। तावद्दिवस-परिमितः सावनः संवत्सरः। विमलशब्दश्चतुःपञ्चाशदधिक-शतत्रयमाचष्टे। तावद्दिवस-परिमितश्चान्द्रः संवत्सरः। वराङ्गशब्दश्चतुर्विंशत्यधिक-शतत्रयमाह। तावद्दिवस-परिमितोनाक्षत्रिकः संवत्सरः,—इति।

एवं तर्ह्यस्तु संवत्सरः पञ्चविधः। तत्र, नाक्षत्रिकस्य ज्योतिःशास्त्र-प्रसिद्धे आयुर्दायादावुपयोगो द्रष्टव्यः। बार्हस्पत्यस्तु सिंह-बृहस्पत्यादि-विशेषमुपजीव्य गोदावर्य्यादि-स्नानादौ विनियुक्तः। अनेन बार्हस्पत्य-मानेन कदाचिदधिसंवत्सरोऽपि निष्पद्यते। तदुक्तमुत्तरसौरे,—

'गुरोर्मध्यम-संक्रान्ति-हीनोयश्चान्द्र-वत्सरः।

अधिसंवत्सरस्तस्मिन् कारयेन्न सव-त्रयम्॥

---

* शशधर,—इति वि॰ पुस्तके पाठः।

वर्ज्जनीया प्रयत्नेन प्रतिष्ठा सर्व-नाकिनाम्।

स्फुट-संक्रान्ति-हीनस्तत्केऽप्याहुरधिमासवत्"—इति।

मध्यम-गणनया गुरोः संक्रान्तिर्यस्मिंश्चान्द्र-वत्सरे न विद्यते, सोऽयमधिसंवत्सरः। तत्र, बृहस्पति-सवादिकं न कार्य्यम्। स्फुट-गणनया बृहस्पति-संक्रान्ति-रहितो यश्चान्द्रोवत्सरस्तस्मिन्नधिमासवत् काम्यादिकं वर्ज्यमिति केचिन्महर्षयोमन्यन्ते।

अथ चान्द्रस्यावान्तरभेदा उच्यन्ते। संवत्सरः परिवत्सरः इदावत्सरोऽनुवत्सरः इद्वत्सरश्चेत्येते पञ्च तद्भेदाः। तदेतत्सामान्याकारेण संवत्सरादि-पञ्चविधत्वं मासित्रचयनगताग्नि-प्रशंसक-मन्त्रे पठ्यते,—"संवत्सरोऽसि परिवत्सरोऽसि इदावत्सरोऽसि इदुवत्सरोऽसि इद्वत्सरोऽसि"—इति। इदुवत्सरोऽनुवत्सरः,—इत्यर्थः। अतएव चातुर्मास्य-ब्राह्मणे तदधिष्ठातृ-देवता-रूपत्वेनैवं श्रूयते,—"अग्निर्वाव संवत्सरः आदित्यः परिवत्सरः चन्द्रमा इदावत्सरः वायुरनुवत्सरोमहेश्वर इद्वत्सरः"—इति। ब्रह्मवैवर्त्तेऽपि,—

"संवत्सरस्तु प्रथमोद्वितीयः परिवत्सरः।

इदावत्सरस्तृतीयश्चतुर्थश्चानुवत्सरः॥

इद्वत्सरः पञ्चमस्तु तत्सञ्ज्ञोयुग-संज्ञकः"—इति।

एतेषां पञ्चानां विनियोगो विष्णुधर्मोत्तरे पठ्यते,—

"संवत्सरे तु दातृणां तिल-दानं महाफलम्।

परिपूर्व्वे तथा दानं यवानां द्विजसत्तम॥

इदापूर्व्वे च वस्त्राणां धान्यानां चानुपूर्व्वके।

इत्पूर्व्वे रजतस्यापि दानस्योक्तं महाफलम्"—इति।

तथा, तदधिष्ठातृ-देवता-पूजा-रूपोव्रत-विशेषः पठ्यते,—

"संवत्सरः स्मृतोवह्नि स्तथाऽर्कः परिवत्सरः।
इदापूर्वस्तथा सोमो ह्यनुपूर्वः प्रजापतिः॥
इत्पूर्वश्च तथा प्रोक्तो देव-देवो महेश्वरः।
तेषां मण्डल-विन्यासः प्राग्वदेव विधीयते॥
प्राग्वत्स्यात् पूजनं कार्य्यं होमः कार्य्यो यथाविधि"—इति।

प्रभवमारभ्य च्चयांतेषु षष्ठि-वर्षेषु(१) द्वादश पञ्चकानि। तत्रैकै-कस्मिन् वर्ष-पञ्चके एकैक-क्रमेण संवत्सरादयो भवन्ति। तदेतत् सर्वं ज्योतिःशास्त्रादवगन्तव्यम्।

॥०॥ इति संवत्सर-निर्णयः ॥०॥

## अथायनम्।

अयते यात्यनेन ऋतु-त्रयेण सूर्य्योदक्षिणाशामुत्तराशाञ्चेति ऋतु-त्रयमयनम्। तथा च वाजसनेयिनः पञ्चाग्नि-विद्यायां दक्षिणोत्तर-मार्गयोः समामनन्ति,—"यान् षण्मासान् दक्षिणाऽऽदित्य एति" "यान् षण्मासानुदङ्ङादित्य एति"—इति। तथा छन्दोगा अप्यधीयते,—"यान् षड्दक्षिणेति मासांस्तान्" "यान् षडुदगेति मासांस्तान्"—इति। तैत्तिरीया ऋतु-ग्रह-ब्राह्मणे पठन्ति,—"तस्मादादित्यः षण्मासान् दक्षिणेनेति षडुत्तरेण"—इति। एवं चादित्य-गतिमुपजीव्यायन-निष्पत्तेः सौरमेवैतत्। अतएव विष्णुधर्मोत्तरे सौर-मानमधिकृत्यो-

---

(१) त इमे षष्ठिवर्षाः वार्हस्पत्या इति बोद्धव्यम्।

णम्,—"ऋतु-वयस्त्वायनं स्यात्"—इति। केचित्तु चान्द्र-मानेनायन-द्वयमभ्युपगच्छन्ति। मार्गशीर्षादिकैस्त्रिभिर्ऋतुभिः कल्पितः कालः षण्मासात्मकमुत्तरायणम्*। ज्येष्ठमासादिस्त्वैर्दक्षिणायनम्,—इति। तत्र प्रमाणं ज्योतिःशास्त्रादौ मृग्यम्। श्रौत-स्मार्त्त-कर्म्मानुष्ठाने तु मकर-कर्कट-संक्रान्त्यादिक एवायन-द्वय-कालः,—इति यथोक्त-श्रुति-स्मृति-भ्यामवगन्तव्यम्। उत्तरायणस्य यागकर्म्माङ्गत्वं काण्वा अधीयते,—"उदगयने आपूर्य्यमाण-पक्षस्य पुण्याहे द्वादशाहमुपसद्व्रती भूत्वा"—इत्यादि। चौलादीनामुत्तरायण-कर्त्तव्यता गृह्य-स्मृतिषु प्रसिद्धा। सत्यव्रतस्य देवता-प्रतिष्ठादीनामुत्तरायण-दक्षिणायनयोर्विधि-निषेधावाह,—

"देवताऽऽराम-वाप्यादि-प्रतिष्ठोदङ्मुखे रवौ।

दक्षिणाशा-मुखे कुर्व्वन् न तत्-फलमवाप्नुयात्"—इति।

उदङ्मुखे उदग्गते,—इत्यर्थः। उग्र-देवतानां प्रतिष्ठा दक्षिणायने कर्त्तव्या। तथा च वैखानस-संहितायामभिहितम्,—

"मातृ-भैरव-वाराह-नरसिंह-त्रिविक्रमाः।

महिषासुर-हन्त्री च स्थाप्या वै दक्षिणायने"—इति।

एवं विष्णुधर्म्मोत्तराभिहितानि पदद्वय-व्रतादीन्ययन-कर्त्तव्यान्युदाहार्य्याणि।

॥०॥ इत्ययन-निर्णयः ॥०॥

---

* षण्मासात्मक उत्तरायणः कालः,—इति वि॰ पुस्तके पाठः।

## अथर्त्तवः ।

ऋतु-शब्दः, "ऋ गतौ"—इत्यस्माद्धातोर्निष्पन्नः। इयर्त्ति गच्छति अशोकपुष्प-विकासादि असाधारण-लिङ्गमिति वसन्तादि-कालविशेष ऋतुः। स च षड्विधः, "षड्वा ऋतवः"—इति श्रुतेः। यत्तु, "द्वादश मासाः पञ्चर्त्तवः"—इति श्रुतम्। तत्र, हेमन्त-शिशिरयोरेकीकरणं विवक्षितम्। याजमानेषु पञ्चप्रयाजानुमन्त्रण-मन्त्रेषु हेमन्त-शिशिर-योरेकस्मिन् मन्त्रे एकेनैव* पदेनैकीकरणोक्तेः। तथा हि,—"वसन्त-मृतूनां प्रीणामि। ग्रीष्ममृतूनां प्रीणामि। वर्षाऋतूनां प्रीणामि। शरदमृतूनां प्रीणामि"—इति चतुर्णां प्रयाजानां पृथक् पृथगनु-मन्त्रणमन्त्रानाम्नाय, पञ्चम-प्रयाजस्यानुमन्त्रणमन्त्र एवं श्रूयते,—"हेमन्तशिशिरावृतूनां प्रीणामि"—इति। एतदेवाभिप्रेत्य बह्वृच-ब्राह्मणे,—"द्वादश मासाः पञ्चर्त्तवोहेमन्त-शिशिरयोः समासेन"—इति। यत्त्वनयोर्मन्त्र-ब्राह्मणयोर्द्विवचनं, तत्स्वरूप-द्वैविध्याभिप्रायेण। शिशिरस्य षष्ठस्यान्तिमत्वात्, तेनानुमन्त्रणीयस्य षष्ठ-प्रयाजस्याभावाच्च, तस्यैव पञ्चमे हेमन्तेऽन्तर्भावो न्याय्यः। अतएव प्रयाज-ब्राह्मणे, "वसन्त-मेवर्त्तूनामवरुन्धे"—इत्यादिना चतुरः प्रयाजान् प्रशस्य, पञ्चमे प्रयाजे केवलेन हेमन्तेन प्रशंसा,—"स्वाहाकारं यजति हेमन्तमेवावरुन्धे,—इति।

अस्तु नाम यथा तथा पञ्च-सङ्ख्या, यथोक्त-स्वरूपेण तु† षोढा भिद्यते। द्वादश-मासात्मके संवत्सरे एकैकस्य ऋतोर्मास-द्वयात्म-

---

* एकैकस्मिन्नेकैकेन,—इति मु॰ पुस्तके पाठः।

† सर्व्वथा यथोक्तस्वरूपेण,—इति वि॰ पुस्तके पाठः।

कले सति एकादश-द्वादश-मासयोर्वर्जयितुमशक्यत्वात्। षष्ठ्यां पृथ-गनुष्ठान-विधानाच्च। तच्चोपरिष्टादुदाहरिष्यामः। मास-द्वयात्मकत्वं चाग्निचयने ऋतव्येष्टकोपधान-ब्राह्मणे श्रूयते,—"द्वन्द्वमुपदधाति, तस्माद्द्वन्द्वमृतवः"—इति। एकस्मिन्नृतौ कयोर्मासयोर्द्वन्द्वं ग्रहीतव्य-मिति चेत्। वसन्ताद्यनुक्रमेण चैत्र-मासादि-द्वन्द्वमिति ब्रूमः। तच्चेष्ट-कोपधान-मन्त्रेषु श्रूयते,—"मधुश्च माधवश्च वासन्तिकावृतू, शुक्रश्च शुचिश्च ग्रैष्मावृतू, नभश्च नभस्यश्च वार्षिकावृतू, इषश्चोर्जश्च शारदा-वृतू, सहश्च सहस्यश्च हैमन्तिकावृतू, तपश्च तपस्यश्च शैशिरावृतू"। एषु च वाक्येषु 'ऋतू'—इति द्विवचनं ऋत्ववयव-मासाभिप्रायम्। अन्यथा, 'षडृतवः'—इति श्रूयमाणा षट्सङ्ख्या बाध्येत। अवयविन ऋतोर्वस-न्तादेरेकात्मकत्वं, सौत्रामणीय-हौत्र-मन्त्रेष्वेकवचनेन व्यवहारादवग-न्तव्यम्। "वसन्तेनर्तुना देवाः ग्रीष्मेणर्तुना देवाः"—इत्यादि हि तत्र पठ्यते। तथैवाधान-ब्राह्मणे श्रूयते,—"वसन्तो वै ब्राह्मणस्यर्तुर्ग्रीष्मो वै राजन्यस्यर्तुः शरद् वैश्यस्यर्तुः"—इति।

यद्यप्येते षडृतवो घटीयन्त्र-घटवन्निरन्तर्य्येणावर्त्तन्ते, तथापि संवत्स-रोपक्रमरूपत्वेन वसन्तस्य प्राथम्यं द्रष्टव्यम्। एवदेवाभिप्रेत्य श्रूयते,— "मुखं वा एतदृतूनां यद्वसन्तः"—इति। पूर्वोदाहृतेषु मन्त्र-ब्राह्मणेषु सर्व्वत्र वसन्तोपक्रम-पाठाच्च वसन्तस्य प्राथम्यम्।

ते च वसन्ताद्यृतवो द्विविधाः; चान्द्राः सौराश्च। चैत्रादयश्चान्द्राः। तच्चोदाहृतं "मधुश्च माधवश्च"—इत्यादिना। न च, तत्र चैत्रादयो-नोक्ताः,—इति शङ्कनीयम्। मध्वादिशब्दानां चैत्रादि-पर्य्यायत्वात्। अतएवाहुः,—

"चैत्रोमासोमधुः प्रोक्तो वैशाखोमाधवो भवेत्।
ज्यैष्ठमासस्तु शुक्रः स्यादाषाढः शुचिरुच्यते॥
नभोमासः श्रावणः स्यान्नभस्योभाद्र उच्यते।
इषस्त्वाश्वयुजोमासः कार्त्तिकस्त्वोर्ज-संज्ञकः॥
सहोमासोमार्गशिरः सहस्यः पुष्य-नामकः॥
माघमासस्तपाः प्रोक्तस्तपस्यः फाल्गुनः स्मृतः"—इति।

एतेषां चैत्राद्यात्मकानां वसन्तादीनां चन्द्र-गति-परिकल्पितत्वात्चान्द्रत्वम्। अतएव होतृ-मन्त्रेष्वाम्नायते,—"चन्द्रमाः षड्ढोता स ऋतून्* कल्पयति"। तथा,सूक्त-विशेषे सूर्य्याचन्द्रमसौ प्रकृत्याम्नायते,—

"पूर्व्वापरं चरतो† मायथैतौ
शिशू क्रीडन्तौ‡ परियातो अध्वरम्।
विश्वान्यन्योभुवनाभिचष्ट—
ऋतूनन्यो§ विदधज्जायते पुनः"—इति।

अत्र,'पुनर्जायते'—इति लिङ्गादृतु-विधाता चन्द्रः,—इत्यवगम्यते। ननु,अस्त्वेवं मध्वादीनां द्वादशानां चान्द्र मासानां वसन्ताद्यृतुत्वम्, संसर्पाख्यस्य तु त्रयोदशस्य चान्द्र-मासस्य कथमृतुषु निर्वाहः? तन्मास-सद्भावश्च चतुर्धह-ब्राह्मणे मन्त्रानुवाद-पुरःसरमाम्नायते,—"उपयाम गृहीतोऽसि संसर्पोऽस्यंहस्पत्याय त्वेत्यंहास्ति त्रयोदशोमास

---

* षण्मासकतून्,—इति क० वि० पुस्तकयोः पाठः।
† चरन्तौ,—इति क० वि० पुस्तकयोः पाठः।
‡ क्रीलन्तौ,—इति मु० पुस्तके पाठः। शिशुक्रीड़न्तौ,—इति तु क० वि० पुस्तकयोः।
§ ऋतुरन्यो,—इति क० पुस्तके पाठः।

इत्याद्युक्तमेव तन्नीणाति"—इति । तथाच प्रवर्ग्य-ब्राह्मणेऽपि,—"अस्ति त्रयोदशोमास इत्याहुः, यत्त्रयोदशः परिधिर्भवति तेनैव त्रयोदशं मासमवरुन्धे"— इति । तदुत्पत्ति-प्रकारस्त्वस्माभिर्मलमास-निर्णये वक्ष्यते ।

विद्यतां एवं त्रयोदशोमासः, तस्य काऽनुपपत्तिर्वसन्ताद्यृतुष्विति चेत् । उच्यते । किमयं सप्तमऋतुः, आहोस्विदुक्तेष्वेव षट्स्वन्तर्भूतः, उतर्तुद्वयान्तरालवर्ती कश्चिदनृतु-रूपः? न तावत्पश्चिमः, "ऋतुर्ऋतुना नुद्यमानः*"—इति ऋतूनां नैरन्तर्य-श्रवणात् । नाप्यग्रिमः, "षट् वा ऋतवः"—इति षट्सङ्ख्या-नियमात् । वसन्तादिवन्मन्त्रब्राह्मणयोर्नामान्तराश्रवणाच्च । नापि मध्यमः, मध्वादिष्वपाठात् । उच्यते । ययोर्मासयोर्मध्ये मलमासोदृश्यते, तयोरुत्तरस्मिंस्तस्यान्तर्भावः । तथा चासौ षष्टि-दिवसात्मको मलिन-शुद्ध-भाग-द्वयात्मकः,—इति मध्वादि-शब्द-वाच्यत्वेनोक्तेष्वन्तर्भावान्न काऽप्यनुपपत्तिः ।

सौरेष्वृतुषु बौधायनेन,—"मीनमेषयोर्मेष-वृषयोर्वा वसन्तः"—इत्यभिधानात् मीनादित्वं मेषादित्वञ्च वैकल्पिकं वसन्तस्याङ्गीकृतम् । तथा च, तदनुसारेण उत्तरे ग्रीष्मादयोऽपि यथायथं विकल्प्यन्ते । विनियोगस्त्वेषामृतु-विशेषाणां श्रुति-स्मृति-पुराणेष्ववगम्यते । तत्र, श्रुतिः,—"वसन्ते ब्राह्मणोऽग्नीनादधीत ग्रीष्मे राजन्य आदधीत शरदि वैश्य आदधीत"—इत्यादि । स्मृतिरपि,—"वसन्ते ब्राह्मणमुपनयीत ग्रीष्मे राजन्यं शरदि वैश्यम्"—इति । विष्णुधर्मोत्तरेऽपि षण्मूर्त्तिव्रते

---

* नुद्यमान,—इति क॰ पुस्तके पाठः ।

वसन्ताद्यृतुषु षट्सु पृथक् पूजा-विशेषाः कथिताः । तथा तत्रैव, वसन्ते स्नानानुपलेपनादि-दानं, ग्रीष्मे पानक*दानादि चोक्तम् । देवीपुराणे वर्षासु तिल-दानमुक्तम् । तथा, शरद्यन्न-दानम्, हेमन्तेऽग्नि-दानम्, शिशिरे वस्त्र-दानम्,—इत्येतानि विष्णुधर्मोत्तरएवोक्तानि । एवमन्यदप्युदाहार्य्यम् ।

॥०॥ इत्यृतु-निर्णयः ॥०॥

## अथ मास-निर्णयः ।

तत्र, सकारान्तं मासिति प्रातिपदिकं चन्द्रवाचि, तस्यायं काल इति मासः । तदीयत्वं च, पञ्चदशानां कलानां वृद्धि-क्षय-द्वारेणावगन्तव्यम् । यदीदं मासत्वं सौर-सावनयोरनुगतं†, तर्ह्येवमस्तु; "मस परिमाणे"—इत्यस्माद्धातोर्निष्पन्नोऽयं मासशब्दः । मस्यते परिमीयते यावता कालेन चन्द्र-वृद्धि-क्षयौ, स चान्द्रोमासः । यद्वा, चन्द्र-वृद्धि-क्षयाभ्यां स्वयं मस्यते,—इति मासः । तथा च, सिद्धान्तशिरोमणौ पठ्यते,—

"मस्यन्ते परिमीयन्ते स्व-कालाः‡ वृद्धि-हानितः ।
मासएते स्मृतामासास्त्रिंशत्तिथि-समन्विताः"—इति ।

सूर्यस्य राशि-गतिर्यत्र परिमीयते, स सौरः । अहोरात्राणां त्रिंशत् सङ्ख्या परिमीयते यत्र, स सावनः । तदुक्तं ब्रह्मसिद्धान्ते,—

---

* पादुका,—इति वि॰ पुस्तके पाठः ।
† यदीदं मासत्वं सौरानुगतं वक्तव्यं,—इति क॰ पुस्तके पाठः ।
‡ स्वकलाः,—इति क॰ मु॰ पुस्तकयोः पाठः ।

"चान्द्रः शुक्लादि-दर्शान्तः सावनस्त्रिंशता दिनैः।

एकराशौ रविर्यावत्कालं मासः स भास्करः"—इति।

नाक्षत्रमपि मासं केचिदिच्छन्ति,

"सर्व्वर्क्ष-परिवर्त्तैस्तु नाक्षत्रोमास उच्यते"—

इति विष्णुधर्म्मोत्तरेऽभिधानात्। तत्रापि, सप्तविंशति-सङ्ख्या परिमीयते अनेनेति मासशब्दोयोजनीयः।

तत्र, सौर-मासस्याद्यन्तौ मेषादि-राशीनामाद्यन्ताभ्यां व्यवस्थितौ, सावने पुरुषेच्छादिर्नियामकः, नाक्षत्रे नक्षत्रं नियामकम्। चान्द्रस्तु, दर्शान्तः पूर्णिमाऽन्तोवेति द्विधा विकल्प्यते। तथा च श्रूयते,—"अमावास्यया मासान् सम्पाद्याहरुत्सृजन्त्यमावास्यया हि मासान् सम्पश्यन्ति, पौर्णमास्या मासान् सम्पाद्याहरुत्सृजन्ति पौर्णमास्या हि मासान् सम्पश्यन्ति"—इति।

अस्य वाक्यस्यायमर्थः। अस्ति किञ्चिदुत्सर्गिणामयनं नाम सत्रम्। तच्च गवामनयनस्य विकृतिः। अतो द्वादशमासेष्वनुष्ठेयम्। प्रकृतावेकैकस्मिन्मासे त्रिंशत्स्वहःसु सोम-यागविशेषाणां त्रिंशतामनुष्ठेयत्वान्न किञ्चिदप्यहरुत्स्रष्टुं शक्यते। तद्विकृतावपि प्राप्तौ प्रातमासमेकैकस्मिंस्तस्मिन् सोम-याग-परित्यागो विधीयते। तत्र, कतमदहस्त्यज्यतामिति वीक्षायामिदमुच्यते। अमावास्यायामनुष्ठेयेन यागेन पूर्व्वमासं परिसमाप्योत्तरस्यादिभूतमहस्त्यज्यतामिति विधायार्थवादे प्रसिद्धवाचिना हि-शब्देन मासस्यामावास्यान्तत्वं प्रत्यक्ष-दृष्टवत् सर्व्वेषां सम्मतमिति द्रढयति। एवं पौर्णमासी-वाक्येऽपि योज्यमिति।

पौर्णमास्यन्तत्वे श्रुतेः कटाक्षो भूयान्। "यो वै पूर्ण आसिञ्चति"—

इत्यादिना, "यज्ञेन यज्ञं प्रत्यवरोहन्ति"—इत्यन्तेनार्थवाद-प्रपञ्चेन सदृष्टान्तान्वय-व्यतिरेक-युक्तेन प्रपञ्चितत्वात्।

ननु, नोदाहृतं वाक्यं मासान्तस्य नियामकं, अतिप्रसङ्गात्। तथा हि, तस्यैवानुवाकस्यादौ पक्षान्तरमुपन्यस्तम्,—"षड्भिर्मासान् सम्पाद्याहरुत्सृजन्ति षड्भिर्मासान् सम्पश्यन्ति"—इति। तत्र, पूर्व्व-न्यायेन षष्ठमहर्मासान्तः,—इति प्रसज्येत।

अथ मन्यसे,—षड्भिरिति बहुवचन-निर्देशात् पञ्चभिः षड्भिरिति व्याख्यायां न कोऽपि विरोधः,—इति। एवमप्यन्यत्रातिप्रसङ्गो दुर्व्वारः। तथा च वाक्यान्तरं श्रूयते,—"अर्द्धमासैर्मासान् सम्पाद्याहरुत्सृजन्ति अर्द्धमासैर्मासान् सम्पश्यन्ति"—इति। अत्रैकैकार्द्धमास-स्वीकारे पञ्चदश-मासत्व-प्रसङ्गः। बह्वर्धमास-स्वीकारे पक्ष-त्रयादेर्मासत्व-प्रसङ्गः। किञ्च, पूर्व्वोक्तोऽप्यतिप्रसङ्गो दुःपरिहर एव। षड्भिरित्यत्र षडह-पञ्चक-स्वीकारासम्भवात्। एकैकस्य षडहस्य स्वीकर्त्तव्यत्वात्। उत्तरानुवाके,—"षड्भिर्मासान् सम्पाद्य यत् सप्तममहस्तस्मिन् सृजेयुः"—इति सप्तमत्व-विशेषणात्। तस्मादतिप्रसङ्ग-द्वय-ग्रस्तत्वात् न पूर्व्वोक्तोमासान्तः।

अत्रोच्यते। श्रुति-स्मृति-लोक-प्रसिद्धिभ्यो मासशब्दस्त्रिंशद्दिन-समूहे रूढः। श्रुतयः संवत्सरायनर्त्तु-विषयाः पूर्व्वमुदाहृताः। तत्र, संवत्सरस्य द्वादशोभागोमासः। अयनस्य षष्ठोभागः। ऋतुषु द्वयोर्भागयोरन्यतरः। स्मृतयस्तु,—

"माने मासस्तु नाक्षत्रे सप्तविंशतिभिर्दिनैः।
परिशेषेषु मानेषु मासस्त्रिंशद्दिनैः स्मृतः॥
चान्द्रः शुक्लादि-दर्शान्तः * * * *"—

इत्यादयः। लोकेऽप्याविद्वदङ्गना-गोपालं मासस्य त्रिंशद्दिनात्मकत्वं प्रसिद्धम्। एवं सति, "अर्द्धमासैर्मासान्"—इत्यत्र मासशब्दो मासैकदेशं लक्षयति। षडहैरित्यत्र, षडहः-पञ्चक-विवक्षायां न काचिदनुपपत्तिः। एकैक-षडह-विवक्षायां पूर्ववदेकदेश-लक्षणा। अतोऽतिप्रसङ्गाभावादुक्तवाक्याभ्यां मासस्यामावास्याऽन्तत्वं पौर्णमास्यन्तत्वं च विकल्प्यते।

तत्र, प्रथम-पक्षे, "चान्द्रः शुक्लादि-दर्शान्तः"—इत्यादि-स्मृतय उदाहार्य्याः। शिष्टाचार-बाहुल्यं च तत्र प्रसिद्धम्। द्वितीय-पक्षस्योपोद्बलकं श्रुति-लिङ्गं स्मृति-लिङ्गं च। आथर्वणिकाः सृष्टि-प्रकरणे संवत्सर-दक्षिणोत्तरायण-सृष्टिमाम्नाय मास-पक्ष-सृष्टिमेवमामनन्ति,—"मासो वै प्रजापतिः तस्य कृष्ण-पक्षएव रयिः शुक्लः प्राणः"—इति। तत्र, कृष्ण-पक्षस्य प्राथम्ये पाठोलिङ्गम्। स्मृतौ महालय-प्रकरणे पठ्यते,—

"अश्वयुक्-कृष्णपक्षे तु श्राद्धं कार्य्यं दिने दिने"—इति।

तत्र यदि, दर्शान्तोमासो विवक्ष्येत, तदा 'भाद्रपद-कृष्णपक्षे'—इत्युच्येत। नत्वेवमुक्तम्। आश्विन*मासान्तर्गतत्वन्त्विहोच्यते। तस्, कृष्णपक्षादि-पूर्णिमांतत्वं सम्भवति। तथा च जयन्ती-प्रकरणे स्मर्य्यते,—

"मासि भाद्रपदेऽष्टम्यां कृष्णपक्षेऽर्द्धरात्रके।
भवेत्प्रजापतेर्ऋक्षं जयन्ती नाम सा स्मृता"—इति।

अत्रापि, जयन्त्याभाद्रपदान्तर्गतत्वं मासस्य पूर्णिमांतत्वं† गमयति। शिष्टाचार-विशेषादपि‡ पूर्णिमांतत्वं द्रष्टव्यम्। यतिधर्म-प्रकरणे

* आश्वयुज,—इति वि॰ पुस्तके पाठः।
† भाद्रपदान्तर्गतत्वं मासस्य पूर्णिमान्तर्गतत्वं,—इति वि॰ पुस्तके पाठः।
‡ शिष्टाचारभेदात्तदपि,—इति वि॰ पुस्तके पाठः।

स्मर्य्यते,—"ऋतु-सन्धिषु वापयेत्"—इति। तत्र, यदि दर्शान्त-विवक्षा स्यात्, तदा दर्शस्यैव सन्धित्वात् तत्रैव वपनं कुर्य्युः। कुर्व्वन्ति तु पूर्णिमायाम्। तस्माद्दर्शान्तत्व-पूर्णिमांतत्वयोः समोविकल्पः। अनुष्ठाने तु तत्तद्वचन-विशेषाच्छिष्टचाराच्च, व्यवस्था द्रष्टव्या। वचन-विशेषस्तु ब्रह्म-सिद्धान्ते पठ्यते,—

"अमावास्या-परिच्छिन्नोमासः स्याद् ब्राह्मणस्य तु।
संक्रान्ति-पौर्णमासीभ्यां तथैव नृप-वैश्ययोः"—इति।

दर्शान्तानां पूर्णिमान्तानां वा मास-विशेषाणां चैत्रादि-संज्ञा नक्षत्र-प्रयुक्ता। यस्मिन्मासे पूर्णिमा चित्रा-नक्षत्रेण युज्यते, स चैत्रः। एवं वैशाखादिषून्नेयम्। चित्रा-विशाखादि-योगस्योपलक्षणत्वात् क्वचित् चित्रादि-प्रत्यासन्न-स्वात्यनुराधादि-योगेऽपि चैत्र-वैशाखादि-संज्ञा न विरुध्यते। चैत्रादि-श्रावणान्तानां* चित्रादि-नक्षत्र-द्वन्द्वं प्रयोजकम्, भाद्रपदाश्वयुजोस्तु शतभिषा-रेवत्यादिकं† त्रिकम्, कार्त्तिकादि-माघान्तानां कृत्तिकादि-द्वन्द्वम्, फाल्गुनस्य तु पूर्वफल्गुन्यादि-त्रयम्,—इति विवेकः। तथाच सङ्कर्षणकाण्डे,—

"द्वे द्वे चित्रादि-ताराणां परिपूर्णेन्दु-सङ्गमे।
मासाश्चैत्रादयोज्ञेयाः त्रिकैः षष्ठान्त्यसप्तमाः"- इति।

अन्यत्रापि,—

"अन्त्योपान्त्यौ त्रिभौ ज्ञेयौ फाल्गुनश्च त्रिभोमतः।
शेषामासाद्विभाज्ञेयाः कृत्तिकादि-व्यवस्थया"—इति।

---

* चैत्रादिश्रावणान्तानां पञ्चानां,—इति वि० पुस्तके पाठः।
† शतभिषग्रेवत्यादिकं,—इति सु० पुस्तके पाठः।

तत्र, मास-सामान्य-कर्त्तव्यानि तैत्तिरीया आमनन्ति,—"मसि मासि पितृभ्यः क्रियते, मासि मासि पृष्ठान्युपयन्ति मासि मास्यतिग्राह्या गृह्यन्ते"—इति। पृष्ठानि स्तोत्र-विशेषाः, अतिग्राह्या ग्रह-विशेषाः। शाखान्तरेऽपि कुण्डपायिनामयने,—"मासमग्निहोत्रं जुहोति"—इति।

मास-विशेषानुपजीव्य कर्त्तव्य-विशेषं कल्पसूत्रकाराः पठन्ति,—"अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति"—इति। "फाल्गुन्यां पौर्णमास्यां चैत्र्यां वा वैश्वदेवेन यजते, ततश्चतुर्षु मासेषु आषाढ्यां श्रावण्यां वोदवसाय वरुणप्रघासैर्यजेत"—इत्यादि। स्मार्त्तास्तु पद्मपुराणाद्युक्त-गौरीव्रतादयश्चैत्रमासादिषु क्रमेण कर्त्तव्याः। ते च हेमाद्रौ व्रतखण्डे द्रष्टव्याः। तथा विष्णुधर्मोत्तरे, तिलदानादीनि माघमासादिषु कर्त्तव्यानि। तानि च दानखण्डे द्रष्टव्यानि। चान्द्र-सौर-सावन-मासानां मध्ये कस्यचित् क्वचित् प्रशस्तत्वं द्रष्टव्यम्। तदुक्तं ज्योतिर्गर्गे,—

"सौरोमासो विवाहादौ यज्ञादौ सावनः स्मृतः।
आब्दिके पितृकार्य्ये च चान्द्रोमासः प्रशस्यते"—इति।

॥०॥ इति शुद्धमास-निर्णयः ॥०॥

---

## अथ मलमास-निर्णयः।

तस्य स्वरूपं ब्रह्मसिद्धान्तेऽभिहितम्,—

"चान्द्रोमासोह्यसंक्रान्तो मलमासः प्रकीर्त्तितः"—इति।

मलत्वन्तु कालाधिक्यात्। तथाच गृह्यपरिशिष्टे,—

"मलं वदन्ति कालस्य मासं कालविदोऽधिकम्"—इति।

कालाधिक्यञ्च विष्णुधर्मोत्तरे दर्शितम्,—

"सौरेणाब्दस्तु मानेन यदा भवति भार्गव ।
सावने तु तदा माने दिन-षट्कं प्रपूर्यते ।
दिनरात्रास्च ते राम प्रोक्ताः संवत्सरेण षट् ॥
सौर-संवत्सरस्यान्ते मानेन शशिजेन तु ।
एकादशातिरिच्यन्ते दिनानि भृगुनन्दन ॥
समाद्वये साष्टमासे तस्मान्मासोऽतिरिच्यते ॥
सचाधिमासकः प्रोक्तः काम्य-कर्मसु गर्हितः"—इति ।

अयमर्थः । सौरसंवत्सरः षड्भिर्दिनैः सावनादतिरिच्यते । एकादश-भिर्दिनैश्चान्द्रादतिरिच्यते । तथाच, चान्द्र-संवत्सर-द्वयात् सौर-संवत्सर-द्वयं द्वाविंशत्या दिनैरधिकं भवति । तत ऊर्द्धं सौरं मासाष्टकं चान्द्रान् मासाष्टकात् सार्द्धैः सप्तभिर्दिनैरतिरिच्यते । तथाच, मिलित्वा दिनार्द्ध-न्यूनोमासो भवति । सोऽयमधिकोमासः,—इति । अवशिष्ट-दिनार्द्ध-पूरणञ्च यथोक्तकालादूर्ध्वं षोडशभिर्दिनैः सम्पद्यते । अतएव सिद्धान्ते-ऽभिहितम्,—

"द्वात्रिंशद्भिर्गतैर्मासैर्दिनैः षोडशभिस्तथा ।
घटिकानां चतुष्केन पतति ह्यधिमासकः"—इति ।

न च, कालाधिक्यमात्रेण मलत्वे तिथ्यादि-वृद्धेरपि मलत्वं प्रसज्येत,—इति शङ्कनीयम् । कालाधिक्ये सति नपुंसकत्वेन मलत्वा-ङ्गीकारात् । नपुंसकत्वञ्च ज्योतिःशास्त्रे अभिहितम्,—

"असंक्रान्तो हि यो मासः कदाचित्तिथि-वृद्धितः ।
कालान्तरात् समायाति स नपुंसक इष्यते"—इति ।

पुरुषस्य सूर्य्यस्य तत्राभावान्नपुंसकत्वम् । तदपि तत्रैवोक्तम् ,—

"अरुण: सूर्य्यो भानुस्तपनश्चन्द्रो रविर्गभस्तिश्च ।
अर्यमा हिरण्यरेतादिवाकरो मित्र-विष्णू च ॥
एते द्वादश सूर्य्या माघाद्येषूदयन्ति मासेषु ।
नि:सूर्य्योऽधिकमासो मलिम्लुचाख्यस्तत: पाप: ॥
मासेषु द्वादशादित्यास्तपन्ते हि यथाक्रमम् ।
नपुंसकेऽधिके मासि मण्डलं तपते रवे:"—इति ।

मलिम्लुचत्वञ्च तस्य रात्त्रसैस्तस्करैराक्रान्तत्वात् । तदाह शातातप:,—

"वत्सरान्तर्गत: पापो यज्ञानां फलनाशकृत् ।
नैर्ऋतैर्यातुधानाद्यै: समाक्रान्तो विनाशकै: ॥
मलिम्लुचै: समाक्रान्तं सूर्य्य-संक्रान्ति-वर्जितम् ।
मलिम्लुचं विजानीयात् सर्वकर्मसु गर्हितम्"—इति ।

ननु, 'द्वात्रिंशद्भिर्गतैर्मासै:'—इत्यनेन वचनेन येयं कालेयत्ता दर्शिता, सा वचनान्तरेण विरुध्यते । तथाच काठकगृह्यम्,—

"यस्मिन्मासे न संक्रान्ति: संक्रान्ति-द्वयमेव वा ।
मलमास: सविज्ञेयो मासे त्रिंशत्तमे भवेत्"—इति ।

नायं दोष: । द्वयोर्वचनयोर्भिन्न-विषयत्वात् । ज्योति:शास्त्र-प्रसिद्ध-मध्यममानमाश्रित्य "द्वात्रिंशद्भि:"—इति वचनं प्रवृत्तम् । "यस्मिन् मासे"—इति तु स्फुटमानमाश्रित्य प्रवृत्तम् ।

ननु, मध्यम-मान-प्रवृत्तोऽधिकमासो ज्योति:शास्त्र-व्यवहारएवोपयुज्यते न तु श्रौत-स्मार्त्तयोस्तस्य शुक्लप्रतिपदादि-दर्शान्तत्व-नियमासम्भवात् । षोड़शभिर्दिनै र्घटिकाचतुष्टयेन चोपेतेषु द्वात्रिंशन्मासेषु

गतेषु सोऽधिमासो विधीयते। तत्र, यदि दर्शान्तामासा विवक्षिताः, तदा कृष्ण-द्वितीयायां घटिका-चतुष्टये गते अधिमासस्योपक्रमः प्रसज्येत। अथानियतोपक्रमावसाना द्वात्रिंशन्मासाविवक्ष्येरन्, तदापि शुक्लप्रतिपदादि-दर्शान्तोमासः,—इत्येष नियमो न लभ्यते। श्रौत-स्मार्त्तव्यवहारोपयोगिनि त्वधिकमासेऽस्ति नियमः। तथाच लघु-हारीतः,—

"इन्द्राग्नी यत्र हूयेते मासादिः स प्रकीर्त्तितः।
अग्नीषोमौ स्मृतौ मध्ये समाप्तौ पितृसोमकौ॥
तमतिक्रम्य तु यदा रविर्गच्छेत् कदाचन।
आद्योमलिम्लुचोज्ञेयो द्वितीयः प्रकृतः स्मृतः"—इति।

अयमर्थः। दर्शपूर्णमासयाजिना शुक्लप्रतिपदि दर्शेष्टि-देवाविन्द्राग्नी हूयेते, कृष्णप्रतिपदि तु पूर्णमासेष्टि-देवावग्नीषोमौ, अमावास्यायां पिण्डपितृयज्ञ-देवौ पितृसोमकौ। तत्रैवं सति, शुक्लप्रतिपदादि-दर्शान्तोमासः संक्रान्ति-रहितोऽधिमासः,—इत्यर्थाल्लभ्यते इति। तस्मान्मध्य-ममान-गणना श्रौत-स्मार्त्तयोर्नोपयुक्ता। बाढम्। तथापि, कालाधि-क्यान् मलमासः,—इत्यस्मिन्नंशे तदुदाहरणमित्यदोषः। यत्तु,—'मासे त्रिंशत्तमे भवेत्'—इत्युदाहृतं, तत् श्रौत-स्मार्त्तयोरुपयुज्यते। स्फुट-मान-सिद्धत्वात्।

तादृशञ्चाधिमासमुदाहरामः,—अष्टपञ्चाशत्-युक्त-शतद्वयाधिके शकवर्षाणां सहस्रे गते सति यमनन्तरभावी योऽयमीश्वर-संवत्सरस्तस्मिन् श्रावणमासोऽधिकः। ततः पूर्व्वभावी योभावसंवत्सरस्तस्मिन् फाल्गुन-मासोऽधिकः। तयोः संवत्सरयोर्मध्यवर्त्तिनौ यौ युव-धातृ-संवत्सरौ,

तदाद्याश्चतुर्विंशतिमासा ईश्वरसंवत्सरे च चत्वारश्चैत्राद्याः। तथा सति, यथोक्तफाल्गुनमारभ्य गणनायां यथोक्तः श्रावणमासस्त्रिंशत्तमो भवति। अनेन न्यायेन षष्टिमासात्मकेषु पञ्चसु वत्सरेषु द्वावधिकमासौ सम्पद्येते। तदुक्तं महाभारते,—

"पञ्चमे पञ्चमे वर्षे द्वौमासावधिमासकौ।

तेषां कालातिरेकेण ग्रहाणामतिचारतः"—इति।

ननु, अधिकमासस्य क्वचित्त्रिंशत्तमत्त्वं व्यभिचरति, न्यूनाधिकमच्छाया अपि दर्शनात्। तथा हि,—यथोक्तेश्वर-संवत्सरोत्तर-भाविनि चित्रभानु-संवत्सरे वैशाखमासोऽधिकः। तत उत्तरभाविनि तारण-संवत्सर-व्यवहिते पार्थिव-संवत्सरे भाद्रपदमासोऽधिकः। तथाच, तस्यैकोनत्रिंशत्त्वं सम्पद्यते। तथा, खरसंवत्सरे वैशाखमासोऽधिकः। नन्दन-संवत्सर-व्यवहिते विजयसंवत्सरे भाद्रपदमासोऽधिक इति तत्राप्येकोनत्रिंशत्त्वम्। तथा, दुर्मुखसंवत्सरे श्रावणमासोऽधिकः। हेमलम्बि-विलम्बि-संवत्सरद्वय-व्यवहिते विकारिसंवत्सरे ज्यैष्ठोऽधिकः। तथाच, तत्र पञ्चत्रिंशत्त्वं सम्पद्यते। तस्मात्, 'मासे त्रिंशत्तमे भवेत्'—इत्येतदयुक्तं भवति। नायं दोषः। त्रिंशत्तमत्वस्योपलक्षणत्वेनाङ्गीकारात्। उदाहरण-प्रदर्शनार्थमेतदुक्तमित्यविरोधः।

इदमत्र विचार्यते। किमयं मलमासः स्वतन्त्रः, उत पूर्वस्य शुद्धमासस्य शेषः, अहोस्विदुत्तरस्य शुद्धमासस्य शेषः? इति। न च, काकदन्त-परीक्षेयमनुष्ठानानुपयोगादिति शङ्कनीयम्। प्रत्याब्दिकाद्यनुष्ठाने तद्विचारस्योपयुक्तत्वात्। तथा हि,—शुद्धाषाढ-शुद्धश्रावणयोर्मध्ये यदा मलमासस्तदा तस्य स्वातंत्र्ये तस्मिन् प्रत्याब्दिकमेव न

प्राप्नोति। पूर्वस्योत्तरस्य वा शेषत्वे, शेषिणि मासे यत्प्रत्याब्दिकादि तस्य मलमासेऽप्यनुष्ठानं प्राप्नोति* 'पितृकार्य्याणि चोभयोः'—इति वचनात्। तस्मात् सार्थकोविचारः।

तत्र, स्वातंत्र्यं तावदृतु-निर्णये निरस्तम्। पारतंत्र्येऽपि पूर्वशेषत्वं युक्तमिति केचिदाहुः। तत्रोपपत्तिं केचिदिच्छन्ति चोपन्यस्यन्ति च। मेषादि-संक्रान्तयश्चैत्रादि-संज्ञानां प्रयोजिकाः। तथाच ज्योतिःशास्त्रेऽभिहितम्,—

"मेषादिस्थे सवितरि योयोमासः प्रपूर्य्यते चान्द्रः।
चैत्राद्यः सविज्ञेयः पूर्त्ति-द्वित्वेऽधिमासोऽन्त्यः"—इति।

यदा सवितर्य्येक-राशिस्थे सति दर्श-द्वयं पूर्य्यते, तदानीमन्त्य उत्तरदर्शावसानकोमासोऽधिमासः। न तत्पूर्व-दर्शावसानक इत्यर्थः। यदा शुद्धाषाढस्य बहुल-चतुर्दश्यां दर्शे वा कर्कट-संक्रान्तिर्भवति, शुद्धश्रावणमासस्य शुक्लपक्षे प्रतिपदि द्वितीयायां वा सिंह-संक्रान्तिः, तदा कर्कट-संक्रान्ति-युक्तस्यस्य शुद्ध-मासस्याषाढत्वं युक्तम्। तदीय-दर्शस्य कर्कटस्थे रवाववसितत्वात्। सिंह-संक्रान्ति-युक्तस्यापि श्रावणत्वमुचितम्। तदीय-दर्शस्य सिंहस्थे रवाववसितत्वात्। तेनैव न्यायेन तयोर्मध्यवर्त्तिनः संक्रान्ति-रहितस्य मासस्य दर्शः कर्कटस्थएव रवौ पूर्य्यते,—इति पूर्वाषाढवदेतस्याप्याषाढत्वमुचितम्।

अत्रोच्यते। मेषादीनां शुद्धमास-संज्ञां प्रत्येव प्रयोजकत्वम्। मलमासस्योत्तरमास-शेषत्व-स्मरणात्। तथा च ज्योतिःपितामहः,—

* भवति,—इति मु० पुस्तके पाठः।

"षष्ठ्या तु दिवसैर्मासः कथितो वादरायणैः।

पूर्व्वार्द्धं तु परित्यज्य कर्त्तव्या उत्तरे क्रियाः"—इति।

अन्यत्रापि षष्टिदिनात्मकं मासं प्रकृत्योक्तम्,—

"आद्यो मलिम्लुचो ज्ञेयो द्वितीयः प्रकृतः स्मृतः"—इति।

"एवं षष्टिदिनो मासस्तदर्द्धं तु मलिम्लुचः"—इति च।

ज्योतिःशास्त्रान्तरेऽपि,—

"षष्ठ्या हि दिवसैर्मासः कथितो वादरायणैः।

पूर्व्वमर्द्धं परित्यज्य उत्तरार्द्धं प्रशस्यते"—इति॥

अस्त्वेवं संक्रान्ति-रहितस्य मलमासस्योत्तर-शेषत्वं, द्वि-संक्रान्ति-युक्तस्य तु कथमिति चेत्। उच्यते। प्रथमन्तावत्स्वरूपं निरूप्यते। तत्र ज्योतिः सिद्धान्तेऽभिहितम्,—

"असंक्रान्त-मासोऽधिमासः स्फुटः स्यात्

द्विसंक्रान्त-मासः क्षयाख्यः कदाचित्।

क्षयः कार्त्तिकादि-त्रये नान्यदा स्यात्

तदा वर्ष-मध्येऽधिमास-द्वयं स्यात्"—इति॥

अयमर्थः,—स्फुटमानेन योऽयमसंक्रान्तः स स्फुटोऽधिमासः, तेनैव मानेन योऽयं द्वि-संक्रान्ति-युक्तः स क्षयमासः, स च कार्त्तिक-मार्ग-शीर्ष-पौषेष्वेव त्रिष्वन्यतमो* भवति, नान्येषु माघादिषु नवसु। एवंविध-क्षयमास-युक्ते वर्षे क्षयमासात्पूर्व्वेषु मासेषु† मध्ये कश्चिदधिकमासो भवति, क्षयमासादूर्द्धमपि मास-त्रय-मध्येऽपरोऽधिमासः।

* त्रिष्वन्यतमे,—इति वि० पुस्तके पाठः।

† त्रिषुमासेषु,—इति मु० पुस्तके पाठः।

तदेवंविध* मेकवर्षस्थं मलमास-त्रयमिरेण कालेन यदाकदाचि-दायाति, नत्वेकाधिमासवत् पुनः पुनः सहसा समायाति। तत्त्रित-यागमन-कालस्य सिद्धान्तशिरोमणौ दर्शितः,—

"गतोऽब्ध्यद्रिनन्दैर्मिते शाक-काले
तिथीशैर्भविष्यत्यथाङ्गाक्षसूर्यैः।
गजाद्र्यग्निभूभिस्तथा प्रायशोऽयं
कुवेदेन्दुवर्षैः क्वचिद्गोकुभिश्च"।

अस्यायमर्थः,—चतुःसप्तत्यधिक-नवशत-सङ्ख्याकैर्वर्षैः परिमिते शक-काले कश्चिदुक्त-मास-त्रयोपेतोवत्सरोगतः। यथोक्त-सङ्ख्या चाब्ध्य-द्रिनन्दैरित्यनेन पदेन विवक्षिता। अब्धयश्चत्वारः, अद्रयः सप्त, नन्दानव। एतत्सङ्ख्यात्रय-गमका अङ्का गणक-प्रसिद्ध्या प्रातिलोम्येन लिखिता यथोक्त-सङ्ख्यायां पर्यवस्यन्ति।

तिथीशैरित्यत्रापि तिथयः पञ्चदश, ईशा एकादश। तत्र, गणकैरङ्केषु प्रक्षिप्तेषु पञ्चदशाधिकशत-युक्त-सहस्र-सङ्ख्या सम्पद्यते। तावद्भिः शकवर्षैर्मिते काले कश्चिदुक्त-मास-त्रयोपेतः संवत्सरः। अङ्गाक्षसूर्यैरित्यत्र, अङ्गानि षट्, अक्षाणीन्द्रियाणि पञ्च, सूर्या द्वादश। तत्राङ्क-प्रक्षेपे सति, षट्पञ्चादधिक-शत-द्वयोपेत-सहस्र-सङ्ख्योपपद्यते। तावद्भिर्वत्सरैर्मिते शककाले यथोक्त-मास-त्रयोपेतः कश्चित्संवत्सरः।

अस्य चोदाहरणं पूर्वोदाहृत ईश्वरसंवत्सर प्राचीनोभाव-संवत्सरः तत्र हि, भाद्रपदबहुलामावास्यायां कन्या-संक्रान्तिस्ततऊर्ध्वमसंक्रान्त

* तदेतदेवंविध,—इति वि° पुस्तके पाठः।

मेकं मासमतीत्य उत्तरयोर्मासयोः क्रमेण तुला-वृश्चिक-संक्रान्ती, ततऊर्ध्वमेकस्मिन्नेव मासे शुक्लप्रतिपदि धनुःसंक्रान्तिः दर्शे मकर-संक्रान्तिः, ततऊर्ध्वं कुम्भसंक्रान्तिः अनन्तरे मासे दर्शे, ततऊर्ध्वमेकम-संक्रान्तमासमतीत्य उत्तरस्यां शुक्लप्रतिपदि मीनसंक्रान्तिः। एवं सत्येकस्मिन्नेव वत्सरे द्वावसंक्रान्तौ मासौ एकोद्विसंक्रान्त-मासः,—इति यथोक्तमास-त्रयं सम्पद्यते।

गजाद्र्यग्निभूभिरित्यत्रापि, गजा अष्टौ, अद्रयः सप्त, अग्नयस्त्रयः, भूरेका। तत्राङ्क-प्रक्षेपे सत्यष्टसप्तत्यधिक-शतत्रयोपेत-सहस्र-सङ्ख्या सम्पद्यते। तावद्भिर्वत्सरैर्मिते शाककाले कश्चिदुक्तविधः सम्पद्यते वत्सरः। कुवेदेन्दुवर्षैरित्यत्र, कुरेका, वेदाश्चत्वारः, इन्दुरेकः। तत्राङ्क प्रक्षेपेणैकचत्वारिंशत्यधिक-शतसङ्ख्या भवति। एतावद्भिर्वर्षैः क्वचित् पूर्वोत्तरयोः क्षय-मासयोर्व्यवधानं भवति। गोकुभिश्चेत्यत्र, नपुंसक(१) वर्ज्जितेषु स्वराक्षरेषु गण्यमानेष्वोकारो नवमः पम्पद्यते। कुरेका। तत्राङ्क प्रक्षेपे सति एकोनविंशतिर्भवति। तावद्भिर्वत्सरैः क्वचित्पूर्वोत्त-रयोः क्षयमासयोर्व्यवधानं भवति।

अत्र, द्वि-संक्रान्ति-युक्तस्य क्षय-संज्ञायामुपपत्तिरुच्यते। यदा, धनुःस्थे रवौ दर्श-पूर्त्तिस्तदा तस्य मेषादिस्यवचनेन मार्गशीर्षत्वं प्राप्तम्। तथासति, पूर्वोदाहृते द्विसंक्रान्ते मासे धनुःस्थ रवौ दर्शान समाप्तः, किन्तु मकरस्थे। अतः पौषमासत्वं तस्य सम्पन्नम्। तथा च, मार्गशीर्षस्य तत्र लुप्तत्वात्तस्य क्षय-संज्ञा युक्ता। अतएवैकमास-ग्रासि-

(१). ऋवर्णौल्वर्णयोर्नपुंसकसंज्ञा प्रसिद्धा।

त्वादंहसः पापस्य पतिरिति व्युत्पत्त्या सएवांहस्पति-संज्ञयाऽपि व्यवह्रियते। स च व्यवहारो बार्हस्पत्यज्योतिर्ग्रन्थे दृश्यते,—

"यस्मिन्मासे न संक्रान्तिः संक्रान्ति-द्वयमेव वा।
संसर्पांहस्पती मासावधिमासश्च निन्दिताः"—इति।

तत्र, क्षयमासात् प्राचीनो योऽसंक्रान्तः स संसर्पः। असंक्रान्तत्वेनेतराधिकमासवत्कर्मानर्हतायां प्राप्तायां तदपवादेन कर्मार्हः सन् सम्यक् सर्पतीति संसर्पः। तस्य कर्मानर्हत्व-प्राप्तिरेवं स्मर्यते,—

"सिनीवालीमतिक्रम्य यदा संक्रमते रविः।
रविणा लङ्घितो मासोह्यनर्हः सर्वकर्मसु"—इति।

तदपवादश्चैवं स्मर्यते,—

"मासद्वयेऽब्द-मध्ये तु संक्रान्तिर्न यदा भवेत्।
प्राकृतस्तत्र पूर्वः स्यादधिमासस्तयोत्तरः"—इति।

संक्रान्ति-रहितयोर्द्वयोर्मासयोर्यः पूर्वोऽसंक्रान्तः, स प्राकृतः शुद्धः कर्मार्ह इत्यर्थः। अस्मिन्नेवार्थे जाबालिः,—

"एकस्मिन्नेव वर्षे तु द्वौमासावधिमासकौ।
प्राकृतस्तत्र पूर्वः स्यादुत्तरस्तु मलिम्लुचः"—इति।

अतः संसर्पत्वं तस्योपपन्नम्। असंक्रान्त-मास-द्वय-मध्य-वर्त्तिनः क्षयमासस्यांहस्पतित्व-निरुक्तिः पूर्वमेव दर्शिता। तदुत्तरभाविनोऽसंक्रान्तस्य कालाधिक्यादधिमासत्वम्। तएते त्रयोऽपि ज्योतिःशास्त्र-प्रसिद्धे विवाहादौ निन्दिताः। तथा तत्रैव स्मर्य्यते,—

"यद्वर्ष-मध्येऽधिक-मास-युग्मं
तत् कार्त्तिकादि-त्रितये क्षयाख्यम्।

मास-त्रयं त्याज्यमिदं प्रयत्नाद्—

विवाहयज्ञोत्सवमङ्गलेषु"—इति॥

यथोक्त-प्रकारेणांहस्पति-मासः त्रयमासस्य द्वितीय-संक्रान्ति-प्रयुक्त-मास-सम्भवे सति शुद्धमासत्वस्यानन्त्यान्न पूर्वोत्तर-मास-शेषत्वशङ्काऽवकाशः।

नन्वेकाधिकमासोपेत-संवत्सरस्य त्रयोदश-मासात्मकत्वं यथा, तथाऽधिमास-द्वयोपेत-संवत्सरस्य चतुर्दशमासात्मकत्वं प्राप्तम्। न च तद्युक्तम्,

"त्रयोदशस्तु श्रुतिराह मासं

चतुर्दशः क्वापि न चैव दृष्टः"—इति।

वचनात्। नैष दोषः। असंक्रान्तत्वेनाधिकत्वप्रसक्ति-युक्तयोर्द्वयोर्मध्ये पूर्वस्याधिमासत्व-निषेधात्। उक्तं हि ज्योतिःसिद्धान्ते,—

"घट-कन्या-गते सूर्य्ये वृश्चिके वाऽथ धन्विनि।

मकरे वाऽथ कुम्भे वा नाधिमासो विधीयते"—इति।

अयमर्थः,—वृश्चिकादिषु चतुर्षु मासेषु यदा मलमासः प्राप्नोति, तदा सूर्य्ये तुला-कन्ययोर्वर्त्तमाने सत्यसंक्रान्तोऽपि नाधिमासः,—इति। घट-कन्या-गते,—इत्युपलक्षणम्। पूर्वेष्वपि प्रसक्तोऽसंक्रान्तो नाधिमासः। तदुक्तं ब्रह्मसिद्धान्ते,—

"चैत्रादर्वाङ्नाधिमासः परतस्त्वधिकोभवेत्"—इति।

चैत्रादारभ्योपरितनेषु मासेषु यदा यौ कौचिन्मासावसंक्रान्तौ, तदा तयोरर्वाचीनः पूर्वोनाधिमासः उत्तरस्तु भवत्यधिमासः।

नन्, माभूच्चतुर्दशमासत्व-प्राप्तिः, तथाप्येकादशमासत्वं सम्प्रसज्यते

त्यस्येव दोषः। तथाहि,—"द्वादश मासाः संवत्सरः"—इत्येषा नित्यवत् श्रुतिः ससंक्रान्तान्मासानुद्दिश्य प्रवृत्ता। "अस्ति त्रयोदशोमास इत्याहुः"—इत्यसंक्रान्तस्य कादाचित्कस्य पृथक् श्रवणात्। तथा च सति, प्रकृते क्षयमासोपेते त्रयोदशमासात्मके संवत्सरे द्वयोरसंक्रान्तयोः परित्यागे सति अवशिष्टाः ससंक्रान्ता एकादशैव। ततोनित्यवत् श्रुति-विरोधः। नायं दोषः। संक्रान्ति-द्वय-युक्तस्य क्षयस्य मास-द्वयत्वेन परिगणनात्। तथा च स्मर्यते,—

"तिथ्यर्द्धे प्रथमे पूर्वो द्वितीयेऽर्द्धे तथोत्तरः।
मासाविति बुधैश्चिन्त्यौ क्षयमासस्य मध्यगौ"—इति।

ज्योतिःशास्त्रे द्वि-संक्रान्ति-युक्त-क्षयमासाद्य-संक्रान्तेः क्वचित् पूर्वत्र चालन-संस्कारोऽस्तीत्युक्तम्। तथा च, यदा चालनमस्ति, तदा पूर्वस्यासंक्रान्तस्य ससंक्रान्तत्व-सम्पादनादयं क्षयमास एकत्वेनैव परिगणनीयः। यदा तु चालन-संस्कारोनास्ति, तदा यथोक्त-प्रकारेण मास-द्वयात्मकत्वं द्रष्टव्यम्। यथोक्तं वटेश्वरसिद्धान्ते,—

"मासः संक्रान्तिहीनोऽधिकइति कथितः शीघ्र-वक्र-प्रचारैः
संसर्पोऽंहस्पतिः स्यात् समविषमतया चालनं तत् क्षयस्य।
पूर्वैश्चन्द्रार्कयोगैर्विरहित-रविसंक्रान्तितश्चालनं मा
स्याद्वा तस्यार्कमासो यदि न चलति वै मास-युग्मं विचिन्त्यम्"।

क्वचित् ज्योतिर्ग्रन्थे नित्यवदेव चालनमुक्तम्। तथाहि,—

"यावन्मासोद्विसंक्रान्तिः संक्रान्त्यैक्यं प्रपद्यते।
स्वर्गमाप्यवशं दृष्ट एवं वत्सरेण क्रमः"।

तथा,—"असंक्रान्तो द्विसंक्रान्तिः संक्रान्तिरहितो यदा।

मासाः पूर्व्वस्य मासस्य पूर्व्वं दर्श दिनोर्गमात्।
उत्तरे मासे संक्रान्तिनाड़िकाशं विशेषयेत्"—इति*।

इत्थं मलमास-स्वरूपं निरूपितम्।

## अथ तत्र वर्ज्यावर्ज्य-विवेकः क्रियते।

तत्र पैठीनसिः,—

"श्रौत-स्मार्त्त-क्रियाः सर्वाद्वादशे मासि कीर्त्तिताः।
त्रयोदशे तु सर्वास्ता निष्फलाः परिकीर्त्तिताः॥
तस्मात् त्रयोदशे मासे कुर्यात्ता न कथञ्चन।
कुर्वन्ननर्थमेवाग्रु कुर्यादात्म-विनाशनम्"—इति।

अत्र, निष्फलाः,—इत्यभिधानात् फल-कामनया प्रवृत्तं काम्यं निषिध्यते,—इति गम्यते। तथा च स्मृत्यन्तरे,—

"इष्ट्यादि सर्वकाम्यन्तु मलमासे विवर्जयेत्"—इति।

न च, सर्वास्ताः,—इत्यभिधानात् नित्य-नैमित्तिकयोरपि निषेधः शङ्कनीयः,

"नित्य-नैमित्तिके कुर्यात् प्रयतः मलमलिम्लुचे"—इति

वृहस्पति-वचनात्। जाबालिनाऽपि तथैवोक्तम्,—

"नित्य-नैमित्तिके कुर्याच्छ्राद्धं कुर्यान्मलिमलुचे।
तिथि-नक्षत्र-वारोक्तं काम्यं नैव कदाचन"—इति।

* क्वचिदित्यादिरेतदन्तोग्रन्थो न दृश्यते वि० पुस्तकातिरिक्त पुस्तकेषु।

थोऽयं मलमासे काम्य-निषेधः, असावारम्भ-समाप्ति-विषयः,

"असूर्यानाम ये मासा न तेषु मम संमतः।

व्रतानां चैव यज्ञानामारम्भस्य समापनम्"—इति

आरम्भ-समाप्त्योरेवाधिमासे प्रतिषेधात्। आरम्भ-समाप्त्योर्मध्यपाति न्यधिमासे त्वारब्धं काम्यमनुष्ठेयम्,

"अधिमासे निपतिते ह्येषएव विधिक्रमः"—इति

स्मरणात्,। यत्तु काठक-गृह्ये समाप्ति-प्रतिप्रसव-वचनम्,—

"प्रवृत्तं मलमासात् प्राक् काम्यं कर्मासमापितम्।

आगते मलमासेऽपि तत्समाप्तिर्न संशयः"—इति।

तत्पावन-मान-प्रवृत्त-कृच्छ्र-चान्द्रायणादीन-सत्रादि-विषयम्। आवश्यकन्तु यत्काम्यं कर्म तन्मलमासेऽप्यनुष्ठेयम्। तद्यथा। प्रक्रान्ते मलमासे द्वित्रेषु दिनेषु गतेषु यदि कश्चिद्बालो ब्रह्मराक्षसादिना गृह्येत, तदा रक्षोघ्नीष्टिः सद्यएव कर्त्तव्या। मलमास-समाप्ति-प्रतीक्षायां बालादि-मरण-प्रसङ्गात्। सा चेष्टिः काम्यकाण्डे श्रूयते। "अग्नये रक्षोघ्ने पुरोडाशमष्टाकपालं निर्वपेत्। यं रक्षांसि सचेरन्नग्निमेव रक्षोहणं स्वेन भागधेयेनोपधावति सएवास्माद्रक्षांस्यपहन्ति"—इति। सचेरन् समवेयुर्गृह्णीयुरिति यावत्। उपधावति तद्देवतां प्रियेण हविर्भागेन तोषयति। अस्माद्रक्षोगृहीतादिष्टिकर्त्ता रक्षांस्यपहन्तीति*।

तथैवाभिचरतः प्रतिचरतस्य काचिदिष्टिः श्रूयते। "आग्नावैष्णवमेकादशकपालं निर्वपेदभिचरन्"—इति। "प्रति वै परस्तादभिचरन्तमभिचरन्ति द्वे द्वे पुरोनुवाक्ये कुर्यात्"—इति च। तत्र, द्वयोरप्ये-

* रक्षांस्यपनयन्तीति,—इति मु॰ पुस्तके पाठः।

केवेष्टिः, अभिचरतएकैका पुरोनुवाक्या, प्रतिचरतस्तु द्वे द्वे,—इति विशेषः। काल-विलम्ब-प्रतीक्षाऽत्रापि न भवति। बाधके शत्रौ प्रत्यासन्ने सति तदैवाभिचारस्य कर्त्तव्यत्वात्। प्रतिचारस्यापि सएव कालः। "एतयैव यजेताभिचर्यमाणः*"—इति वर्त्तमानवाचिना शानच्-प्रत्ययान्तेन शब्देन प्रतिचार-कर्त्तुरभिचार-समकालत्व-विशेषणात्।

एवं, प्रबलज्वर-राजद्रोहादिना यदा मृत्युः प्रसक्तः, तदापि सद्य-एवेष्टिः कर्त्तव्या। इष्टिस्तु श्रूयते। "यो मृत्योर्बिभीयात्तस्मा एतां प्राजापत्यां शतकृष्णलां निर्वपेत्, प्रजापतिमेव स्वेन भागधेयेनोपधावति सएवास्मिन्नायुर्दधाति सर्वमायुरेति"—इति। कृष्णलाः सुवर्ण-शकलानि यव-त्रय-परिमितानि। तानि च शतसङ्ख्याकानि यस्यां निर्वपणीयानि, सेष्टिः शतकृष्णला। यदा वृष्ट्यभावात् शस्यानि शुष्यन्ति मलमासश्चागतस्तदा "कारीर्या वृष्टिकामोयजेत"—इति विहिते ष्टिर्न काल-विलम्बं सहते। एवं स्मातान्यप्यावश्यकानि उदाहरणीयानि।

नित्य-नैमित्तिकयोरपि यदनन्यगतिकं तदेव मलमासे कार्यम्,

"अनन्यगतिकं नित्यं कुर्यान्नैमित्तिकं तथा"—इति

स्मरणात्। काठकगृह्येऽपि,—

"मलेऽनन्यगतिं कुर्यान्नित्यां नैमित्तिकीं क्रियाम्"—इति।

अनन्यगतिकानि च नित्यानि गृह्यपरिशिष्टे उदाहृतानि,—

* एतयैवयजुषाताभिचर्य्यमाणं,—इति क० वि० पुस्तकयोः पाठः।

"अवषट्कारहोमाश्च पर्व चाग्रयणं तथा।
मलमासे तु कर्त्तव्यं काम्या इष्टीर्विवर्जयेत्"—इति।

अवषट्कारहोमा अग्निहोत्रोपासन-वैश्वदेवादयः। पर्व दर्शपूर्णमासौ, पार्वणस्थालीपाकश्च। दर्शादीनां नित्यत्वमकरणे प्रत्यवायादवगन्तव्यम्। तथाचाथर्वणिका आमनन्ति,—

"यस्याग्निहोत्रमदर्शमपूर्णमास-
मनाग्रयणमतिथिवर्जितम्।
अहुतमवैश्वदेवमविधिना हुतम्
आसप्तमांस्तस्य लोकान् स हिनस्ति"—इति।

गत्यन्तर-युक्तानि तु नित्यानि तत्र वर्ज्यानि। तदुक्तं काठकगृह्य-परिशिष्टे,—

"सोमयागादिकर्माणि नित्यान्यपि मलिम्लुचे।
षष्ठीष्ट्याग्रयणाधानचातुर्मास्यादिकान्यपि॥
महालयाष्टकाश्राद्धोपाकर्माद्यपि कर्म यत्।
स्पष्टमासविशेषाख्या-विहितं वर्जयेन्मले"—इति।

सोमयागोवसन्ते विहितस्तस्य मलमास-विवर्जनेऽपि शुद्धमासेऽनुष्ठान-सम्भवात् सगतिकत्वम्। षष्ठीष्टिः काठकशाखादौ प्रसिद्धा। नचाग्रयणस्य सगतिकागतिकयोरुदाहरणं विरुद्धमिति शङ्कनीयम्, तस्य मलमासे विकल्पितत्वात्। तदाह पैठीनसिः,—

"संक्रान्ति-रहिते मासि कुर्य्यादाग्रहणं न वा"—इति।

अनन्यगतिकानि नैमित्तिकानि ग्रहणस्नानादीनि। तेषां मलमासेऽपि कर्त्तव्यतामाह यमः,—

"चन्द्र-सूर्य्य-ग्रहे स्नानं श्राद्ध-दान-जपादिकम्।
कार्य्याणि मलमासेऽपि नित्यनैमित्तिकं तथा"—इति।

सगतिकानि तु नैमित्तिकानि जातेष्ट्यादीनि। "वैश्वानरं द्वादश-कपालं निर्वपेत् पुत्रे जाते"—इति विहिताया इष्टेराशौचेऽवसिते यथाऽनुष्ठानं, तद्वन्मलमासेऽप्यवसितेऽनुष्ठातुं शक्यत्वात् सगतिकत्वम्। यथोक्तरीत्या काम्यमावश्यकमनन्यगतिके नित्यनैमित्तिके अपि मलमासे कार्य्याणि नेतराणि,—इति सामान्यतोवर्ज्यावर्ज्यविवेकः सम्पन्नः। तानि च कार्य्याकार्य्याणि कालादर्शकारः संगृह्योत्यमुदा-जहार,—

"द्वादशाहसपिण्डान्तं कर्म ग्रहण-जन्मनोः।
सीमन्ते पुंसवे श्राद्धं द्वावेतौ जातकर्म च॥
रोगे शान्तिरलभ्ये च योगे श्राद्धं व्रतानि च।
प्रायश्चित्तं निमित्तस्य वशात्पूर्वं परत्र वा॥
अर्द्धोदकुम्भ-मन्वादि-महालय-युगादिषु।
श्राद्धं दर्शेष्वहरहः श्राद्धमूनादिमासिकम्॥
मलिम्लुचान्यमासेषु मृतानां श्राद्धमाब्दिकम्।
श्राद्धन्तु पूर्व्वदृष्टेषु तीर्थेष्वत्र युगादिषु॥
मन्वादिषु च यद्दानं दानं दैनंदिनञ्च यत्।
तिल-गो-भू-हिरण्यानां सन्ध्योपासनयोः क्रिया।
पर्व्वहोमश्चाग्रयणं साग्निरिष्टिश्च पर्व्वणोः॥
नित्याग्निहोत्रहोमश्च देवताऽतिथि-पूजनम्।
स्नानञ्च स्नानविधिना अभक्ष्यापेय-वर्जनम्॥

तर्पणञ्च निमित्तस्य नित्यत्वादुभयत्र च ।
अनित्यमनिमित्तञ्च दानञ्च महदादिकम्॥
अन्याधानाध्वरापूर्व्वतीर्थयात्राऽमरेक्षणम् ।
देवारामतड़ागादि-प्रतिष्ठा मौञ्जिबन्धनम्॥
आश्रमस्वीकृतिः काम्यवृषोत्सर्गश्च निष्क्रमः ।
राजाभिषेकः प्रथमश्चूड़ाकर्म व्रतानि च ॥
अन्नप्राशनमारम्भो गृहाणाञ्च प्रवेशनम् ।
स्नानं विवाहोनामानि तथाऽऽपन्नं महोत्सवम्॥
व्रतारम्भं समाप्तिञ्च काम्यं कर्म च पाप्मनः ।
प्रायश्चित्तन्तु,सर्व्वस्य मलमासे विवर्जयेत्॥
उपाकर्मोत्सर्जनञ्च पवित्रदमनार्पणम् ।
अवरोहश्च हैमन्तः सर्पाणां बलिरष्टकाः॥
ईशानस्य बलिर्विष्णोः शयनं परिवर्त्तनम् ।
दुर्गेन्द्रस्थापनोत्थाने ध्वजोत्थानञ्च वज्रिणः॥
पूर्व्वत्र प्रतिषिद्धानि परत्रान्यच्च दैविकम्"—इति ।

अत्र, द्वादशाहेत्यारभ्य नित्यत्वादुभयत्र चेत्यनेन ग्रन्थेन कर्त्तव्य-संग्रहः। अनित्यमनिमित्तं चेत्यारभ्य वर्जयेत्—इत्यन्तेन वर्ज्य-संग्रहः । उपाकर्मेत्यारभ्य परत्रान्यच्च दैविकमित्यन्तेन मलमासे वर्जितानां सतां शुद्धमासे अवश्यकर्त्तव्यत्वेन संग्रहः ।

अत्र च, सर्व्वत्र साक्षिवचनान्युदाहरामः । यमः,—

"गर्भे वार्द्धुषिके कृत्ये श्राद्धकर्मणि मासिके ।
सपिण्डीकरणे नित्ये नाधिमासं विवर्जयेत्॥

तीर्थस्नानं जपो होमो यव-व्रीहि-तिलादिभिः ।
जातकर्मान्त्यकर्माणि नवश्राद्धं तथैव च ॥
मघात्रयोदशीश्राद्धं श्राद्धान्यपि च षोड़श ।
चन्द्र-सूर्य्य-ग्रहे स्नानं श्राद्ध-दान-जपादिकम् ॥
कार्य्याणि मलमासेऽपि नित्यं नैमित्तिकं तथा"—इति ।

मासिकेश्राद्धकर्मणि, अमावास्याश्राद्धकर्मणि—इत्यर्थः । नित्ये नित्यदाने । होमोऽत्रौपासनहोमः । अन्त्यकर्माणि दहनोदकपिण्ड-दानास्थिसञ्चयनादीनि । स्मृत्यन्तरे,—

"श्राद्ध-जातक-नामानि ये च संस्कार-सव्रताः ।
मलिम्लुचेऽपि कर्त्तव्या इष्टीः काम्याश्च वर्जयेत्"—इति ।

संस्कारा अन्नप्राशन-निष्क्रमणादयः । सव्रताश्चातुर्मास्यव्रतादयः ।

अगस्तिः,—

"एकोद्दिष्टन्तु यच्छ्राद्धं तन्नैमित्तिकमुच्यते ।
तत्कार्य्यं पूर्वमासे च कालाधिक्ये तु धर्मतः"—इति ।

गौतमः,—

"जातकर्मणि यच्छ्राद्धं नवश्राद्धं तथैव च ।
ग्रहणे पुंसवादौ च तत्पूर्वत्र परत्र च"—इति ॥

निमित्तवशादिति वाक्यशेषः । स्मृतिसंग्रहेऽपि,—

"जातकर्म च पुंसूतिः सीमन्तोन्नयनं व्रतम् ।
मलिम्लुचेऽपि कर्त्तव्यं निमित्तं यदि जायते"—इति ।

मरीचिः,—

"रोगे चालभ्ययोगे च सीमन्ते पुंसवेऽपि च ।

यद्ददाति समुद्दिष्टं पूर्वत्रापि न दुष्यति"—इति।

निमित्तवशात् प्रायश्चित्तानि अच्छिद्रकाण्डे बहूनि श्रूयन्ते, आहिताग्निर्यदा अग्नीनन्वाधायेष्टिमकृत्वा ग्रामान्तरे प्रयाणं कुर्य्यात्, तदा तुभ्यन्ता इति मन्त्रेण जुहुयात्। तथा च श्रुतिः,—"सर्वान् वा एषोऽग्नौ कामान् प्रवेशयति योऽग्नीनन्वाधाय व्रतमुपैति, स यदाऽनिष्ट्वा प्रयायात् अकामप्रीता एनं कामानुप्रयायुः। अतेजा अवीर्य्यः स्यात् स जुहुयात्तुभ्यन्ता अङ्गिरस्तमविश्वाः सुक्षितयः पृथक्। अग्नेकामायये-मिर इति। काममेवास्मिन् दधाति कामप्रीता एनं कामा अनु-प्रयान्ति तेजस्वी वीर्य्यवान् भवति। यस्योभयं हविरार्त्तिमार्च्छेत् ऐन्द्रं पञ्चशरावमोदनं निर्वपेत्"—इति। कौथुमिः,—

"अब्दमम्बुघटं दद्यादन्नञ्चापि सुसञ्चितम्।
संवत्सरे विवृद्धेऽपि प्रतिमासञ्च मासिकम्"—इति।

मरीचिः,—

"प्रतिमासं मृताहे यत् श्राद्धञ्च प्रतिवत्सरम्।
मन्वादौ च युगादौ च मासयोरुभयोरपि*"—इति।

मत्स्यपुराणेऽपि,—

"वर्षे चाहरहः श्राद्धं दानञ्च प्रतिवासरम्।
गो-भू-तिल-हिरण्यानां मासेऽपि स्यान्मलिम्लुचे"—इति।

एवमभक्ष्यापेयवर्जन-सन्ध्यावन्दनादिष्वपि विशेषतः साक्षिवचना-न्युदाहरणीयानि। सामान्यतस्तु,—

---

* मासयोरुभयोश्च तत्,—इति वि० पुस्तके पाठः।

"नित्यनैमित्तिके कुर्य्यात् प्रयतः सन्मलिम्लुचे"—इति बृहस्पतिवचनं पूर्वमेवोदाहृतम्। ननु, उदाहृतेषु संग्रहवचनेषु भाद्रपदापरपक्षश्राद्धस्याप्युभयत्र कर्त्तव्यता प्रतीयते। महालययुगादिष्विति तत्र पठितत्वात्। सा चोभयत्र कर्त्तव्यता स्मृतिविरुद्धा। महामलयाष्टकाश्राद्धेति काठकगृह्ये वर्ज्यत्वस्मरणं पूर्वमुदाहृतम्। भृगुरपि,—

"वृद्धिश्राद्धं तथा सोममग्न्याधेयं महालयम्।
राजाभिषेकं काम्यञ्च न कुर्य्याद्भानुलङ्घिते"—इति।

नागरखण्डेऽपि,—

"नभोवाऽथ नभस्योवा मलमासो यदा भवेत्।
सप्तमः पितृपक्षः स्यादन्यत्रैव तु पञ्चमः"—इति।

आषाढीमवधिं कृत्वा सप्तम-पञ्चमौ द्रष्टव्यौ। "आषाढ्याः पञ्चमे पक्षे"—इति वचनात्। आषाढमासस्यान्त्यभागे कर्कटसंक्रान्तौ नभसोऽधिकमासत्वम्। श्रावणमासस्यान्त्यभागे सिंहसंक्रान्तौ नभस्यस्याधिकमासत्वम्। तयोरुभयोरपि पक्षयोः कन्यायां वर्त्तमाने सवितरि यः कृष्णपक्षः स सप्तमो भवति। असति तु द्विविधेऽधिकमासे पञ्चमः। तथा सति, सप्तमे विहितस्यापरपक्षश्राद्धस्य मलिन-नभस्य-कृष्णपक्षेऽनुष्ठानमयुक्तम्। नायं दोषः। संग्रह-वाक्य-गत-महालय-शब्देन तीर्थविशेषस्य वा मघात्रयोदश्या वा विवक्षणीयत्वात्। ननु,

"मलिम्लुचान्यमासेषु मृतानांश्राद्धमाब्दिकम्"—इति प्रतिसंवत्सरं प्राप्यमाणस्य मृतश्राद्धस्य मासद्वय-कर्त्तव्यता संग्रहे दर्शिता। सा न युक्ता, मलमासे तन्निषेधात्। तथा च मत्स्यपुराणः,—

"वर्षे वर्षे तु यच्छ्राद्धं मातापित्रोर्मृतेऽहनि ।
मलमासे न कर्त्तव्यं व्याघ्रस्य वचनं यथा"—इति ।

सत्यतपाः,—

"वर्षे वर्षे तु यच्छ्राद्धं मृताहनि मलिम्लुचे ।
कुर्य्यात्तत्र प्रमीतानां अन्येषामुत्तरत्र तु"—इति ।

पैठीनसिः,—

"मलमासमृतानां तु श्राद्धं यत्प्रतिवत्सरम् ।
मलमासे तु कर्त्तव्यं नान्येषां तु कदाचन"—इति ।

अतः शुद्धमासमृतानां मलमासे मृताह-श्राद्ध-कर्त्तव्यता-विधान-मयुक्तम् । नैषदोषः । तस्याभिधानस्य प्रथमाब्दिकविषयत्वात् ।

"आब्दिकं प्रथमं यत्स्यात् तत्कुर्वीत मलिम्लुचे"—इति

स्मरणात् । तथा हारीतोऽपि,—

"असंक्रान्तेऽपि कर्त्तव्यमाब्दिकं प्रथमं द्विजैः ।
तथैव मासिकं श्राद्धं सपिण्डीकरणं तथा"—इति ।

लघुहारीतोऽपि,—

"प्रत्यब्दं द्वादशे मासि कार्य्या पिण्डक्रिया सुतैः ।
क्वचित्त्रयोदशेऽपि स्यादाद्यं मुक्त्वा तु वत्सरम्"—इति ।

अत्र, द्वादशे मासे पूर्णे सति अनन्तरदिने कार्य्येतिव्याख्येयम् ।

"मास-पक्ष-तिथि-स्पृष्टे यो यस्मिन् म्रियतेऽहनि ।
प्रत्यब्दं तु तथाभूतं क्षयाहन्तस्य तं विदुः"—इति

व्यासेनाब्दिकदिनस्य विशेषितत्वात् । केचित्तु, आद्यं मुक्त्वा तु वत्सरमित्येतदन्तराधिमासेऽपि योजयित्वा कार्त्तिकप्रमीतस्य प्रथमा-

ब्दिकमाश्वयुजे कुर्व्वन्ति। तदयुक्तं। मासपक्षेतिवचन-विरोधात्। अन्तिमाधिमास-विषये तु यथोक्त-रीत्योपपद्यते। तस्माच्छुद्धमास-प्रमीतानां प्रथमाब्दिकं मलमासे कर्त्तव्यं, द्वितीयाद्याब्दिकन्तु शुद्ध-मासे,—इत्येतया विवक्षयोभयत्र कर्त्तव्यतोक्ता। मलमास-मृतानां तु यदि कदाचित् स एव मलमास आगतः, तदा तत् प्रत्याब्दिकं मल-मासे एव कर्त्तव्यं* नतूपरितने शुद्धमासे। तथा च भृगुः—

"मलमास मृतानान्तु यच्छ्राद्धं प्रतिवत्सरम्।
मलमासे तु तत्कार्य्यं नान्येषान्तु कदाचन"—इति।

अतो मलमास-मृतानां कदाचित् प्रत्याब्दिकं मलमासे कार्य्यं, शुद्धमास-मृतानाञ्च प्रथमाब्दिकं तत्र कार्यं, द्वितीयाद्याब्दिकन्तु शुद्धमासे,—इति। एतं निर्णयमभिप्रेत्य,—

"श्राद्धीयेऽहनि संप्राप्ते मलमासो भवेद्यदि।
मासद्वयेऽपि कुर्व्वीत श्राद्धमेवं न लुप्यते॥
पश्चात्तु द्विवर्म्मासः कथितो वादरायणैः।
उत्तरे दैवकर्म्माणि† पितृकार्य्याणि चोभयोः"॥

इत्यादीनि वचनानि प्रवृत्तानि। क्षयमासस्य मलमासत्वेऽपि न तत्र निषेधः,

"वर्षे वर्षे तु यत् श्राद्धं मातापित्रोर्मृताहनि।
मासद्वयेऽपि तत् कुर्य्याद्व्याघ्रस्य वचनं यथा"॥

---

* तदा तत्रैव प्रत्याब्दिकं कर्त्तव्यं,—इति वि० पुस्तके पाठः।

† श्राद्धीयेऽहनि,—इत्यारभ्य, उत्तरे दैवकर्म्माणि,—इत्येतदन्तो ग्रन्थः वि० पुस्तकातिरिक्तपुस्तकेषु न दृश्यते।

इति स्मरणात्। अत्र, मासद्वयेऽपीति संक्रान्ति-द्वय- युक्तत्वात् मासद्वयात्मके चयापरमासे इत्यर्थः* । अनित्यमनिमित्तञ्चेत्यादिना यानि वर्ज्यानि संगृहीतानि, तेषु स्मृतय उदाह्रियन्ते । तत्र वृद्धमनुः,—

"अग्न्याधेयं प्रतिष्ठाञ्च यज्ञ-दान-व्रतानि च ।
वेदव्रत† वृषोत्सर्ग-चूडाकरण-मेखलाः॥
माङ्गल्यमभिषेकञ्च मलमासे विवर्जयेत्।
बाले वा यदि वा वृद्धे शुक्रे वाऽस्तमुपागते ॥
मलमासश्चैतानि वर्जयेद्देव-दर्शनम्"—इति ।

पैठीनसि-ज्योतिःपराशरयोरप्येवमेव पाठः । कौथुमिः,—

"अधिमासे‡ न कर्त्तव्यं श्राद्धं संवत्सराब्दिके ।
वर्षवृद्ध्यभिषेकादि कर्त्तव्यमधिकेन तु॥
अधिमासे न कर्त्तव्यं श्राद्धमाभ्युदयं तथा ।
तथैव काम्यं यत्कर्म वत्सरात् प्रथमादृते ॥
सपिण्डीकरणादूर्ध्वं यत्किञ्चिच्छ्राद्धिकं द्विजैः ।
इष्टं वाऽप्यथवा पूर्त्तन्तन्न कुर्यान्मलिम्लुचे"—इति ।

असंक्रान्तं प्रकृत्य ज्योतिः शास्त्रे,—

"तत्र दत्तमदत्तं वा कृतं§ न कृतमेव वा ।

---

* चयमासस्य,—इत्यारभ्य, इत्यर्थः,—इत्येतदन्तो ग्रन्थः वि० पुस्तकातिरिक्तपुस्तकेषु नास्ति ।

† देवव्रत, इति क० पुस्तके पाठः ।

‡ मलमासे,—इति वि० पुस्तके पाठः ।

§ कृतं वा,—इति वि० पुस्तके पाठः ।

भुजन्न मध्यजन्नं स्यान्नोपवासः कृतो भवेत् ॥
न यात्रां न विवाहन्तु न च वास्तु-निवेशनम् ।
न प्रतिष्ठाञ्च देवानां प्रासाद-ग्राम-भूरुहाम् ॥
न हिरण्यं न वासांसि कारयेदिति निश्चयः"—इति ।

स्मृत्यन्तरेऽपि,—

"वापी-कूप-तडागादि प्रतिष्ठां यज्ञकर्म च ।
न कुर्यान्मलमासे च महादानफलानि च * "—इति ।

महादानानि तुलापुरुषादीनि षोडशापि मत्स्यपुराणोक्तानि, कनकादीनि दश कूर्मपुराणोक्तानि। एवमन्यान्यपि प्रतिषेध-वचनान्युदाहरणीयानि। उपाकर्मोत्सर्जनञ्चेत्यादिना शुद्धमासएव कर्त्तव्यान्युक्तानि। तत्र ज्योतिःपराशरः,—

"रविणा लङ्घितो मासश्चान्द्रः ख्यातोमलिम्लुचः ।
तत्र यद्विहितं कर्म उत्तरे मासि कारयेत्"—इति ।

प्रजापतिः,—

"उपाकर्म च हव्यञ्च कव्यं पर्वोत्सवं तथा ।
उत्तरे नियतं कुर्यात् पूर्वे तन्निष्फलं भवेत्"—इति ।

हारीतोऽपि,—

"उपाकर्म तथोत्सर्गं काम्यमुत्सवमष्टकाः ।
मास-वृद्धौ पराः कार्यावर्जयित्वा तु पैटकम्"—इति ।

ज्योतिःपितामहोऽपि,—

---

* महादानव्रतानि च,—इति अन्यत्र पाठः ।

"मासः कन्यागते भानावसंक्रान्तो भवेद्यदि ।
दैवं पित्र्यं तदा कर्म तुलास्थे कर्त्तुरक्षयम्"—इति ।

अत्र, कन्या-गते सवितरि योऽसंक्रान्तः, असौ मलिनआश्वयुजः । भाद्रान्ते* कन्याप्रवेशात् । एवञ्च सति कन्यामुपजीव्य विहितं यद्दैवं पित्र्यञ्च तन्मलिनआश्वयुजे न कर्त्तव्यं, किन्तर्हि तुला-संक्रान्त्युपेते शुद्धआश्वयुजे† ।

नन्वेवं सति महालयाख्यापरपक्ष-श्राद्धस्यापि तुलामासे कर्त्तव्यता प्रसज्यते । तस्यापि कन्यामुपजीव्य विहितत्वात् । तथा च पुराणम्,—

"कन्यां गते‡ सवितरि यान्यहानि तु षोड़श ।
क्रतुभिस्तानि तुल्यानि पितृणां दत्तमक्षयम्"—इति ।

मैवं, भाद्रपद-कृष्णपक्षस्य कन्या-संक्रान्ति-स्पर्शित्वेन कन्योपजीविनोऽप्यपरपक्षस्य तुलामासेऽनुष्ठातुमशक्यत्वात्‡ । तथा च कार्ष्णाजिनिः,-

"अन्ते वा यदि वा मध्ये यत्र कन्यां रविर्व्रजेत् ।
स पक्षः पञ्चमः पूज्यः श्राद्धषोड़शकं प्रति"—इति ।

वृद्धमनुरपि,—

"मध्ये वा यदि वाऽप्यन्ते यत्र कन्यां रविर्व्रजेत् ।
स पक्षः सकलः पूज्यः श्राद्धं तत्र विधीयते"—इति ।

---

* भाद्रपदान्ते,—इति क० पुस्तके पाठः ।

† 'एवञ्च सति'—इत्यादि 'शुद्धआश्वयुजे'—इत्यन्तग्रन्थात् परं, 'अत्र कन्यांगते' इत्यादि 'कन्याप्रवेशात्'—इत्यन्तग्रन्थः क० पुस्तके न दृश्यते ।

‡ तत्रानुष्ठातुं शक्यत्वात्,—इति वि० पुस्तके पाठः ।

किञ्च, नेदमपरपक्ष-श्राद्धं कन्यामुपजीवति, तस्यामनादरस्मरणात्। तथा च जातूकर्ण्यः*,—

"आषाढ़ीमवधिं कृत्वा यः स्यात् पक्षस्तु पञ्चमः।

श्राद्धकालः स विज्ञेयः कन्याङ्गच्छतु वा न वा"—इति।

अतः, कन्याङ्गते सवितरीति वचनं कृष्णपक्षस्य कन्या-योगं प्रशंसति। अतएव, क्रतुभिस्तानि तुल्यानीति तत्रैवोक्तम्। एवं सति, तुलास्थे कर्त्तुरक्षयमिति वचनं महालय-व्यतिरिक्त-विषयम्।

अथवा, महालयस्यापि गौणकालविधानार्थं† तदस्तु। तथा हि, कन्या-संक्रान्ति-युक्तो भाद्रपद-कृष्णपक्षस्तस्य मुख्यः कालः, केनापि निमित्तेन मुख्यकालासम्भवे यावद्दृश्चिकदर्शनं तस्य गौणकालः स्मृति-सिद्धः। तत्र, किं कन्यायुक्ते मलिनाश्वयुजे तच्छ्राद्धं कर्त्तव्यं, उत कन्या-रहिते तुलोपेते शुद्धाश्वयुजे,—इति वीचायान्तुलास्थे कर्त्तुरक्षयमिति विधीयते। एवमन्यान्यपि उत्तर-मासे कर्त्तव्य-विषयाणि वचनान्युदाहार्य्याणि।

तदेवं, कार्य्याकार्य्य-विवेकः पञ्चधा सम्पन्नः। तत्र, किञ्चिन्मलमास एव कर्त्तव्यम्। तद्यथा, मलमास-मृतानां यदा कदाचित् प्रत्याब्दिकम्, अन्य-मास-मृतानां प्रथमाब्दिकञ्च। किञ्चित् शुद्धमास एव कर्त्तव्यम्। तद्यथोपाकर्मादि। किञ्चिदुभयत्रापि कर्त्तव्यम्। तद्यथा-ऽब्दोदकुम्भादि‡। किञ्चिदुभयोरन्यतरस्मिन्निमित्त-वशात्कर्त्तव्यम्।

* जातूकर्णः,—इति क० वि० पुस्तकयोः पाठः।

† गौणकालनिषेधात् तदर्थं,—इति मु० पुस्तके पाठः।

‡ अब्दोदकादि,—इति मु० पुस्तके पाठः।

तद्यथा, द्वादशाह-सपिण्डान्तादि* । किञ्चिन्मलमासे वर्ज्यम् । तद्यथा, अनित्यमनिमित्तञ्चेत्यादि ।

अथ मलमासस्यैव द्विराषाढ़-संज्ञा† विशेष उच्यते । तत्र, वृद्धमिहिरः,—

"माधवाद्येषु षट्स्वेक-मासि दर्श-द्वयं यदा ।
द्विराषाढ़ः स विज्ञेयः शेते कर्कटकेऽच्युतः"—इति ।

इयञ्च द्व्याषाढ़-संज्ञा उत्तरभाविनि संवत्सरे हरि-स्वाप-विवेकायोपयुज्यते । अतएव वृद्धमिहिरः,—

"मेषादि-मिथुनान्तेषु‡ यदा दर्श-द्वयं भवेत् ।
अब्दान्तरे तदाऽवश्यं मिथुनार्के हरिः स्वपेत् ॥
कर्कटादि-त्रिके वाऽपि यदा दर्श-द्वयं भवेत् ।
अब्दान्तरे तदाऽवश्यं कर्कटार्के हरिः स्वपेत्"—इति ।

इति मास§ निर्णयः ।

## अथ पक्षः ॥

पक्षशब्दः|| "पक्ष परिग्रहे"—इत्यस्माद्धातोर्निष्पन्नः । देवकार्य्यार्थं वा पितृकार्य्यार्थं वा पक्ष्यते परिगृह्यते यः काल-विशेषः, स पक्षः ।

* सपिण्डनादि, इति क० वि पुस्तकयोः पाठः ।

† संज्ञकौ,—इति मु० पुस्तके पाठः ।

‡ माधवान्मिथुनान्तेषु,—इति क० पुस्तके पाठः ।

§ मलमास,—इति मु० पुस्तके पाठः ।

|| सपक्षशब्दः, इति वि० पुस्तके पाठः ।

अथवा, चन्द्रस्य पञ्चदशानां कलानामापूरणं क्षयोवा यस्मिन् परिगृह्यते स पक्षः। तथा च, वाजसनेयिनश्चन्द्ररूपस्य संवत्सर-निर्वाहकस्य प्रजापतेः कलापूरणापक्षयावामनन्ति*। "सएष संवत्सरः प्रजापतिः षोड़शकलः तस्य रात्रयएव पञ्चदश कलाः ध्रुवैवास्य षोड़शी कला स रात्रिभिरेव पूर्य्यतेऽपक्षीयते†"—इति। तथा, तएव पञ्चाग्निविद्यायां दक्षिणोत्तरमार्गयोः कृष्ण-शुक्लपक्षावपक्षय-पूरणात्मकौ इष्टापूर्त्तादिकारिभिरुपासकैश्च प्राप्येते,—इति पठन्ति। "अथ ये यज्ञेन दानेन तपसा लोकं जयन्ति‡ ते धूममभिसम्भवन्ति धूमाद्रात्रिं रात्रेरपक्षीयमाणपक्षमिति ते यएवमेतद्विदुः। ये चामी अरण्ये श्रद्धामुपासते§ तेऽर्च्चिरभिसम्भवन्त्यर्च्चिषोऽहरह्नः आपूर्य्यमाणपक्षम्"—इति च। तैत्तिरीयाश्च सावित्र-चयने पूर्व्वोत्तर पक्षौ प्रत्येकं पञ्चदशाहोरात्रकावामनन्ति॥। "संज्ञानं विज्ञानं दर्शादृष्टेति एतावनुवाकौ पूर्वपक्षस्याहोरात्राणां नामधेयानि, प्रस्तुतं विष्टुतं सुता सुन्वतीत्येतावनुवाकावुत्तर¶पक्षस्याहोरात्राणां नामधेयानि"—इति।

अयमर्थः,—संज्ञानं विज्ञानमित्येकोऽनुवाकोमन्त्रकाण्डे पठितः। तस्मिन्ननुवाके शुक्लपक्षस्याह्नां नामधेयानि पञ्चदश नपुंसकलिङ्गानि

* कलापूरणाय क्षयाय चामनन्ति, इति क॰ वि॰ पुस्तकयोः पाठः।

† पूर्य्यते एवं क्षीयते,—इति क॰ वि॰ पुस्तकयोः पाठः।

‡ य इमे ग्रामे इष्टापूर्त्ते दत्तान्युपासते,—इति वि॰ पुस्तके पाठः।

§ श्राद्धं सत्यमित्युपासते,—इति वि॰ पुस्तके, श्राद्धमुपासन्ते,—इति क॰ पुस्तके पाठः।

॥ पञ्चदशाहोरात्रात्मकावामनन्ति,—इति वि॰ पुस्तके पाठः।

¶ वपर,—इति वि॰ पुस्तके, वृत्तर,—इति मु॰ पुस्तके पाठः।

पश्यन्ते। दर्शा दृष्टेत्यपरोऽनुवाकस्तत्र शुक्लपक्षस्य रात्रीणां नामधेयानि पञ्चदश स्त्रीलिङ्गानि पठितानि। तथा, प्रस्तुतं विष्टुतमित्येकोऽनुवाकः सुता सुन्वतीत्यपरोऽनुवाकस्तावुभौ कृष्णपक्ष-विषयौ पूर्ववद्याजनीयाविति। ते चानुवाका एवं श्रूयन्ते। "संज्ञानं विज्ञानं प्रज्ञानं ज्ञानमभिज्ञानं* संकल्पमानं प्रकल्पमानमुपकल्पमानमुपक्लृप्तं क्लृप्तं श्रेयोवसीय आयन्त्यं सम्भूतं भूतं प्रभूतम्। दर्शा दृष्टा दर्शना† विश्वरूपा सुदर्शना आप्यायमाना प्यायमाना प्याया सूनृता इरा आपूर्यमाणा पूर्यमाणा पूरयन्ती पूर्णा पौर्णमासी। प्रस्तुतं विष्टुतं संस्तुतं कल्याणं विश्वरूपं शुक्रममृतं तेजस्वि तेजः समिद्धं‡ अरुणं भानुमन्मरीचिमदभितपत्तपस्वत्। सुता सुन्वती प्रसुता सूयमाना§ऽभिषूयमाणापीती प्रपा सम्पा तृप्तिस्तर्पयन्ती कान्ता काम्या कामजाताऽऽयुष्मती कामदुघा"—इति।

रूढ़ावाऽयं पक्षशब्दः। स च, द्वेधा विभक्तस्य मासस्यैकैकमर्धं ब्रूते¶। पञ्चदशस्तोमनामकेन साममसूहेन मध्ये छिन्नस्य** त्रिवृत्

* ज्ञानदभिज्ञानत्,—इति मु० पुस्तके, परिज्ञानमनुज्ञानं,—इति क० वि० पुस्तकयोः पाठः।

† दर्शता,—इति क० वि० पुस्तकयोः पाठः।

‡ समृद्धं,—इति क० वि० पुस्तकयोः पाठः।

§ प्रस्तुताऽऽसूयमाना,—इति वि० पुस्तके पाठः।

|| कामा,—इति मु० पुस्तके पाठः।

¶ मासस्यैकैकमर्द्धंब्रूते,—इति क० वि० पुस्तकयोः पाठः।

** स्थितस्य,—इति क० पुस्तके पाठः।

स्तोम-नामकस्य साम-समूहस्य पूर्वोत्तर-भागाभ्यामुत्पन्नत्वात्तयोः पूर्वापरपक्षत्वम्। तौ च द्वौ पक्षावनु* देवानामसुराणाञ्च क्रमेण सृष्टत्वात्तयोः पक्षयोः प्रशस्तत्वाप्रशस्तत्वे। तदेतत्सर्वं होटब्राह्मणे तैत्तिरीयाः पठन्ति। "प्रजापतिरकामयत ; प्रजायेयेति, स तपोऽतप्यत स त्रिवृतं स्तोममसृजत तं पञ्चदशस्तोमोमध्यतः उदतृणत्† तौ पूर्वपक्षश्चापरपक्षश्चाभवतां पूर्वपक्षं देवा अन्वसृज्यन्त अपरपक्षमसुराः ततो देवा अभवन् असुराश्च‡ यं कामयेत वसीयान् स्यादिति तं पूर्वपक्षे याजयेत् वसीयानेव भवति, यं कामयेत पापीयान् स्यादिति तमपरपक्षे याजयेत् पापीयानेव भवति, तस्मात् पूर्वपक्षोऽपरपक्षात्कारुण्यतरः§"—इति। वसीयान्वसुमत्तरः। पापीयान् द्रव्यहीनः। कर्तॄणां शुभ-फल-प्रापकत्वेन करुणामतिशयेनार्हतीति कारुण्यतरः। तदेवमस्मिन् प्रकरणे संवत्सरायणर्त्तुमासपक्षानिर्णीताः।

॥०॥ इति श्रीमाधवीये कालनिर्णये संवत्सराख्यं द्वितीयं प्रकरणम् ॥०॥

* पक्षावनुक्रम्य,—इति वि० पुस्तके पाठः।

† उदन्तृणत,—इति क० पुस्तके पाठः।

‡ नरासुराश्च, इति क० वि० पुस्तकयोः पाठः।

§ करुणतरः,—इति मु० पुस्तके पाठः। एवं परत्र।

# अथ तिथयो निर्णीयन्ते।

( तत्र, प्रतिपत्-प्रकरणम्। )

तत्र, तिथिशब्दस्तनोतेर्धातोर्निष्पन्नः। तनोति विस्तारयति वर्द्धमानाक्षीयमाणां वा चन्द्रकलामेकां यः कालविशेषः, सा तिथिः। यद्वा, यथोक्त-कलया तन्यते इति तिथिः। तदुक्तं सिद्धान्तशिरोमणौ,—

"तन्यन्ते कलया यस्मात् तस्मात्तास्तिथयः स्मृताः"—इति।

एतदेवाभिप्रेत्य स्कान्दे पठ्यते,—

"अमा षोड़श-भागेन देवि, प्रोक्ता महाकला।
संस्थिता परमा माया देहिनां देहधारिणी॥
अमादि-पौर्णमास्यन्ता या एव शशिनः कलाः।
तिथयस्ताः समाख्याताः षोड़शैव वरानने"—इति।

अयमर्थः। या महामाया आधारशक्तिरूपा* देहिनां देहधारिणी संस्थिता, सा चन्द्र-मण्डलस्य षोड़श-भागेन परिमिता चन्द्र-देहधारिण्यमानाम्नी महाकलेति प्रोक्ता, क्षयोदय-रहिता नित्या तिथिसंज्ञकैव, इतरा अपि पञ्चदश कलाः दिवस-व्यवहारोपयोगिन्यः क्षयोदयवत्यः पञ्चदश तिथयो भवन्तीति तिथयः षोड़शैवेत्यविरुद्धं वचनम्,—इति। श्रुतिरस्मिन्नेवार्थे पञ्चनिर्णयएवोदाहृता; "तस्य रात्रयः पञ्चदश कला ध्रुवैवास्य षोड़शी कला"—इति।

* आधाररूपा,—इति क० मु० पुस्तकयोः पाठः।

एवं सत्यत्र सामान्य-विशेष-रूपेण तिथि-द्वैविध्यमुक्तं भवति। तत्र, येयममेत्युक्ता क्षयोदय-वर्जिता ध्रुवा षोड़शी कला, तद्युक्तः काल-स्तिथि-सामान्यम्। यास्त्ववशिष्टा वृद्धिक्षयोपेताः पञ्चदश कलास्ता-भिर्विशिष्टाः काल-विभागास्तिथि-विशेषाः।

तासां पञ्चदशानां कलानामेकैकां कलां वह्न्यादयः प्रजापत्यन्ताः पञ्चदश देवताः क्रमेण पिबन्ति। तत्र, वह्नि-पेया कला प्रथमं पीयते,—इति प्रथमेत्युच्यते, तया युक्तः काल-विशेषः प्राथम्य-वाचिना प्रतिपच्छब्देनाभिधीयते। एवं द्वितीयादीनां पञ्चदश्यन्तानां तिथीनां नामान्यवगन्तव्यानि। ता एताः कृष्ण-पक्ष-तिथयो भवन्ति। पुनश्च, ताः पीताः कला अनेनैव क्रमेण तत्तत्पातृ-वह्न्यादि-देवताभ्यो निर्गत्य चन्द्र-मण्डलं पूरयन्ति। ताभिर्युक्ताः काल-विशेषाः शुक्ल पक्ष-गताः प्रतिपदाद्यास्तिथयो भवन्ति। वह्न्यादि-देवतानां कला-पानं सोमोत्पत्तौ पठ्यते। तथाहि,—

"प्रथमां पिबते वह्निर्द्वितीयां पिबते रविः।
विश्वेदेवास्तृतीयां तु चतुर्थीं सलिलाधिपः॥
पञ्चमीं तु वषट्कारः षष्ठीं पिबति वासवः।
सप्तमीमृषयो दिव्या अष्टमीमजएकपात्॥
नवमीं कृष्णपक्षस्य यमः प्राश्नाति वै कलाम्।
दशमीं पिबते वायुः पिबत्येकादशीमुमा॥
द्वादशीं पितरः सर्वे समं प्राश्नन्ति भागशः।
त्रयोदशीं धनाध्यक्षः कुबेरः पिबते कलाम्॥
चतुर्द्दशीं पशुपतिः पञ्चदशीं प्रजापतिः।

निष्पीतस्य कलाशेष* श्चन्द्रमा न प्रकाशते ॥
कला षोडशिका या तु अपः प्रविशते सदा ।
अमायां तु सदा सोम ओषधीः प्रतिपद्यते ॥
तमोषधिगतं गावः पिबन्त्यम्बुगतञ्च यत् ।
तत्क्षीरममृतं भूत्वा मन्त्रपूतं द्विजातिभिः ॥
हुतमग्निषु यज्ञेषु पुनराप्यायते† शशी ।
दिनेदिने कलावृद्धिः पौर्णमास्यां तु पूर्य्यते‡"—इति ।

ज्योतिःशास्त्रे तु सिद्धान्तशिरोमणिकारेण तिथिरेवं प्रदर्शिता,—

"अर्कादिविनिसृतः प्राचीं यद्यात्यहरहः शशी ।
तच्चान्द्रमानमंशैस्तु ज्ञेया द्वादशभिस्तिथिः"—इति ॥

अयमर्थः। सूर्य्यमण्डलस्य अधः प्रदेशवर्त्ती शीघ्रगामी चन्द्रः, चन्द्रात् ऊर्द्धप्रदेशवर्त्ती मन्दगामी सूर्य्यः। तथा सति, तयोर्गति-विशेष-वशात् दर्शे चन्द्रमण्डलमन्यूनमनतिरिक्तं सत् सूर्य्यमण्डलस्याधोभागे व्यवस्थितं भवति। तदा, सूर्य्यरश्मिभिः साकल्येनाभिभूतत्वाच्चन्द्रमण्डलमीषदपि न दृश्यते। उपरितने दिने शीघ्रगत्या सूर्य्याद्विनिःसृतः शशी प्राचीं याति। त्रिंशदंशोपेतराशेः§ द्वादशभिरंशैः सूर्य्यमुल्लङ्घ्य गच्छति। तदा, चन्द्रस्य पञ्चदशसु भागेषु प्रथमभागो दर्शनयोग्यो भवति। सोऽयं

* निष्पीतः कलावशेष, इति मु॰ पुस्तके, स निष्पीतः कलाशेष,—इति क॰ पुस्तके पाठः।

† पुनराप्याय्यते,—इति वि॰ पुस्तके पाठः।

‡ पूर्णिमा, इति क॰ पुस्तके, पूर्य्यतः,—इति मु॰ पुस्तके पाठः।

§ त्रिंशदंशोपेतेराशौ,—इति वि॰ पुस्तके, त्रिंशदंशोपेतराशौ,—इति मु॰ पुस्तके पाठः।

भागः प्रथमकलेत्यभिधीयते। तत्कला-निष्पत्ति-परिमितः कालः प्रतिपत्तिथिर्भवति। एवं द्वितीयादितिथिष्ववगन्तव्यम्,—इति। तदेतद्विष्णुधर्मोत्तरे विस्पष्टमभिहितम्,—

"चन्द्रार्कगत्या कालस्य परिच्छेदो यदा भवेत्।
तदा तयोः प्रवक्ष्यामि गतिमाश्रित्य निर्णयम्॥
भगणेन समग्रेण ज्ञेयाद्वादश राशयः।
त्रिंशांशस्तु तथा राशेर्भाग इत्यभिधीयते॥
आदित्याद्विप्रकृष्टस्तु भागद्वादशकं* यदा।
चन्द्रमाः स्यात्तदा राम, तिथिरित्यभिधीयते"—इति।

सेयं द्वादशभिर्भागैः सूर्य्यमुल्लङ्घितवती प्रथमा चन्द्र-कला शृङ्गद्वयोपेत-सूक्ष्म-रेखाऽऽकारा शौक्ल्यमीषदुपयाति। उत्तरोत्तरदिनेषु सूर्य्यमण्डल-विप्रकर्ष-तारतम्यानुसारेण शौक्ल्यमुपचीयते। अनयैव रीत्या सन्निकर्ष-तारतम्येन मेचकत्वमुपचीयते। तदेतदुक्तं सिद्धान्तशिरोमणौ,—

"उपचयमुपयाति शौक्ल्यमिन्दो—
स्त्यजत इनं व्रजतश्च मेचकत्वम्।
जलमयजलजस्य गोलकत्वात्
प्रभवति तीक्ष्णविषाणरूपताऽस्य"—इति।

सूर्य्याचन्द्रमसोर्यौ सन्निकर्ष-विप्रकर्षौ तयोरवसानं दर्श-पूर्णिमयोः सम्पद्यते। तदाह गोभिलः,—"यः परोऽविप्रकर्षः सूर्य्याचन्द्रमसोः सा पौर्णमासी, यः परः सन्निकर्षः साऽमावास्या"—इति।

* भागं द्वादशकं,—इति क० वि० पुस्तकयोः पाठः।

नन्वत्र चन्द्रकलानां सूर्य्ये प्रवेश-निर्गमौ प्रतीयेते, सोमत्पत्तौ तु वह्न्यादि-देवतासु। नायं दोषः। अस्मदादि-दर्शनापेक्षया ज्योतिः-शास्त्रस्य प्रवृत्तत्वात्। सोमोत्पत्तौ तु वह्न्यादिदेवतानां तत्तत्कला-प्रयुक्ता तृप्तिर्विवक्षिता। यदि सूर्य्ये प्रवेश-निर्गमौ, यदि वा वह्न्या-दि-देवतासु, सर्व्वथाऽपि कला-प्रयुक्ताएव प्रतिपदादि-तिथयः।

ननु, सावन-दिनेषु सौर-दिवसेषु च* निर्णयमुपेक्ष्य चान्द्रतिथिष्वेव कुतो निर्णयोद्यमः,—इति चेत्। सन्देह-सद्भावादिति ब्रूमः। न खलु सौर-सावन-दिवसयोः सन्देह-सद्भावोऽस्ति, नियत-परिमाणत्वात्। तच्च ब्रह्मसिद्धान्तेऽभिहितम्,—

"सावनं स्यादहोरात्रमुदयादोदयाद्रवेः।
रवेस्त्रिंशस्तु राश्यंशस्तिथि-सम्भोगऐन्दवम्"—इति।

एकस्मिन् राशौ यावन्तं कालं रविर्वर्त्तते, तावतः कालस्य त्रिंशो-योऽयमंशः स सौरोदिवसः। तिथिरेका कला, तत्सम्भोगइन्दोर्यावता कालेन निष्पद्यते, तदैन्दवन्दिनम्। नचात्र सौर-सावनयोरिव चान्द्रेऽपि दिने सन्देहाभावः शङ्कनीयः, ह्रास-वृद्धि-वशेन सन्देह-सद्भावात्। ह्रास-वृद्धी च गर्गेण दर्शिते,—

"खर्व्वोदर्पस्तथा हिंस्रस्त्रिविधं तिथि-लक्षणम्।
धर्म्माधर्म्मवशादेवं† तिथिस्त्रेधा विवक्षिता"—इति।

खर्व्वा समतिथिः। दर्पा वृद्धि-युक्ता। हिंस्रा क्षय-युक्ता। तस्यैतस्य

---

* सौरादिदिवसेषु च,—इति क० वि० पुस्तकयोः पाठः।

† धर्म्माधर्म्मवशादेव,—इति क० वि० पुस्तकयोः पाठः।

त्रैविध्यस्य त्रिपरिवर्त्तन-विशेषेण तिथिः संपूर्णा खण्डा चेति द्वैविध्यमापद्यते । तत्र, संपूर्णा स्कन्दपुराणे दर्शिता,—

"प्रतिपत्प्रभृतयः सर्वा उदयादोदयाद्रवेः ।
संपूर्णा इति विख्याता हरिवासर-वर्जिताः"—इति ।

हरिवासर एकादशी । या तु नोक्त-लक्षणा, सा खण्डतिथिः । तत्र, संपूर्णायां विधि-निषेधयोर्नास्ति सन्देहः । खण्डतिथौ तु विधि-निषेध-व्यवस्थामाह गार्ग्यः,—

"निमित्तं कालमादाय वृत्तिर्विधि-निषेधयोः ।
विधिः पूज्यतिथौ तत्र निषेधः कालमात्रके ॥
तिथीनां पूज्यता नाम कर्मानुष्ठान-योग्यता ।
निषेधस्तु निवृत्त्यात्मा कालमात्रमपेक्षते"—इति ।

एवञ्च सति, खण्डतिथौ पूज्यत्वं निर्णेतव्यं भवति । तत्र, प्रतिपदमारभ्य पञ्चदश्यन्तास्तिथयः क्रमेण निर्णीयन्ते ।

तत्र, प्रतिपच्छब्द उपक्रमे वर्तते । चान्द्रः पक्षो मासो वा प्रतिपद्यते प्रारभ्यते यस्यान्तिथौ, सा तिथिः प्रतिपत् । प्रारम्भवाचित्वं च प्रतिपच्छब्दस्य बह्वृचब्राह्मणारण्यकसूत्रेषु* प्रयोगादवगम्यते । तथा च श्रुतिः,—"आ त्वा रथं यथोतय इदं वसो सुतमन्ध इति मरुत्वतीयस्य प्रतिपदनुचरौ"—इति । अयमर्थः । मरुत्वतीयं नाम किञ्चिच्छस्त्रम्(१) । तस्यात्वारथमित्ययं मन्त्रः प्रतिपत्प्रथमं पाठ्यः ।

* सूत्रादिषु,—इति क० वि० पुस्तकयोः पाठः ।

(१) अप्रगीतमन्त्रसाध्यास्तुतिः शस्त्रम् ।

इदं वसो सुतमन्धइत्ययं मन्त्रोऽनुचरः पश्चात्याय:,—इति। तथा, तैत्तिरीयाश्चाश्वमेधब्राह्मणे आमनन्ति,—"पवस्व वाजसातयइत्यनुष्टुप् प्रतिपद्भवति"—इति। तथा तएव दर्शपूर्णमास-ब्राह्मणे पठन्ति,— "साभिधेनीरनुवच्यन्ते ताव्याहृतीः पुरस्ताद्दध्यात् ब्रह्मैव प्रतिपदं कुरुते"—इति।

सा च प्रतिपत्तिथिर्यदा सूर्य्योदयमारभ्य पुनरुदय-पर्य्यन्ता भवति, तदा शुद्धत्वात् प्रतिपदि विहितं सर्व्वं निःशङ्कैस्तत्रानुष्ठेयम्। शुद्धत्वं च नारदीयपुराणे दर्शितम्,—

"आदित्योदय-वेलाया आरभ्य षष्टिनाडिका।

तिथिस्तु सा हि शुद्धा स्यात् सार्वतिथ्योऽह्ययं विधिः"—इति।

सूर्य्यसिद्धान्तेऽपि,—

"सर्वाह्णेताश्च तिथय उदयादोदयं स्थिताः।

शुद्धा इति विनिर्ज्ञेयाः षष्टिनाड्यो हि वै तिथिः"—इति।

यदा तु, सा प्रतिपत् खण्डतिथिः सती पूर्वोत्तरयोरह्नोर्दर्श-द्वितीयाभ्यां युज्यते, तदा दर्शयुक्तायाः पूज्यत्वात् तत्रानुष्ठेयम्। तत्पूज्यत्वं च पैठिनसिराह,—

"पञ्चमी सप्तमी चैव दशमी च त्रयोदशी।

प्रतिपन्नवमी चैव कर्तव्या सम्मुखी* तिथिः"—इति।

सम्मुखत्वं च स्कन्दपुराणे विवेचितम्,—

"सम्मुखी नाम सायाह्न-व्यापिनी दृश्यते यदा।

प्रतिपत्सम्मुखी कार्य्या या भवेदापराह्णिकी"—इति।

* साम्मुखी,—इति क० वि० पुस्तकयोः पाठः।

व्यासोऽपि,—

"प्रतिपत्सैव विज्ञेया या भवेदापराह्णिकी।
दैवं कर्म तथा ज्ञेयं पैत्र्यञ्च मनुरब्रवीत्"—इति॥

सायाह्नापराह्णादयः काल-विशेषाः सावन-दिवस-गतस्याह्नो भाग-भेदाः* अवगन्तव्याः। स च दिवसो विष्णुधर्मोत्तरे विवेचितः,—

"लघ्वक्षर-समा मात्रा निमेषः परिकीर्त्तितः।
अतः सूक्ष्मतरः कालो नोपलभ्यो भृगूत्तम॥
नोपलभ्यं यथा द्रव्यं सुसूक्ष्मं परमाणुतः।
द्वौ निमेषौ त्रुटिर्ज्ञेया प्राणो दशत्रुटिः स्मृतः॥
विनाडिका तु षट् प्राणास्ते षष्टिर्नाडिका स्मृता।
अहोरात्रन्तु तत्-षष्ट्या नित्यमेतत्प्रकीर्तितम्॥
त्रिंशन्मुहूर्त्तास्च तथा अहोरात्रेण कीर्तिताः।
तत्र पञ्चदश प्रोक्ता राम, रात्रिर्दिवा तथा॥
उत्तरान्तु यदा काष्ठां क्रमादाक्रमते रविः।
तदा तदा भवेद्वृद्धिर्दिवसस्य महाभुज॥
दिवसस्य यदा राम, वृद्धिं समधिगच्छति।
तदाश्रित-मुहूर्त्तानां तदा वृद्धिः प्रजायते॥
दिन-वृद्धौ रात्रि-हानिस्तद्धानिश्च यथा यथा†।
तदाश्रित-मुहूर्त्तानां हानिर्ज्ञेया तथा तथा॥

* भागभेदात्,—इति वि० पुस्तके पाठः।
† दिनवृद्धिर्यदा राम दोषाहानिस्तदाभवेत्,—इति वि० पुस्तके पाठः।

दक्षिणाश्च यदा काष्ठां क्रमादाक्रमते रविः।
दिवसस्य तदा हानिर्ज्ञातव्या तावदेव तु॥
क्षीयन्ते तस्य हानौ च तन्मुहूर्त्तास्तथैव च।
रात्र्याश्रिताश्च वर्द्धन्ते रात्रि-वृद्धिस्तथैव च॥
यदा मेषं सहस्रांशुस्तुलाञ्चैव प्रपद्यते।
समरात्रिन्दिवः कालोदिन-शब्दस्य वाचकः"—इति।

वाचकोवाच्यार्थः,—इति यावत्। अत्र, ये मुहूर्त्ताः* अभिहितास्तेषां नामानि श्रुति-ज्योतिःशास्त्र-स्मृतिषु विविधानि दर्शितानि। तत्र, श्रुतिं तावत्तैत्तिरीयाः पठन्ति,—"चित्रः केतुर्दाता प्रदाता सविता प्रसविता-ऽभिशास्ता-ऽनुमन्तेति एतेऽनुवाकामुहूर्त्तानां नामधेयानि"—इति। अत्र, द्वाभ्यां द्वाभ्यां पदाभ्यां एकैकस्यानुवाकस्य प्रतीकमुक्तम्। तथा सति, चत्वारोऽनुवाकाः सम्पद्यन्ते। तत्र, प्रथमे शुक्लपक्षगतस्याह्नो-मुहूर्त्ताः द्वितीये तद्रात्रेः, तृतीये कृष्णपक्षगतस्याह्नः चतुर्थे तद्रात्रे-रिति विवेकः।

ते चानुवाकाएवं श्रूयन्ते—"चित्रः केतुः प्रभान् आभान् सम्भान् ज्योतिष्मान् तेजस्वानातपंस्तपन्नभितपन्रोचनोरोचमानः शोभनः शो-भमानः कल्याणः। दाता-प्रदाताऽऽनन्दोमोदः प्रमोदः आवेशय-न्निवेशयन् संवेशयन्[†] सङ्शान्तः शान्तः आभवन् प्रभवन् सभवन् सम्भूतो भूतः। सविता प्रसविता दीप्तोदीपयन् दीप्यमानः ज्वलन् ज्वलिता

---

* ये मुहूर्त्तादिवाश्रितास्तथैव रात्र्याश्रिताश्च,—इति वि॰ पुस्तके पाठः।

† संवेशनः,—इति मु॰ पुस्तके पाठः।

तपस्वितपन् सन्तपन्रोचनोरोचमानः शुम्भूः शुम्भमानो*वामः । अभि
आस्ताऽनुमन्ताऽऽनन्दोमोदः प्रमोद आसादयन् निषादयन् संसादनः†
सन्नः सन्नः आभूर्विभूः प्रभूः शम्भूर्भुवः"—इति। एतेषु मुहूर्तेष्वेकैक-
मुहूर्तस्य पञ्चदश भागाः सूक्ष्ममुहूर्ताः । तथा च तदेव ब्राह्मणम्,—
"इदानीं तदानीमिति एते वै मुहूर्तानां मुहूर्ताः‡"—इति । इदानी-
मित्यादिकोऽनुवाको मन्त्रकाण्डे एवं पठ्यते,—"इदानीं तदानीमेतर्हि
क्षिप्रं अजिरं आशु निमेषः फणोद्रवन् अतिद्रवन् त्वरंस्त्वरमाण
आशुरशीयान् जवः"—इति । ज्योतिःशास्त्रे तु अहोरात्रयोस्त्रिंशन्मु-
हूर्तानां नामानि कश्यपेनोक्तानि,—

"गौरीवल्लभ-सर्प-मित्र-पितरो वस्वम्बुविश्वाह्वया
ब्रह्माऽम्भोरुहसम्भवेन्द्र§ हुतभुग्दैत्येशनक्तञ्चराः ।
तोयेशार्यमयोनयो दश तथा पञ्च क्षणावासरे ।
रुद्राजाहिर्बुध्न्य|| पूषाश्विनाः स्युः
कीनाशोऽग्निर्धातृचन्द्रादितीज्याः ।
विष्णुर्भानुस्त्वष्टृधाता¶ मुहूर्ताः
रात्रौ क्रूरास्त्वन्तकाशाग्नि** रुद्राः"—इति ।

---

* शम्भूः शम्भूमाना,—इति क० वि० पुस्तकयोः पाठः ।
† संसादयन्,—इति क० पुस्तके पाठः।
‡ मुहूर्ताना मुहूर्तनामधेयानि,—इति वि० पुस्तके पाठः ।
§ सम्भवेन्द्र,—इति वि० पुस्तके पाठः ।
|| र्ध्न्य, इति क० वि० पुस्तकयोः पाठः ।
¶ वाता,—इति वि० पुस्तके पाठः ।
** कालाग्नि,—इति मु० पुस्तके पाठः ।

स्मार्त्तानि तु नामानि पुराणे दर्शितानि,—

"रौद्रः श्वेतश्च मैत्रश्च तथा सारभटः* स्मृतः ।
सावित्रोवैश्वदेवश्च गान्धर्वः कुतपस्तथा ॥
रौहिणस्तिलकश्चैव विभवोनिर्ऋतस्तथा† ।
शम्बरो‡ विजयश्चैव भेदाः पञ्चदश स्मृताः"—इति ।

एते पञ्चदश सूर्य्योदयादारभ्य क्रमाद्दिवामुहूर्त्ताः । तथा रात्रि-मुहूर्त्ताः,—

"शङ्करश्चाजपादश्च तथाऽहिर्बुध्न्य§ मैत्रकौ ।
आश्विनोयाम्यवाह्नेयौ वैधात्रश्चान्द्रएवच ॥
आदितेयोथ जैवश्च वैष्णवः सौरएवच ।
ब्राह्मा नाभस्वतश्चैव मुहूर्त्ताः क्रमशोनिशि"—इति ।

ज्योतिः शास्त्रे प्रकारान्तरेण पठ्यते,—

"रौद्राहि-मित्र-पितरोवसु वारिधिश्च
विश्व-प्रजापति-शशाङ्क-कृशानुरिन्द्रः ।
नक्तञ्चराश्च वरुणार्य्यमयोनयश्च
प्रोक्ता दिने दश च पञ्च तथा मुहूर्त्ताः ॥
निशामुहूर्त्ता गिरिजाऽजपादाऽ—
हिर्बुध्न-पूषाऽश्वि-यमाग्नयश्च ।

---

* हारभटः,—इति वि० पुस्तके पाठः ।
† निर्ऋतिस्तथा,—इति कु० वि० पुस्तकयो पाठः ।
‡ शवरो,—इति मु० पुस्तके पाठः ।
§ र्बुध्न,—इति क० वि० पुस्तकयोः पाठः ।

विधातृचन्द्रादितिजीवविष्णु—
तिग्मद्युतित्वष्टृसमीरणाश्च* ॥

यथोक्त-नानाविध-नामक-त्रिंशन्मुहूर्तोपेतस्य सावनाहोरात्रस्य यदहः पञ्चदश-मुहूर्तात्मकं तस्याह्नोभागाः प्रातर्मध्याह्नापराह्णादयः†। ते चाह्नोभागा मत-भेदेन पञ्चधा विकल्पन्ते। द्विधा त्रेधा चतुर्द्धा पञ्चधा पञ्चदशधा चाहर्विभज्यते,—इति पञ्च मत-भेदाः। अत्र, द्विधा विभागः स्कन्दपुराणे दर्शितः,—

"आवर्तनात्तु पूर्वाह्णो ह्यपराह्णस्ततः परः"—इति।

एतदेवाभिप्रेत्य मनुराह,—

"यथा चैवापरः पक्षः पूर्वपक्षाद्विशिष्यते।
तथा श्राद्धस्य पूर्वाह्णादपराह्णोविशिष्यते"—इति।

त्रेधा विभागोऽपि स्कन्दपुराणे दर्शितः,—

"ऊर्ध्वं सूर्य्योदयात्प्रोक्तं मुहूर्तानां तु पञ्चकम्।
पूर्वाह्णः प्रथमः प्रोक्तोमध्याह्नस्तु ततः परः॥
अपराह्णस्ततः प्रोक्तोमुहूर्तानान्तु पञ्चकम्"—इति।

शातातपोऽपि,—"तस्मादह्नस्तु पूर्वाह्णे देवा अशनमभ्यवहरन्ति मध्यन्दिने मनुष्या अपराह्णे पितरः"—इति। एतमेव विभागमभिप्रेत्य महत्समंवत्सरसत्र-ब्राह्मणे आम्नायते,—

* ज्योतिःशास्त्रे, इत्यारभ्य, समीरणाश्च,—इत्यन्तोग्रन्थः मु० पुस्तके न दृश्यते।

† प्रातर्मध्याह्नसायाह्नाः,—इति वि० पुस्तके, अपराह्णसायाह्नप्रातरादयः,—इति मु० पुस्तके पाठः।

"ऋग्भिः पूर्वाह्ने दिवि देव ईयते
यजुर्वेदे तिष्ठति मध्य अह्नः* ।
सामवेदेनास्तमिते महीयते
वेदैरशून्यस्त्रिभिरेति सूर्यः"—इति ।

श्रुत्यन्तरेऽपि,—"पूर्वाह्णो वै देवानां मध्यन्दिनो† मनुष्याणामपराह्णः पितॄणाम्"—इति । चतुर्द्धा विभागमाह गोभिलः,—

"पूर्वाह्णः प्रहरं सार्द्धं मध्याह्नः प्रहरं तथा ।
आ तृतीयादपराह्णः सायाह्नश्च ततः परम्"—इति ।

पञ्चधा विभागं व्यास आह,—

"मुहूर्त-त्रितयं प्रातस्तावानेव तु सङ्गवः ।
मध्याह्नस्त्रिमुहूर्तः स्यादपराह्णोऽपि तादृशः ॥
सायाह्नस्त्रिमुहूर्तस्तु सर्व-धर्म-बहिःकृतः"—इति ।

वृद्धपराशरेऽपि,—

"लेखाऽऽदित्याप्रभृतयो‡ मुहूर्तास्त्रयएव तु ।
प्रातस्तु स स्मृतः कालोभागश्चाह्नः स पञ्चमः ॥
सङ्गवस्त्रिमुहूर्तोऽथ मध्याह्नस्तत्समः स्मृतः ।
ततस्त्रयोमुहूर्तास्त्वायापराह्णो विधीयते ॥
पञ्चमोऽथ दिनांशोयः स सायाह्न इति स्मृतः"—इति ।

---

* मध्येऽह्नः,—इति क॰ वि॰ पुस्तकयोः पाठः ।
† मध्यन्दिनं,—इति क॰ वि॰ पुस्तकयोः पाठः ।
‡ लेखाप्रभृत्यथादित्यात्,—इति क॰ वि॰ पुस्तकयोः पाठः ।

एतमेव विभागमभिप्रेत्य कश्चिन्मन्त्रः सङ्गवकालमवलम्ब्य व्यवजहार*।
तं मन्त्रञ्च बह्वृचा आश्विनसूक्ते आमनन्ति,—

"उता यातं सङ्गवे प्रातरह्नो-
मध्यन्दिन उदिता सूर्यस्य।
दिवा नक्तमवसा शन्तमेन
नेदानीं पीतिरश्विनाततान"—इति।

अस्मिन्मन्त्रे, प्रातः-सङ्गव-मध्यन्दिनानां स्व-संज्ञाभिर्व्याहृतत्वात् अव-शिष्टयोर्भागयोरप्येतत्त्रितयमुपलक्षणं द्रष्टव्यम्। तैत्तिरीयब्राह्मणे, यथोक्तानां पञ्चानां प्रातरादीनां भागानां मध्यवर्तिषु चतुर्षु सन्धि-ष्वग्निष्टोमोक्थ्यषोडश्यतिरात्राख्यानां सोमसंस्थानां निर्माणं वक्तुं यथोक्त-पञ्च-भागाः साधिष्ठातृदेवताः समाम्नाताः,—"देवस्य सवितुः प्रातर्मित्रस्य सङ्गवः बृहस्पतेर्मध्यदिनं भगस्यापराह्णः वरुणस्य सायम्"—इति। छन्दोगाश्च सप्तभक्त्युपेतस्य साम्नः आदित्यात्मनो-पासनं वक्तुमादित्यस्य सम्बन्धिनः कालभेदान्विभज्य तेषां हिङ्कारादि-सप्तभक्तिरूपतां विवक्षन्तआमनन्ति,—"तस्य यत्पुरोदयात् स हिङ्कारः। अथ यत्प्रथमोदिते स प्रस्तावः। अथ यत्सङ्गववेलायां स आदिः। अथ यत्सम्प्रति मध्यन्दिने स उद्गीथः। अथ यदूर्ध्वं मध्यन्दिनात् प्रागपराह्णात् स प्रतिहारः। अथ यदूर्ध्वमपराह्णात् प्रागस्तमयात्स उपद्रवः। अथ यत्प्रथमास्तमिते तन्निधनम्"—इति। वाजसनेयि-नोऽप्येवमामनन्ति,—"आदित्यो वै सर्वऋतवः स यदैवोदेत्यथ वसन्तो यदा सङ्गवोऽथ ग्रीष्मो यदा मध्यन्दिनोऽथ वर्षा यदाऽपराह्णोऽथ

* व्याजहार,—इति वि० पुस्तके पाठः।

शरद्यदैवास्तमेत्यथ हेमन्तः"—इति। पञ्चदशधा विभागः शङ्खेन दर्शितः,—

"रौद्रश्चैवश्च मैत्रश्च तथा शालकटः स्मृतः।
सावित्रश्च जयन्तश्च गान्धर्वः कुतपस्तथा॥
रौहिणश्च विरिञ्चश्च विजयो नैर्ऋतस्तथा।
महेन्द्रो वरुणश्चैव भेदाः पञ्चदश स्मृताः"—इति॥

तत्र, पञ्चधा विभागपक्षस्य बहु-श्रुति-स्मृतिषु दृष्टत्वात् प्रायेणैतमेव पक्षमाश्रित्य विधि-निषेध-शास्त्राणि प्रवर्त्तन्ते। "सूर्योज्योतिर्ज्योतिः सूर्यः स्वाहेति प्रातः"—इति श्रुतौ प्रातःकालमुपजीव्य तात्कालीनस्य होमस्य मन्त्र-विशेषोऽभिहितः। स्मृतावपि,—

"सन्ध्यामुपास्य विधिवत् प्रातर्होमं समाचरेत्"—इति

होमाङ्गत्वेन प्रातःकाल आश्रितः। सङ्गवस्तु कात्यायनेन व्यवहृतः,—

"सन्धिश्चेत्सङ्गवादूर्द्धं प्राक् चेदावर्त्तनाद्रवेः*।
सा पौर्णमासी विज्ञेया सद्यस्काल-विधौ तिथिः"—इति।

बौधायनेन मध्याह्नोव्यवहृतः,—

"मध्याह्नव्यापिनी ग्राह्या एकभक्त-व्रते तिथिः"—इति।

"अमावास्यायामपराह्णे पिण्डपितृयज्ञेन चरन्ति"—इति श्रुत्या अपराह्णोव्यवहृतः। सायाह्न-व्यवहारस्तु पूर्व्वमेव, 'संमुखी नाम'—इति वचनेनोदाहृतः। त्रेधा विभागस्तु, सोमयागे सवनत्रये उपयुज्यते। यथोक्तेषु पञ्चसु कालेषु यानि विहितानि कर्म्माणि, तानि दैव-पित्र्य-

* अर्द्धोगावर्त्तनाद्रवेः,—इति वि॰ पुस्तके पाठः।

रूपेण राशि-द्वयं कृत्वा, तयोः गौणकालाभ्यनुज्ञानाय द्वेधा विभागो-दर्शितः। चतुर्द्धा विभागस्तु, प्रकरणबलात् गोभिलस्मृत्युक्त-कर्म-विशेषेषु द्रष्टव्यः। पञ्चदशधा विभागे मुहूर्त-विशेषोपजीवनेन विधि-निषेधौ ज्योतिःशास्त्रे द्रष्टव्यौ।

एवञ्च सति, प्रकृते पञ्चस्वह्नोभागेषु पञ्चमं सायाह्नभागं व्याप्य ततः पूर्वं चतुर्थमपराह्नभागं या प्रतिपत् संस्पृशति, तादृशी पूर्व-विद्धोपवासे पूज्या। अत्र, तिथीनां वेधः पैठीनसिना दर्शितः,—

"पञ्चदश्यपि तिथयस्तिथिं पूर्वां तथोत्तराम्।
त्रिभिर्मुहूर्त्तैर्विध्यन्ति सामान्योऽयं विधिः स्मृतः"—इति।

पूर्वेद्युरुदयानन्तरममावास्या त्रिमुहूर्त्ता चेत्, सा प्रतिपदं विध्यति। परेद्युस्तस्मयात् प्राक् द्वितीया त्रिमुहूर्त्ता चेत्साऽपि पूर्वां प्रतिपदं वि-ध्यति*। एवमुभयतोविद्धयोर्दिन-द्वय-वर्त्तिन्योः प्रतिपदोर्मध्ये किं पूर्वा ग्राह्या उतोत्तरा,—इति विचार्य्यते। तत्र, पूर्वायाग्राह्यत्वं पैठीनसि-स्कन्द-व्यासा आहुः। तद्वचनानि पूर्वमुदाहृतानि। निगमेऽप्येव-मेवोक्तम्,—

"युग्माग्नियुगभूतानां षण्मुन्योर्वसुरन्ध्रयोः।
रुद्रेण द्वादशी युक्ता चतुर्दश्या च पूर्णिमा॥
प्रतिपद्यप्यमावास्या† तिथ्योर्युग्मं महाफलम्।
एतद्व्यस्तं महाघोरं‡ हन्ति पुण्यं पुराकृतम्"—इति।

* न्यूनया तु न विध्यते,—इत्यधिकं क० वि० पुस्तकयोः।
† प्रतिपदाप्यमावास्या,—इति क० वि० पुस्तकयोः पाठः।
‡ महादोषं,—इति मु० पुस्तके पाठः।

युग्मं द्वितीया। अग्निस्तृतीया। युगं चतुर्थी। भूतं पञ्चमी। षट् षष्ठी। मुनिः सप्तमी। वसुरष्टमी। रंध्रं नवमी। रुद्र एकादशी। अत्र, युग्माग्न्यादि-सप्त-युग्मेषु पूर्वतिथिरुत्तरविद्धा ग्राह्या, उत्तरा तु पूर्वविद्धेत्युक्तं भवति। स्मृत्यन्तरेऽपि,—

"एकादशी तथा षष्ठी अमावास्या चतुर्थिका।
उपोष्याः पर-संयुक्ताः पराः पूर्वेण संयुताः"—इति॥

अन्यत्रापि,—

"षष्ठ्यष्टमी अमावास्या कृष्णपक्षे त्रयोदशी।
एताः परयुताः पूज्याः पराः पूर्वेण संयुताः"—इति॥

शिवशङ्करगीतायाम्,—

"एकादश्यष्टमी षष्ठी द्वितीया च चतुर्थिका।
चतुर्दश्यप्यमावास्या उपोष्याः स्युः परान्विताः"—इति॥

एतेषु सर्वेषु वचनेषु प्रतिपदः पूर्वविद्धायाः पूज्यत्वं प्रतीयते। एतस्यैव पक्षस्यानुग्राहक उत्तरविद्धायानिषेधो वृद्धवसिष्ठेन स्मर्यते,—

"द्वितीया पञ्चमी वेधाद्दशमी च त्रयोदशी।
चतुर्दशी चोपवासे हन्युः पूर्वोत्तरे तिथी"—इति॥

द्वितीयादयः स्ववेधे पूर्वामुत्तराञ्च तिथिं हन्युरित्यभिधानादुत्तरा प्रतिपदुपवासे निषिद्धा भवति। आपस्तम्बस्तूत्तर-विद्धायाः प्रतिपदः पूज्यत्वमाह,—

"प्रतिपत्सद्वितीया स्यात् द्वितीया प्रतिपद्युता"—इति।

भविष्योत्तरेऽप्ययमेव पाठः। अत्रेदं चिन्त्यते। किं मुत्तर-विद्धा-पूज्यत्व-वचनेन प्रतिपन्मात्रं विषयीक्रियते किं वा प्रतिपद्विशेषः? यदा

प्रतिपद्विशेषः; तदाऽपि किमशुक्लपक्षगतत्वं, किं वाऽनुपोष्यत्वं, पूर्वदिने अमापराह्णिकत्वं वा, तत्रैवामायाह्निकत्वं वा, तत्रैवापराह्न-सायाह्नो-भयाव्यापित्वं वा, बलिदिनेतरत्वं वा, शुक्लपक्षादि-निखिल-प्रति-योगि-राहित्यं वा?

ननु, सर्वत्र संशयः कोटिद्वयमवलम्बते, कोटिद्वयावलम्बी विमर्शः संशयः,—इति हि तार्किक-डिण्डिमः। अतो बहुपक्षोपन्यासो न युक्तः। मैवम्। प्राणाधिकरणवदुपपत्तेः। अस्त्युत्तर-मीमांसायां प्रथमा-ध्याय-प्रथमपादावसाने प्राणशब्दं विषयीकृत्य प्रवृत्तमधिकरणम्। तस्य च संग्राहकावेतौ श्लोकौ भवतः,—

"प्राणोऽस्मीत्यत्र वाय्विन्द्र-जीव-ब्रह्मसु संशयः।
चतुर्णां लिङ्ग-सद्भावात् पूर्वपक्षस्त्वनैकिकः॥
ब्रह्मणोऽनेकलिङ्गानि तानि सिद्धानि नान्यथा*।
अन्येषामन्यथा सिद्धेर्व्युत्पाद्यं ब्रह्म नेतरः"—इति।

अयमर्थः। कौषीतकिब्राह्मणे प्रतर्द्दनायोपसन्नायेन्द्रणवमुपसंदि-देश,—"प्राणोऽस्मि प्रज्ञात्मा तं मामायुरमृतमित्युपास्व"—इति। तत्र संशयः। किं प्राणशब्देन उच्छ्वास-निश्वास-कारी वायुर्विवक्षितः, उतेन्द्र-शब्दाभिनेयः सहस्राक्षत्वाद्याकारवान्देवता-विशेषः, आहोस्वित् कार्य्य-कारणाध्यक्षोजीवः, अथवा परं ब्रह्म? इति।

सन्ति चात्र प्रकरणे, पक्ष-चतुष्टय-गमकानि चतुर्विधानि लि-ङ्गानि। "इदं शरीरं प्रतिगृह्योत्थापयति"—इति* प्राणवायो-र्लिङ्गम्। "अस्मि"—इत्यहङ्कारवादो वक्तुरिन्द्राख्यस्य देवता-विशेषस्य

* सिद्धान्यनन्यथा,—इति क० मु० पुस्तकयोः पाठः।

लिङ्गम्। "न वाचं विजिज्ञासीत वक्तारं विद्यात्"—इत्यादिना श्रुतं वक्तृत्वादिकं जीव-लिङ्गम्। "आनन्दोऽजरोऽमृतः"—इत्यादिकं ब्रह्म-लिङ्गम्। चतुर्णां लिङ्गानां समबलत्वादिच्छया यत्किञ्चित् स्वीकर्त्तव्य मिति पूर्वःपक्षः। आनन्दत्वाजरत्वादीनां ब्रह्म-लिङ्गानामनेकत्वात्तेषाञ्च वाय्वादौ कथञ्चिदपि योजयितुमशक्यत्वात्, शरीरोत्थापनादीनां वाय्वादि-लिङ्गानां तदुपाध्युपहिते ब्रह्मणि सुसंपादत्वाद्ब्रह्मैवात्र प्राण-शब्देन विवक्षितमिति राद्धान्तः,—इति।

पूर्वमीमांसायामपि, षष्ठाध्यायस्य सप्तमे पादे सहस्रसंवत्सराधिक-रणस्य संशये पक्षाः अष्टावुपन्यस्ताः। किमस्मिन् सत्रे दीर्घायुषां गन्धर्वादीनामधिकारः, उत रसायनेन सिद्धानां मनुष्याणाम्, अथ वा पितृ-पुत्र-पौत्रादि-परम्परा-रूपस्य कुलस्य, आहोस्विदस्मादेव शा-स्त्रादत्र प्रवृत्तस्य सहस्रसंवत्सरमायुर्भविष्यति, किं वा सार्द्धद्विशतानां* पुरुषाणामत्राधिकारः(१), अत्र संवत्सरेतिकिं मासपरा वा, द्वादश-रात्रि-परा वा, दिन-परा वा? इति। एवञ्च सति, संशयस्यैक कोटित्वलाक्षिकैर्व्यावर्त्यते, न तु बहुकोटिकत्वम्।

नन्वेवमपि यथोक्तानां पक्षाणां प्राणाधिकरण-न्यायेन गमकानि लिङ्गानि वक्तव्यानीति चेत्। तान्युदाहरामः। "द्वितीया प्रति-

* सार्द्धविंशतीनां,—इति वि॰ पुस्तके पाठः। [illegible]याः

(१) सार्द्धद्विशतपुरुषैश्चतुर्भिर्वत्सरैः सत्रेऽनुष्ठिते सति [illegible] नां वर्षाणां चतुर्भिर्गुणनेन सहस्रं संवत्सराः सम्पद्यन्ते। तथा[illegible]"—इ[illegible]धिकरणे षष्ठाध्यायीय-सप्तमपाद-गत-षट्त्रिंशत्सूत्रे भाष्यकार[illegible] सुस्पष्टम्। "अर्द्ध-तृतीयानि शतानि दीक्षिष्यन्ते चतुर्भिर्वर्षैः समाप्य[illegible]"—इति।

पद्युता"—इत्युक्ते सामान्यतः प्रतिपन्मात्रं प्रतीयते । युग्माग्नि-वाक्ये, 'प्रतिपद्यप्यमावास्या'-इति पूर्वदिन-पूज्यत्वस्य शुक्लपक्ष-विषयत्वादितरस्य कृष्णपक्ष-विषयत्वम् । न चात्रामावास्याशब्दः पूर्णिमाया अप्युपलक्षणम्,—इति शङ्कनीयम् । 'चतुर्दश्या च पूर्णिमा'—इति पूर्णिमायाः पूर्व-दिनेन सह युग्मत्वाभिधानात् । उदाहृत-स्मृत्यन्तरेण,—

"उपोष्याः पर-संयुक्ताः पराः पूर्वेण संयुताः"—

इत्यमावास्या-युतायाः प्रतिपद उपोष्यत्वाभिधानात् द्वितीया-युक्तायाः उपवास-व्यतिरिक्त-व्रतादि-विषयत्वम् । उपोष्य-शब्देन व्रतादीनामुपलक्षणमिति चेत् । न, "पूर्वाह्णो वै देवानाम्"—इति श्रुत्या व्रतादौ दैवे पूर्वाह्णस्य विहितत्वेनोत्तर-दिन-स्वीकारे कर्म-काल-व्याप्ति-लाभात् ।

"यस्मिन् काले तु यत् कर्म तत्कालव्यापिनी तिथिः"—

इति हि कर्म-काल-व्याप्तिः स्मर्यते । न चोपवासेऽपि समानमेतदिति वाच्यम् । उपवासस्याहोरात्र-साध्यत्वेन खण्डतिथौ* संपूर्ण-कर्म-काल-व्याप्त्यसम्भवात् । व्याप्ति-बाहुल्यन्तु पूर्व-विद्धायामेव भवति । अह्नोऽपर-भागे कृत्स्नायां रात्रौ च तद्व्याप्तेः । "उदये तूपवासस्य"—इति स्मृत्या परेद्युरुपवासः प्राप्नोतीति चेत् । न, तस्याः सामान्य-शास्त्रत्वेन प्रतिपदुपवासाभिधायिनो विशेष-शास्त्रात् दुर्बलत्वात् । पैठीनसि-स्कन्द-व्यासैः पूर्वतिथावपराह्ण-व्यापितया, सायाह्न-व्यापितया, उभय-व्यापितया च, पूज्यत्वाभिधाने सति तासामेव तिसृणां व्याप्तीनामभावे† उत्तर-तिथौ पक्ष-त्रयं सम्पद्यते ।

* खर्वगर्डतिथौ,—इति वि० पुस्तके पाठः ।

† त्रिभिरभावैः,—इति पाठान्तरम् ।

ननु, पूर्वतिथावपराह्ण-व्याप्तौ सत्यां तन्नान्तरीयकतया सायाह्न-व्याप्तेरवश्यम्भावित्वेन पृथक्तदभिधानं निरर्थकमिति चेत्। किमिदं केवल-सायाह्नाभिधायि-वाक्ये चोदयसि, किं वोभयाभिधायि-वाक्ये? नाद्यः। यदा विनैवापराह्ण-व्याप्तिं सायाह्नमात्रं व्याप्यते, तदाऽपि पूर्वविद्धायाः पूज्यताया वक्तव्यत्वात्। द्वितीये, वैश्वानरेष्टि-न्यायेनाव-युत्यानुवादो* भविष्यति। स च न्याय उद्भिदादि-पादे व्यवस्थितः।

काम्यकाण्डे श्रूयते,—"वैश्वानरं द्वादशकपालं निर्वपेत् पुत्रे जाते, यदष्टाकपालोभवति गायत्र्यैवैनं ब्रह्मवर्चसेन पुनाति, यन्नवकपालस्त्रि-वृतैवास्मिंस्तेजोदधाति, यद्दशकपालोविराजैवास्मिन्नन्नाद्यन्दधाति, यदे-कादशकपालस्त्रिष्टुभैवास्मिन्निन्द्रियं दधाति"—इति। अत्र, द्वादश-कपालेष्टौ ब्रह्मवर्चसादि-फल-विशेषायाष्ट-कपालादि-गुण-विधिरिति पूर्वः पक्षः। उत्पत्ति-शिष्ट-द्वादशकपालेनावरोधे सत्युत्पन्न-शिष्टाना-मष्टाकपालादीनामत्रावकाशाभावादुपक्रमोपसंहारान्तर्गतत्वेन तेषां विध्यन्तराभावाच्चावयवैरष्टाकपालादिभिर्नान्तरीयक-सिद्धैरवयविनो द्वादशकपालस्य स्तुतिरिति सिद्धान्तः।

एवमत्रापि यदा सायाह्न-व्यापिन्यपि गृह्यते, तदा अपराह्ण-व्या-पिन्याग्रहणं किमु वक्तव्यमिति नान्तरीयक-सिद्धया सायाह्न-व्याप्त्या अपराह्ण-व्याप्तिः प्रशस्यते। स्कन्दपुराणे बलिदिनाभिधानायाः शुक्ल-प्रतिपदः पूर्व-विद्धत्वाभिधानादितरा सर्वा प्रतिपदुत्तरेत्येष पक्षः प्रती-यते। शुक्लपक्षोपवासापराह्ण-सायाह्न-बलिदिनानां पञ्चानां सम-

* न्यायेनैव पूज्यत्वानुवादो,—इति क० वि० पुस्तकयोः पाठः।

ह्रस्य पूर्व-तिथि-प्रयोजकत्वे सत्यन्तिमः पक्ष उदेति। एवं बहुविध संशये सति निर्णयं ब्रूमः।

यद्यपि, 'द्वितीया प्रतिपद्युता'—इत्यत्र न कोऽपि विशेषः पठ्यते, तथाप्यशेष-प्रतिपत्स्वीकारे युग्माग्न्यादीनि बहूनि वाक्यानि बाध्येरन्। न चान्तिमः पक्षो युक्ति-सहः। तदा हि पूर्वविद्धायाः प्रयोजकमेवं वक्तव्यम्;—शुक्लपक्ष सायाह्नापराह्न-व्यापिनि बलिदिने य उपवासः, स पूर्वविद्धाया विषयः,—इति। तत्र शक्यं न शक्यते, बलिदिनत्वं निमित्ती कृत्य उपवासस्याविधेयत्वात्। पूजोत्सवादिकमेव हि तत्र विहितम्। अतः, समूहस्य प्रयोजकत्वाभावे शुक्लपक्षादि-पञ्चस्वन्यतमस्य प्रयोजकत्व-मभ्युपेयम्। तत्र, किमिच्छया विकल्पः, आहोस्विदेकं प्रतिनियतम्,—इति विचारे, विकल्पस्तावन्न युज्यते, अष्ट-दोष-ग्रस्तत्वात्। तथाहि,—

यदा बल्युत्सवस्य प्रयोजकत्वं स्वीक्रियते, तदोपवास-वाक्यस्य प्राप्तं प्रामाण्यं परित्यज्येत। अप्राप्तञ्चाप्रामाण्यं स्वीक्रियेत। *पुनरपि यदा कदाचिदुपवासस्य प्रयोजकत्व-स्वीकारे कल्पितमप्रामाण्यमपक्रूयेत, निराकृतञ्च प्रामाण्यमुज्जीव्येत*। तदेवमुपवास-वाक्ये चत्वारो दोषाः। अनेनैव न्यायेन बल्युत्सव-वाक्येऽपि यथोक्ताश्चत्वारो दोषा उत्प्रेक्ष-णीयाः। न चैवं, व्रीहि-यवादावपि विकल्पानस्यादिति वाच्यम्। अगत्या तत्र तदाश्रयणात्। तदाहुर्भट्टाचार्याः।

"एवमेषोऽष्टदोषोऽपि यद्व्रीहि-यव-वाक्ययोः।

---

* यथा, यदोपवासस्य प्रयोजकत्वं स्वीक्रियते, तदा परित्यक्तं प्रामाण्यं स्वीक्रियेत, स्वीकृतञ्चाप्रामाण्यं परित्यज्येत,—इति क० वि० पुस्तकयोः पाठः।

विकल्प आश्रितस्तत्र गतिरन्या न विद्यते"—इति ।

प्रकृते तु गत्यन्तर-सम्भवान्न विकल्पः । अतोविकल्पासंभावादेकस्यैव प्रतिनियतस्य स्वीकर्त्तव्यत्वे सति शुक्लपक्षस्यैव स्वीकरणं युक्ततरं मन्यामहे । तथा सति बह्वनुग्रह-सिद्धेः । युग्मादि-वाक्यं बलिदिन-वाक्यमुपवास-वाक्यञ्चेत्येतान्यनुगृह्यन्ते । न ह्येतानि कृष्णपक्ष-विषयतया कथञ्चिदपि योजयितुं शक्यन्ते। तदनुसारेण द्वितीया-युतत्वं कृष्ण-पक्ष-विषयत्वेन सङ्कोचनीयम् । तस्य सामान्य-वचनत्वात् । इत्थं शुक्ल-कृष्ण-प्रतिपदोः क्रमेण पूर्वोत्तर-विद्धतया व्यवस्थितौ सत्यां, योऽयं द्वितीया-युक्तोपवास-निषेधः, असौ शुक्ल-पक्ष-विषयतया योजनीयः । यद्यप्यापराह्णिक-वचनं शुक्ल-कृष्ण-पक्ष-द्वय-साधारणं प्रतिभासते, तथापि शुक्ल-पक्ष-विषयत्वमेव तस्य न्याय्यम् । सांमुख्यमुपजीव्य प्रवृत्तत्वात् । कृष्णपक्षे द्वितीया-युतायाः प्रतिपदोविमुखत्वात् ।

नन्वेवं सति यदा शुक्लपक्षे सायाह्नमात्रं व्याप्नोति नत्वपराह्णं, तदानीमुत्तरतिथिः प्रसज्येतेति चेत् । नैवम्। 'संमुखी नाम सायाह्न-व्यापिनी'—इति वचनेन तादृश-विषये पूर्वतिथेर्विधानात् । एवमपीषन्न्यून-सायाह्न-व्याप्तौ शुक्लपक्षेऽपि परेद्युरेव प्रसज्येत,—इति चेत्। प्रसज्यतां नाम, पूर्वतिथेर्युग्म-वाक्य। विषयत्वाभावात्। यदा प्रातरमावस्या त्रिमुहूर्त्ता ततोऽधिका वा सायञ्च प्रतिपत् त्रिमुहूर्त्ता ततोऽधिका वा भवति, तादृश्याएवोभयतस्त्रिमुहूर्त्तवेधोपेतायास्तिथेस्तद्विषयत्वात्। न च, त्रिमुहूर्त्तवेधः सर्वसाधारणो न प्रतिपद्विषयः,—इति शङ्कनीयम्। विशेष-वचनाभावे सामान्यस्य स्वीकर्त्तव्यत्वात्। द्वितीया-युक्तोपवास-निषेधस्तु पूर्वेद्युः प्रतिपदस्त्रिमुहूर्त्त-

वेधे सति द्रष्टव्यः। सायाह्न-व्याप्ति-वचनेन त्रिमुहूर्त्त-वेधोऽभिधीयते। आपराह्णिक-वचने ततोऽधिक-वेधः। तत्रोभयत्र शुक्लप्रतिपत्पूर्व्वैवोपोष्या। यदा कृष्णा प्रतिपत्परेद्युरुदयादूर्द्ध्वं त्रिमुहूर्त्ता ततोऽधिका वा स्यात्, तदा सैवोपोष्या। अन्यथा पूर्व्वेद्युरिति निर्णयः। व्यासवचने पूर्व्व-विद्धायां शुक्ल-प्रतिपदि ये दैव-पित्र्ये विहिते, तयोर्दैवशब्देन प्रतिपन्निमित्तउपवासो वक्ष्यमाणस्तूभयं विवक्षितम्। वचनान्तराभ्यान्तयोः शुक्ल-पाक्षिकयो विधानात्;

"एकादशी तथा षष्ठी अमावास्या चतुर्थिका।
उपोष्याः पर-संयुक्ताः पराः पूर्व्वेण संयुताः॥
आवणी दुर्गनवमी तथा दूर्वाष्टमी च या*।
पूर्व्व-विद्धा तु कर्त्तव्या शिवरात्रिर्बलेर्दिनम्"—इति।

नन्वाश्वयुजमासे योऽयं नवरात्रोत्सवः, तदुपक्रमस्यापि पूर्व्व-विद्धायां क्रियमाणत्वात्सोऽप्यत्र विवक्षणीयः,—इति चेत्। न। तस्य नक्तव्रतत्वात्। एकभक्त नक्तव्रत प्रतिपदिष्टीनां दैवत्वेऽपि पृथङ्निर्णयस्य वक्ष्यमाणत्वात्। न च, व्रतादीन्यपि दैवान्यत्र क्रियन्ताम्मिति शङ्कनीयम्। तेषूदय-तिथि-प्राशस्त्यस्य बहुभिर्वक्ष्यमाणत्वात्।

पित्र्यशब्देनात्र मृताह-श्राद्धं विवक्षितम्। 'आपराह्णिकी'—इति तस्मिन् वचनेऽभिधानात्। आपराह्णिकत्वं च मृताह-श्राद्ध-प्रयोजकमिति वक्ष्यते। एवं तर्हि, तिथ्यन्तर-मृताह-श्राद्धवदत्रापि प्राप्तत्वात्,

* दूर्व्वाचैवऊताशनी,—इति क॰ पुस्तके, दूर्व्वाष्टमीऊताशनी,—इति खि॰ पुस्तके पाठः।

"पित्र्यं वा मनुरब्रवीत्"—इति विशेष-विधानमनर्थकमिति चेत्। न, तदपवादार्थत्वात्। यदा पूर्व्वेद्युरल्पोऽपराह्ण-स्पर्शः परेद्युर्भूयान्, तदा तिथ्यन्तरेषु परेद्युरेव मृताह श्राद्धम्; प्रतिपदि तु तदपवादेन पूर्व्वेद्यु-रेव विधीयते। न चात्र पित्र्यशब्दस्यैकोद्दिष्ट-विषत्वं युक्तम्, एकोद्दि-ष्टादीनां मध्याह्नादि-कालेषु विहितत्वेन कर्म-काल-व्यापिन्यास्तिथेस्तत्र ग्रहीतव्यत्वात्। ते च कालाहारीतेन दर्शिताः,—

"आम-श्राद्धन्तु पूर्वाह्णे एकोद्दिष्टन्तु मध्यतः।
पार्वणञ्चापराह्णे तु प्रातर्वृद्धि-निमित्तकम्"—इति।

मनुरपि,—

"पूर्वाह्णे दैविकं श्राद्धमपराह्णे तु पार्वणम्।
एकोद्दिष्टन्तु मध्याह्ने प्रातर्वृद्धि-निमित्तकम्"—इति।

दैविकं विश्वामित्र आह,—

"देवानुद्दिश्य क्रियते यत्तद्दैविकमुच्यते।
तन्नित्यश्राद्धवत् कुर्य्याद्द्वादश्यादिषु यत्नतः"—इति।

तस्मान्नैकोद्दिष्टादिकमत्र विवक्षितम्, किन्तु मृताह-श्राद्धमन्यद्वा किञ्चित् पार्व्वणश्राद्धम्*। अत्र, पूर्व-विद्धायां शुक्ल-प्रतिपदि दैव-शब्देन विवक्षितो य उपवासस्तमुदाहरामः। भविष्योत्तरपुराणे, वृद्धतपाभिधे व्रते कार्त्तिक-मासान्त-दर्शे† पायस-भोजनादि-नियमं विधायेदं पठ्यते,—

"ततोमार्गशिरे मासि प्रतिपद्यपरेऽहनि।

* अन्यद्वा किञ्चित् पार्व्वणश्राद्धम्,—इति नास्ति मु॰ पुस्तके।
† कार्त्तिकमासान्तं दर्शे,—इति वि॰ पुस्तके पाठः।

प्रष्टा गुरुञ्चोपवसेन्मध्यादेवं स्मरन् मुक्तः"—इति।

ननु, पूर्वविद्धायां शुक्लप्रतिपदि योऽयमुपवासो विहितस्तस्य सङ्कल्पः किं प्रातः कार्य्यः, किं वा प्रतित्काले? नाद्यः, अमावास्या-वेलायां प्रतिपदुपवास-सङ्कल्पायोगात्। अतएव बौधायनः,—

"योयस्य विहितः कालः कर्मणस्तदुपक्रमे।

तिथिर्याऽभिमता सा तु कार्य्या नोपक्रमोज्झिता"—इति।

स्कन्दपुराणे,—

"योयस्य विहितः कालः कर्मणस्तदुपक्रमे।

विद्यमानो भवेदङ्गं नोज्झितोपक्रमेण तु"—इति।

न द्वितीयः, प्रातःकालस्यैव सङ्कल्पाङ्गत्वात्। तथाच स्मर्य्यते,—

"प्रातः संकल्पयेद्विद्वान् उपवास-व्रतादिकम्"—इति।

तथा,—

"प्रातरारभ्य मतिमान् कुर्य्यात्तत्-व्रतादिकम्।

नापराह्ने न मध्याह्ने पित्र्यकालौ हि तौ स्मृतौ"—इति।

अत्रोच्यते। यथोक्त-वचन-बलात् प्रातरेव संकल्पः कार्य्यः, तदानीं ज्योतिःशास्त्र-प्रसिद्ध-प्रतिपदभावेऽपि स्मृतिभिरापादितायाः प्रतिपदः सत्त्वात्। अतएव देवलः,—

"यान्तिथिं समनुप्राप्य अस्तं याति दिवाकरः।

तिथिः सा सकला ज्ञेया दानाध्ययनकर्मसु"—इति।

अत्र, दानाध्ययनयोरुपवासादि-निखिल-दैवोपलक्षणार्थत्व-विवक्षया 'कर्मसु'—इति बहुवचनं निर्दिष्टम्। अत्रास्तमयात् पूर्वं मुहूर्त्त-त्रय-व्यापिनीं तिथिं समनुप्राप्येति व्याख्येयम्। न तु ततोऽल्पव्याप्ति-

विवाद्यता। तथा सति, पूर्वोक्त-वेधाभावेनोत्तर-तिथेरेव ग्राह्यत्व-प्रसङ्गात्। तथा त्रिमुहूर्त्त-व्याप्तिः स्कन्दपुराणे दर्शिता,—

"यान्तिथिं समनुप्राप्य यात्यस्तं पद्मिनी-प्रियः।
सा तिथिस्तद्दिने प्रोक्ता त्रिमुहूर्त्ता यदा* भवेत्"—इति।

शिवरहस्य-सौरपुराणयोरपि,—

"यां प्राप्यास्तमुपैत्यर्कः सा चेत्स्यात् त्रिमुहूर्त्तिका।
धर्म्म-कृत्येषु सर्वेषु संपूर्णान्तां विदुर्बुधाः"—इति।

वृद्धवसिष्ठोऽपि,—

"यस्यान्तिथावस्तमियात्सूर्य्यस्तु त्रिमुहूर्त्तकैः।
याग-दान-जपादिभ्यस्तामेवोपक्रमेत् तिथिम्"—इति।

ननु, सायन्तन-त्रिमुहूर्त्त-शुक्लप्रतिपदुपेतायान्तिथौ प्रातरेव संकल्प्य प्रतिपदुपवासः कार्य्यः,—इति युग्मादि-वाक्यमाश्रित्य निर्णीतं; तिथि-क्षये तथाऽस्तु, साम्य-वृद्ध्योस्तु खर्व-दर्प-वाक्यात् परेद्युरुपवासः प्राप्नोतीति चेत्। मैवम्। खर्वादि-वाक्यस्यैकोद्दिष्टादि-विषयत्वात्। तथा च व्यासः,—*

"द्वितीयाऽऽदिक-युग्मानां पूज्यता नियमादिषु।
एकोद्दिष्टादि-वृद्ध्यादौ ह्रास-वृद्ध्यादि-चोदना"—इति।

नियमादिष्वित्यादि-शब्देन, पित्र्य-कर्म-व्यतिरिक्त-व्रतोपवासादि-सकल-कर्मणो ग्रहणम्। एकोद्दिष्टादीत्यादि-शब्देन विवाहादि-मङ्गलाङ्ग-भूत-श्राद्ध-व्यतिरिक्त-पार्वण-श्राद्धस्य। वृद्ध्यादावित्यादि-शब्देन,

---

* त्रिमुहूर्त्ता च या,—इति क० मु० पुस्तकयोः पाठः।

माङ्गलिक-श्राद्धस्य। ग्रामवृद्ध्यादीत्यादि-शब्देन, खर्वस्य ग्रहणम्। तदेवं पूर्वेद्युः शुक्लप्रतिपदुपवासं कृत्वा परेद्युः पारणं कुर्य्यात्।

तत्रेदञ्चिन्त्यते। किं प्रातः पारणम्, किं वा तिथ्यन्ते ? इति। नाद्यः, सुमन्तु-वचन-विरोधात्;

"तिथि-नक्षत्र-नियमे तिथि-भान्ते च पारणम्।

अतोऽन्यथा पारणे तु व्रत-भङ्गमवाप्नुयात्"—इति।

न द्वितीयः, देवल-वचन-विरोधात्;

"उपवासेषु सर्व्वेषु पूर्व्वाह्णे पारणं भवेत्।

अन्यथा तु फलस्यार्द्धं धर्ममेवोपसर्पति"—इति।

धर्मोयमः। नायं दोषः। पूर्व्वाह्ण-वाक्यस्य सामान्यरूपत्वेन पर-विद्धोपवास-विषयतया संकोचनीयत्वात्। एतदेवाभिप्रेत्य निगमः,—

"पूर्व्व-विद्धासु तिथिषु भेषु च श्रवणं विना।

उपोष्य विधिवत् कुर्य्यात्तदन्ते च पारणम्"—इति।

भेषु नक्षत्रेषु। स्कन्दपुराणेऽपि,—

"तिथीनामेव सर्व्वासामुपवास-व्रतादिषु।

तिथ्यन्ते पारणं कुर्य्यात् विना शिवचतुर्द्दशीम्"—इति।

अत्रोपवासव्रतादिष्वित्यादि-शब्दैनैकभक्तनक्तायाचितानि गृह्यन्ते। यां तिथिमुद्दिश्यैतानि पूर्व्वेद्युर्विहितानि, परेद्युस्तत्तिथि-भागेऽतीते पश्चाद्भोजनं कार्य्यम्। अन्यथा, पूर्व्वदिनानुष्ठितैकभक्तादि-व्रतानां वैकल्यं* स्यादित्यभिप्रायः। अस्य च तिथि-भान्त-पारणस्यापवादः क्वचित् स्मर्य्यते,—

* वैफल्यं,—इति वि० पुस्तके पाठः।

"तिथ्यन्ते चैव भान्ते च पारणं यत्र चोद्यते ।
यामत्रयोर्ध्ववर्त्तिन्यां प्रातरेव हि पारणम्"—इति ।

यथोक्तोपवासवद्दल्युत्सवोऽपि पूर्वविद्धायामेव कर्त्तव्यः। सचोत्सवो-ब्रह्मपुराणे वामनपुराणे भविष्योत्तरपुराणे च प्रपञ्चितः। अत्र प्रातः-काले द्यूतादिकं ब्रह्मपुराणे दर्शितम्,—

"तस्मात् द्यूतं प्रकर्त्तव्यं प्रभाते तत्र मानवैः"—इति ।

यद्यपि प्रातरमावास्या वर्त्तते न तु प्रतिपत्, तथापि पूर्वोक्त-संकल्प-न्यायेन प्रतिपदः साकल्यमाश्रित्य द्यूतादिकं प्रातरेव कार्य्यम्।

ननु, यावेतावुपवास-बल्युत्सवौ पूर्वविद्धायां प्रतिपदि विहितौ, तयोः केनापि निमित्तेन तत्रानुष्ठानासम्भवे सति किमुत्तरविद्धा गौणकालत्वेन ग्राह्या, किंवा मुख्यकालातिक्रमात्तयोः परित्याग एव? अत्र केचिदाहुः। परित्याग एव युक्तः। मुख्यकालमन्तरेणाप्यनुष्ठाने द्वितीया-तृतीयादिष्वपि तदनुष्ठान-प्रसङ्गात्। अथोच्येत,—यथा चैव-र्णिकोपनयनस्य गर्भाष्टमादि-मुख्यकालासम्भवे सत्याषोडशादि-काला-गौणकालत्वेन स्वीकृताः, एवमत्रापि,—इति। तन्न, वैषम्यात्। तत्र गौण-कालो वाचनिकः;

"आषोडशात्तु द्वाविंशाच्चतुर्विंशाच्च वत्सरात्।
ब्रह्म-क्षत्र-विशां काल औपनायनिकः परः"—इति ।

न त्वेवमत्रोत्तर-प्रतिपदो गौणत्वेन स्वीकारे किञ्चिद्वचनमस्ति। अन्तरेणापि वचनं युक्तिमात्रेण तत्-कल्पनायां षोडशादि-वर्षेभ्य ऊर्ध्व-मपि सन्निकर्ष-विकर्ष-तारतम्येन गौणतर-गौणतमावुपनयन-कालौ प्रसज्येयाताम्। न च तौ युक्तौ,

"अत ऊर्ध्वं पतन्त्येते यथाकालमसंस्कृता:"—इति

पातित्य-स्मरणात्। किञ्च, पूर्वोत्तर-विद्धयोरुभयोरपि स्वीकारे पूज्यत्व-विचारो निरर्थकः स्यात्। तस्मात्परित्यागएवेति। तत्र ब्रूमः। सन्ध्यैवाचोपनयनवदुत्तरतिथेः प्रापकाणि बहूनि वचनानि। "प्रतिपत्स-द्वितीया स्यात्"—इत्येकं वचनम्।

नन्वेतद्यथोक्त-विषय-व्यतिरिक्त-विषये मुख्यकालत्वं विदधाति, न तु यथोक्त-विषये गौणकालत्वमिति चेत्। तत्र वक्तव्यं; किमत्र विषयान्तरे मुख्यत्वं वाचनिकं, किं वा यथोक्तविषयस्य मुख्यकालेऽभिहिते सति, अर्थादितर-विषयत्वं तस्य वचनस्य परिशिष्यते? इति। नाद्यः, तस्मिन् वचने विषयान्तरस्य शब्दतोऽप्रतीतेः। द्वितीये तु, सामान्यवचनस्य विशेष-व्यतिरिक्त-सम्भावित-कृत्स्न-विषयत्वं परि-शेषणीयम्। तथा सति, कृष्ण-प्रतिपद्विषयत्वमुपवास-व्यतिरिक्त-दान-व्रतादि-विषयत्वञ्च सम्भावितत्वाद्यथा परिशिष्यते, तथोपवासेऽपि गौण-काल-विषयत्वं कुतो न परिशिष्यते।

द्वितीया-युतोपवास-निषेधादिति चेत्। न, तस्य निषेधस्य पूर्व-विद्धोपवास-प्रशंसायान्तात्पर्य्यात्। "अपशवो वा अन्ये गोऽश्वेभ्यः पशवो गोअश्वाः"—इत्यत्र गोऽश्व-प्रशंसार्थमजादीनां पशुत्वं निषिध्यते। न तु सर्वथा तन्निषेधः, प्रत्यक्ष-विरोधात्। शास्त्रान्तर-विरोधाच्च। एवमत्राप्युत्तर-विद्धायां प्रतिपदि सर्वथा प्रतिपदुपवास-निषेधोन्याह-न्येत। तथा च, उदितानुदित-होमयोरन्योन्यं निन्दनं प्रशंसार्थं, न तु सर्वथा हेयत्वार्थो। नो चेदुभावपि होमौ परित्यज्येयाताम्। यदि तत्र शाखा-भेदेन व्यवस्था, तर्ह्यत्रापि मुख्य-गौण-भेदेन व्यवस्थाऽस्तु।

न चैतावता तिथेः पूज्यत्व-विचारो निरर्थको भवति, प्रशस्त-तिथि-स्वीकाराय तदुपयोगात्।

यानि चान्यानि सामान्य-वचनानि; "उदये तूपवासस्य"

"पौर्वाह्णिकास्तु तिथयो दैवे कार्य्ये फलप्रदाः"—

इत्यादीनि, तानि सर्वाणि यथा कृष्ण-प्रतिपदमुपोद्बलयन्ति, तथा गौण-प्रतिपदं कुतोनोपोद्बलयेयुः। न चैवं सति, द्वितीया-तृतीयादिष्वपि प्रसङ्गः, गौण-प्रतिपत्त्वस्य तत्राभावात्। गौण-प्रतिपद्येतावता निर्बन्धेन कस्तव लाभः,—इति चेत्। तत्र द्वेषेण वा तव को लाभः,—इति वक्तव्यम्। शिष्टाचारः,—इति चेत्। विपर्य्ययएव तं पश्यामः। तथा हि,—यदा यथोक्तरीत्या कस्याश्चित्तिथे द्वैविध्यं भवति, तदानीं सम्प्रतिपन्न-शिष्टेषु केचन शिष्टाः पूर्व्वत्रानुतिष्ठन्ति, अन्ये च परत्र। न च, तत्राविगीतः शिष्टाचारः प्रमाणं नेतरः,—इति वाच्यम्। उभयेषां शिष्टानामविगीतत्व-कथनायैव सम्प्रतिपन्नेति विशेषितत्वात्।

एवं तर्हि, मुख्यत्वमप्यन्यतमस्य निश्चेतुमशक्यमिति चेत्। यस्मिन् देशे यस्मिन् कालेऽन्येषु शिष्टेषु नीराग-द्वेषस्य स्वस्य प्रामाण्यातिशयस्य वृद्धिः, तदा तादृशाचारस्य मुख्यत्वात्। तदेतदेवाभिप्रेत्य गुरोः शिष्यानुशासने तैत्तिरीयाः समामनन्ति,—"अथ यदि ते कर्म-विचिकित्सा वा वृत्त-विचिकित्सा वा स्यात्, ये तत्र ब्राह्मणाः समदर्शिनः युक्ताः आयुक्ताः अलूक्षाः* धर्मकामाः स्युर्यथा ते तत्र वर्त्तेरन् तथा त्वं तत्र वर्त्तथाः" —इति। युक्ति-कुशला युक्ताः शास्त्र तत्पराः†। आयुक्तास्तदर्थानु-

* अलभ्या अरूक्षाः,—इति क० वि० पुस्तकयोः पाठः।

† समदर्शिनोयुक्तिकुशलाः, युक्ताः शास्त्रतत्पराः तत्त्वज्ञा इति यावत्,—इति वि० पुस्तके पाठः।

ष्ठान-निरताः। अलुब्धाः क्रोधादि-वर्जिताः *। धर्म-कामा जीवन्मुक्त-वत्कर्मण्यौदासीन्यमकुर्वाणाः। उक्तरीत्या कस्यचिच्छिष्टाचार-विशेषस्य मुख्यत्वे सत्यपरोगौणो भविष्यति, न तु सर्वथैवानाचारः। एवञ्च सर्वेकामेव तैत्तिरीयशाखामधीत्य बौधायनापस्तम्बादीनां मत-भेदेन परस्पर-विलक्षणमनुष्ठानमाचरतामुभय-विधानां मनुष्याणां स्व-स्व-पूर्व-पुरुष-पारंपर्य्य-क्रमायातएवाचारो मुख्यः। कदाचित्तद-सम्भवे मतान्तरेणाप्यनुष्ठानमेव† श्रेयो न तु सर्वथा तल्लोपो युक्तः। किं बहुना, मुख्यायाः पूर्वविद्धायाः प्रतिपदोऽसम्भवे शेषि-परित्यागादु-त्तरमुत्तर-विद्धायाः परिग्रहणमित्यवगन्तव्यम्। तदेवं शुक्लप्रतिपदुपवास-वत्युत्सवयोः पूर्व-विद्धा मुख्येति व्यवस्थितम्॥०॥

अथैकभक्त-निर्णयः॥

ब्रह्मपुराणे वैश्वानरव्रते पठ्यते—

"प्रतिपद्येकभक्ताशी समाप्ते कपिला-प्रदः"—इति।

तत्र, तावदेकभक्तं त्रिविधम्; स्वतन्त्रमन्याङ्गमुपवास-प्रतिनिधिरूपञ्चेति। तेष्विदानीमुदाहृतं स्वतन्त्रम्।

तत्रेदं चिन्त्यते। किमुपवासवत्तिथिरस्मिन् ग्रहीतव्या, उत प्रकारान्तरेण? इति। उपवासवदिति तावत् प्राप्तम्। "दैवं पित्र्यं तथा कार्य्यम्"—इति वचनेन उपवासैकभक्तादि-कृत्स्न-दैवस्य विवक्षितत्वात्। न च, कर्म-काल-व्याप्त्या तन्निर्णयः,—इति शङ्कनीयम्।

* अलुब्धाः लोभरहिताः अक्रुद्धाः क्रोधादिवर्जिताः,—इति वि॰ पुस्तके पाठः।

† मतान्तरेणाप्यनुष्ठानमेव,—इति मु॰ पुस्तके पाठः।

तत्कालस्याद्याप्यनिर्णीतत्वात्। कथञ्चित्तन्निर्णयेऽपि, कर्म-काल-व्यापि-वचनस्य पित्र्य-विषयत्वेनाप्युपपत्तेः। तस्मादुपवासवत्तन्निर्णयः,—इति प्राप्ते ब्रूमः। कर्म-काल-व्याप्तिरेवात्र निर्णय-हेतुः। कर्मकालस्तत्-कर्म-स्वरूपञ्चेत्युभयं स्कन्दपुराणे दर्शितम्,—

"दिनार्द्ध-समयेऽतीते भुज्यते नियमेन यत्।
एकभक्तमिति प्रोक्तमतस्तत्स्याद्दिवैव हि"—इति।

देवलोऽपि,—

"दिनार्द्ध-समयेऽतीते भुज्यते नियमेन यत्।
एकभक्तमिति प्रोक्तं न्यूनं ग्रास-त्रयेण तु"—इति।

अत्र च, दिनार्द्धस्योपरि सार्द्ध-मुहूर्त्त-परिमितः कालः पञ्चधा विभागे मध्याह्नस्यापरभाग एकभक्तस्य मुख्यकालः। दिनार्द्धेऽतीते सति समनन्तर-भावित्वात्। अस्तमयात् प्राचीनो विशिष्टो गौणकालः, दिवैवेत्यभ्यनुज्ञानात्। एवं स्थिते सति, मुख्य-काल-व्यापिनी तिथिर्ग्रहीतव्या। अतएव पद्मपुराणम्,—

"मध्याह्न-व्यापिनी ग्राह्या एकभक्ते सदा तिथिः"—इति।

बौधायनेऽपि,—

"उदये तूपवासस्य नक्तस्यास्तमये तिथिः।
मध्याह्न-व्यापिनी ग्राह्या एकभक्ते सदा तिथिः"—इति।

न चात्रोपवास-न्यायो युक्तः। तत्र, पूर्व-विद्धायामेव विशेष-शास्त्र-पर्यवसानात्। द्विविधं हि विशेष-शास्त्रं; तिथि-प्रयुक्तमेकं, कर्म-प्रयुक्तमपरम्। तत्र, "पौर्वाह्णिकास्तु तिथयो दैवे"—इत्यनेन कर्म-विषयेण सामान्य-शास्त्रेणोत्तर-विद्धायां प्राप्तायाम्,—

"उपोष्याः पर-संयुक्ताः पराः पूर्वेण संयुताः"—

इत्यनेन कर्म-विषयेण विशेष-शास्त्रेण पूर्व-विद्धा विहिता। तिथि-विषये अपि सामान्य-विशेष-शास्त्रे उदाह्रियेते। "पौर्वाह्णिकास्तु तिथयः"—इति, तिथिमात्रमुपजीव्य प्रवृत्तत्वात्सामान्य-शास्त्रं, "प्रतिपत्सम्मुखी कार्य्या"—इत्येतद्विशेष-शास्त्रम्। तथा सति, द्विविधेनापि विशेष-शास्त्रेण पूर्वविद्धायामेवोपवासः सुस्थितः। अत्र तु, "मध्याह्न-व्यापिनी"—इत्येतत्कर्म-विषय-विशेष-शास्त्रम्। अतस्तदनुसारेण निर्णयो युज्यते*।

ननु, "प्रतिपत्सम्मुखी कार्य्या"—इत्यनेन तिथि-विषयेण विशेष-शास्त्रेण कुतोन निर्णयः,—इति चेत्। उपवास-विषयत्वेनापि तस्योपपत्तेरिति ब्रूमः। ननु, मध्याह्न-व्याप्ति-वचनमपि तिथ्यन्तरैकभक्त-विषयत्वेनोपपादयितुं शक्यम्। अतः, कर्म-विशेष-शास्त्र-तिथि-विशेष-शास्त्रयोः समान-बलत्वमिति चेत्। अस्तु नाम, किन्नश्छिन्नम्। मध्याह्नव्यापित्व-सम्मुखत्वयोः पूर्व-विद्धायां सम्पादयितुं शक्यत्वेन विरोधाभावात्। यदात्वुत्तर-विद्धायामेव मध्याह्न-व्यापित्वं, तदा विरोधः,—इति चेत्। वाढं, तथापि तिथि-विषय-विशेष-शास्त्रात् कर्म-विषय-विशेष-शास्त्रं प्रबलम्। तिथेर्गुणत्वात्, कर्मणश्च प्रधानत्वात्। तस्मादेवंविधे विषये कर्म-काल-व्याप्त्यैव निर्णेतव्यम्।

अत्र, निर्णेतव्यो विषयः षोढा भिद्यते; पूर्वेद्युरेव मध्याह्न-व्यापित्वम्, परेद्युरेव तद्व्यापित्वम्, उभयत्र तद्व्यापित्वम्, उभयत्र तदव्यापित्वम्,

* न तु प्रतिपत् सम्मुखी कार्य्येत्यनेन तिथिविषयेण विशेषशास्त्रेण निर्णयो युज्यते,—इत्यधिकः पाठः क॰, वि॰ पुस्तकयोः।

उभयत्र साम्येन तदेकदेश-व्यापित्वम्, उभयत्र वैषम्येण तदेकदेश-व्यापित्वञ्च,—इति।

तत्र, प्रथम-द्वितीययोः मध्याह्न-व्यापित्वस्य निर्णायकत्वम्। तृतीये पूर्व-विद्धा ग्राह्या। मुख्य-काल-व्याप्तेः समत्वेऽपि गौण-काल-व्याप्तेरधिकत्वात्। अनेनैव न्यायेनोभयत्र मुख्य-काल-व्याप्त्यभावेऽपि गौण-व्याप्ति-सद्भावात् पूर्व-विद्धैव। पञ्चमेऽप्ययमेव न्यायोयोज्यः। षष्ठे तु, यदा पूर्वेद्युर्मध्याह्नैकदेशमधिकं व्याप्नोति, तदानीं तदाधिक्यात् गौण-काल-व्याप्तेश्च पूर्वेद्युर्ग्राह्या। यदा परेद्युर्मध्याह्नैकदेशमधिकं व्याप्नोति, तदा गौण-काल-व्याप्त्यभावेऽपि मुख्य-काल-व्याप्त्याधिक्यानुसारेण परेद्युर्ग्राह्या।

नन्वस्त्वेवं स्वतन्त्रैकभक्ते निर्णयः अन्याङ्गे तु कथम्? तत्र, काऽनुपपत्तिरिति चेत्। उच्यते,—

"पूजा-व्रतेषु सर्वत्र मध्याह्न-व्यापिनी तिथिः"—इति।

तथा, "मध्याह्ने पूजयेन्नृप"—इत्यादि-शास्त्रैरङ्गिनः पूजादेर्मध्याह्ने विहितत्वेनाङ्गस्यैकभक्तस्यापराह्णादौ प्राप्यमाणत्वात् न मुख्य-काल-सम्भवः। मा भूत्तादृश-विषये मुख्यः कालः, प्रधानानुसारेण गुणस्य नेतव्यत्वात्; यदा स्वतन्त्रैकभक्तेऽपि केनचिन्निमित्तेन मुख्य-कालासम्भवे गौणकालोऽभ्यनुज्ञायते, तदा किमु वक्तव्यमन्याङ्गे।

यत्तूपवास-प्रतिनिधिरूपमेकभक्तं, तदुपवास-तिथौ कार्य्यम्। तस्य गौणोपवासत्वात्। अतएव सुमन्तुः,—

"तिथौ यत्रोपवासः स्यादेकभक्तेऽपि सा तथा"—इति।

न च, तादृशमेव नास्ति,—इति शङ्कनीयम्। उपवास-व्रतं प्रक्रम्य

रोगादिना तदशक्तौ गुर्वनुज्ञया तस्यैकभक्तस्य* सम्भावितत्वात्,—

"अष्टौ तान्यव्रतघ्नानि आपो मूलं फलं पयः।

हविर्ब्राह्मण-काम्या च गुरोर्वचनमौषधम्"—इति स्मरणात्।

इत्येकभक्त-निर्णयः।

---

अथ नक्तं निर्णीयते।

तत्र, वराहपुराणे धान्यव्रते पठ्यते,—

"मार्गशीर्षे सिते पक्षे प्रतिपद्या तिथिर्भवेत्।

तस्यां नक्तं प्रकुर्व्वीत रात्रौ विष्णुं प्रपूजयेत्"—इति।

अत्र, नक्तशब्दो भोजन-परः। काल-परत्वे, 'प्रकुर्व्वीत'—इत्यस्यानन्वयात्। न हि, कालः केनचित् कर्त्तुं शक्यते। तस्य भोजनस्य, 'रात्रौ'—इति काल-विधिः। अतो दिवा भोजन-रहितत्वे सति रात्रि-भोजनं व्रतस्य स्वरूपम्। अन्यथा, स्वतः प्राप्तस्य रात्रि-भोजनस्य विधान-वैयर्थ्यात्। तस्य च नक्तभोजनस्य, विष्णुपूजनमङ्गम्, तत्सन्निधौ पठितत्वात्। तथा, होमोऽपि तदङ्गम्, 'होमञ्च तत्र कुर्वीत'—इत्यभिधानात्। एवञ्च सति, प्रधाना-विरोधेन पूजा-होमयोरङ्गयोर्दिवाऽनुष्ठानमुक्तं भवति। प्रधानस्य च नक्तस्य कालद्वयं भविष्यत्पुराणे दर्शितम्,—

"मुहूर्त्तोनं दिनं नक्तं प्रवदन्ति मनीषिणः।

नक्षत्र-दर्शनान्नक्तमहं मन्ये गणाधिप"—इति।

अस्य च काल-द्वयस्याधिकारि-भेदेन व्यवस्थामाह देवलः—

* गुर्व्वनुज्ञातस्यैकभक्तस्य,—इति वि० पुस्तके पाठः।

"नक्षत्र-दर्शनान्नक्तं गृहस्थस्य बुधैः स्मृतम्।
यतेर्दिनाष्टमे भागे तस्य रात्रौ निषिध्यते"—इति।

स्मृत्यन्तरेऽपि,—

"नक्तं निशायां कुर्वीत गृहस्थो विधि-संयुतः।
यतिश्च विधवा चैव कुर्य्यात् तत्सदिवाकरम्॥
सदिवाकरन्तु तत् प्रोक्तमन्तिमे घटिका-द्वये।
निशा-नक्तन्तु विज्ञेयं यामार्द्धे प्रथमे सदा"—इति।

रात्रि-नक्त-भोजने व्यासः,—

"त्रिमुहूर्त्तं प्रदोषः स्याद्भानावस्तं गते सति।
नक्तन्तु तत्र कर्त्तव्यमिति शास्त्र-विनिश्चयः"—इति।

तदेवं नक्त-कालौ व्यवस्थितौ। तत्र, नक्तं प्रदोष-व्यापिन्यां तिथौ-कार्य्यम्। तदाह वत्सः,—

"प्रदोष-व्यापिनी ग्राह्या तिथिर्नक्त-व्रते सदा।
एकादशीं विना सर्वा शुक्ले कृष्णे तथा स्मृता"—इति।

एकादश्यान्तु यन्नक्तं, तत्रोदय-व्यापिनी तिथिर्ग्राह्या। तदुक्तं स्कन्दपुराणे,—

"प्रदोष-व्यापिनी ग्राह्या सदा नक्त-व्रते तिथिः।
उदयस्था सदा पूज्या हरि-नक्त-व्रते तिथिः"—इति।

अत्राप्येकभक्त-न्यायेन षोढा विषय-भेदा उत्प्रेक्षणीयाः। मध्याह्न-प्रदोषयोरेव भिन्नत्वात्। पूर्व्वेद्युरेव प्रदोष-व्याप्तौ पूर्व-तिथिर्ग्राह्या। परेद्युरेव प्रदोष-व्याप्तौ पर-तिथिः। उभयत्र प्रदोष-व्याप्तौ पर-तिथि-रेव। तदाह जाबालिः,—

"यदैव तिथ्योरुभयोः प्रदोष-व्यापिनी तिथिः।
तत्रोत्तरत्र नक्तं स्यादुभयत्रापि सा यतः"—इति।

उभयत्रापि दिवा रात्रौ च सा तिथिर्विद्यते यतः,—इत्यर्थः। उभयत्र प्रदोष-व्याप्त्यभावेऽपि परैव। तदाह जावालिः,—

"अतथात्वे परत्र स्यादस्तादर्वागयतो हि सा"—इति।

प्रदोषे तदभावेऽपि, अस्तमयादर्वाग्यतः सा विद्यते, ततः सा ग्राह्येत्यर्थः। अस्य च, दिवारात्र-व्रतत्वेन•प्रदोष-व्याप्तिवत्सायंकाल-व्याप्तिरपि निर्णय-हेतुर्भवतीत्यनेनाभिप्रायेणार्वागस्तमयादित्युक्तम्। दिवा-रात्रि-व्रतत्वञ्च कूर्मपुराणेऽभिहितम्,—

"प्रदोष-व्यापिनी यत्र त्रिमुहूर्त्ता यदा दिवा।
तदा नक्त-व्रतं कुर्य्यात् स्वाध्यायस्य निषेधवत्,—इति।

यद्यपत्र, प्रदोषकाल-सायङ्कालौ द्वावेव प्रयोजकौ प्रतिभासेते, तथापि प्रदोष-व्याप्तिर्मुख्यः कल्पः, सायङ्काल-व्याप्तिरनुकल्पः,—इति जावालि-वचनादवगम्यते। तत्र हि, 'अतथात्वे'—इति प्रदोष-व्याप्त्यभावमनूद्य तादृश्यास्तिथेर्ग्राह्यत्वे, 'अर्वागस्ताद् यतः'—इति हेतूपन्यासात्। ईदृशे विषये, गृहस्थोऽपि यतिवद्दिवा नक्तमाचरेत्। तदुक्तं स्कन्दपुराणे,—

"प्रदोष-व्यापिनी न स्याद्दिवा नक्तं विधीयते।
आत्मनोद्विगुणच्छायामतिक्रामति भास्करे॥
तन्नक्तं नक्तमित्याहुर्न नक्तं निशि भोजनम्।
एवं ज्ञात्वा ततोविद्वान् सायाह्ने तु भुजि-क्रियाम्॥
कुर्य्यान्नक्तव्रती नक्त-फलं भवति निश्चितम्"—इति।

यत्तु, सप्तमी-भानुवासरादौ सौर-नक्तं विहितं, तत्र पूर्वोक्त-विपर्यासेन सायङ्काल-व्याप्तिर्मुख्यः कल्पः, प्रदोष-व्याप्तिरनुकल्पः। एतदेवाभिप्रेत्य सुमन्तुः,—

"त्रिमुहूर्त्त-स्पृगेवाह्नि निशि चैतावती* तिथिः।
तस्यां सौरक्षवेन्नक्तमहन्येव तु भोजनम्"—इति।

अत्र, सायंव्याप्ते र्मुख्य-कालत्वात् प्रथमतो निर्द्देशः, प्रदोष-व्याप्ते रनुकल्पत्वात् पश्चान्निर्द्देशः। इतर-नक्तेषु तु, प्रदोष-व्याप्ते र्मुख्यत्वादुदाहृत-कूर्मपुराण-वचने सैव प्रथमं निर्द्दिष्टा, सायङ्काल-व्याप्तिः पश्चान्निर्द्दिष्टेति विवेकः।

तेष्वितर-नक्तेषु प्रदोष-व्यापि-तिथि-ग्रहणेऽपि भानुवासर-संक्रान्त्यादिना गृहस्थस्यापि यदा रात्रि-भोजन-निषेधः, तदा दिवैव नक्तं कुर्य्यात्। तथा च भविष्योत्तरपुराणे,—

"ये त्वादित्य-दिने ब्रह्मन्नक्तं कुर्वन्ति मानवाः।
दिनान्ते तेऽपि भुञ्जीरन् निषेधाद्रात्रि-भोजने"—इति।

अस्मिंश्च दिवा भोजने, उत्तमोऽन्तिमो मुहूर्त्तः, मध्यम उपान्त्यम्, ततः प्राचीनोजघन्यः। एवञ्च सत्यन्तिमभाग-त्रिमुहूर्त्त-वचनान्युपपद्यन्ते। रात्रि-भोजनेऽपि घटिका-त्रयमुत्तमः कालः, घटिका-षट्कं मध्यमः कालः। एतदेवाभिप्रेत्य वचन-द्वयं† स्मर्य्यते,—

"प्रदोषोऽस्तमयादूर्ध्वं घटिका-त्रयमिष्यते"—इति।
"त्रिमुहूर्त्तः प्रदोषः स्याद्रवावस्तङ्गते सति"—इति।

---

* चैत वती,—इति वि॰ पुस्तके पाठः।
† वचनं,—इति मु॰ पुस्तके पाठः।

निशीथ-पर्य्यन्तो जघन्यः कालः। 'नक्तं प्रकुर्वीत रात्रौ'—इति सामान्येनाभिधानात्। अ-सौर-नक्तेषु साम्येन वैषम्येण वा दिन-द्वये प्रदोषैकदेश-व्याप्तौ, परेद्युरेव नक्तं कार्य्यम्। सायङ्कालस्य गौणस्य तत्तिथि-व्याप्तत्वात्। अत्राप्येकभक्तवदन्याङ्ग-नक्तोपवास-स्थानीय-नक्त-योर्निर्णयो द्रष्टव्यः।

यथोक्त-लक्षण-लक्षितयोरेकभक्त-नक्तयोरेकस्मिन् दिने यदा प्रसक्तिस्तदा कथं कर्त्तव्यम्? न चैतादृशी प्रसक्तिरेव नास्तीति शङ्कनीयम्। भविष्योत्तर-पुराणोक्ते रथसप्तमीव्रते कदाचित्तत्-प्रसक्तेः। तथा हि, तत्र, तृतीयादिषु सप्तम्यन्तेषु पञ्चसु दिनेषु क्रमेणैकभक्त-नक्तायाचितो-पवास-पारणानि विहितानि। अत्र, यदा तृतीया याम-त्रय-परिमिता ततऊर्ध्वञ्चतुर्थी; तदा मध्याह्न-व्यापित्वात्तृतीयैकभक्तं तत्र प्राप्तं, प्रदोष-व्यापित्वाच्चतुर्थी-नक्तमपि तत्रैव, तथा सति परस्पर-विरोधो दुःप-रिहरः।

अत्रोच्यते। एकभक्तस्य प्राथम्यात् प्रबलत्वेन तस्मिन्मुख्य-कल्प एवानुष्ठेयस्तद्विरोधिनि तु नक्तेऽनुकल्पः। स च द्विविधः; दिनान्तरा-नुष्ठानात् कर्त्रन्तरानुष्ठानाच्च। यदा चतुर्थी परेद्युर्वृद्ध्या सायंकालं व्याप्नोति, तदा तस्य गौण-काल-व्यापित्वादेक एव कर्त्ता दिन-भेदेन व्रत-द्वयमनुतिष्ठेत्। यदा चतुर्थी समा क्षीणा वा, तदा गौण-कालस्याप्यसम्भवेन पूर्वेद्युरेव भार्य्या-पुत्रादिना कर्त्रन्तरेण तन्नक्तं करणीयम्।

॥०॥ इति नक्त-निर्णयः ॥०॥

अयाचितं निर्णीयते ।

पूर्वोदाहृते सप्तमीव्रते पञ्चम्यामयाचितं विहितम् । तस्यैकभक्तवत् प्रतिपदोक्तः काल-विशेष-विधिर्नास्ति । तस्य याचित-भोजन-निषेध-रूपत्वात् । स च निषेध उपवासवदहोरात्रं विषयीकरोति । अतएव सङ्कल्पोऽपि, 'अस्मिन्नहोरात्रे याचितमन्नं न भोक्ष्ये' इत्येवं कर्त्तव्यः । अथ, याचितादन्यदयाचितमित्यप्रयत्न-लभ्यस्य पर-दत्तस्य भोजनं विवक्ष्यते, तदाऽपि पराधीनत्वादेव न तस्य काल-विशेषो विधातुं शक्यते । यद्यपि स्वगृहे पूर्व-सञ्चितं वस्तु इदानीमयाचितं भवति, तथापि पूर्वं प्रयत्न-सम्पादितत्वात्तद्याचितमेव । अथवा, निषेधस्य प्रसक्त-पूर्वकत्वाद्याच्ञा-प्रसक्तेश्च पर-द्रव्य-विषयत्वात्* अयाचित-शब्दोऽपि परद्रव्यमेव विषयी करोति ।

अत्रायाचित-शब्दस्य यथोक्त-रीत्या द्वावर्थौ सम्पन्नौ; प्रतिषेधः पर्युदासश्च । तयोः प्रतिषेध-पक्षं प्राजापत्य-कृच्छ्र-व्याख्याने, गौतमो व्यवजहार,—"अथापरन्त्र्यहं न कञ्चन याचेत"—इति । पर्युदास-पक्षं बृहस्पतिर्व्यवजहार,—

"त्र्यहं प्रातस्त्र्यहं सायन्त्र्यहमद्यादयाचितम् ।
त्र्यहं परन्तु नाश्नीयात् प्राजापत्यञ्चरन् द्विजः"—इति ।

स्मृत्यन्तरेऽपि,—

"अयाचिताशी, मितभुक् परां सिद्धिमवाप्नुयात्"—इति ।

मितभोजित्वं दशग्रासत्वम् । तदुक्तं चतुर्विंशतिमते,—

---

* याचितशब्दस्य परद्रव्यविषयत्वात्,—इति वि॰ पुस्तके पाठः ।

"प्रातस्तु द्वादश ग्रासा नक्ते पञ्चदशैव तु।
अयाचिते तु द्वौ चाष्टौ प्राजापत्यो विधिः स्मृतः"—इति।

तत्र भोज्य-द्रव्यं परकीयमप्रयत्नोपनीतञ्चेत्येतदुभयं स्मार्त्त-लिङ्गा-दवगम्यते। तथा च प्रतिग्रह-प्रकरणे याज्ञवल्क्यः,—

"अयाचिताहृतं ग्राह्यमपि दुष्कृत-कर्मणः"—इति।

तथा, यतिधर्मेषु उशनाः,—

"भिक्षाऽशनमनुद्योगात् प्राक्केनापि निमन्त्रितम्*।
अयाचितन्तु तद्भैक्ष्यं भोक्तव्यं मनुरब्रवीत्"—इति।

यदि प्रतिषेधो यदि वा पर्य्युदासः, उभयथाऽप्येकभक्तादिवन्न कालो विशेषणीयः। प्रतिषेधेऽनुष्ठेयाभावात्, पर्य्युदासे पराधीनत्वात्। असति तु काल-विशेष-विधौ, न कर्म्म-काल-व्याप्ति-वचनमत्र प्रवर्त्तते। तथा सति, किं "पौर्वाह्णिकास्तु तिथयः"—इति वचनेन परा ग्राह्या, किं वा, 'युग्माग्नि' वाक्येन पूर्वा? इति वीक्षायां, युग्मवाक्यस्य तिथि-विशेष-विषयत्वादनुसरणं न्याय्यम्। अनेनैव न्यायेन प्रतिपदप्ययाचिते पूर्व-विद्धैव ग्राह्या। अयाचितस्य नियमरूपत्वात्।

"द्वितीयाऽऽदिक-युग्मानां पूज्यता नियमादिषु"—

इत्युक्तत्वात्।

॥०॥ इत्ययाचित-निर्णयः ॥०॥

---

प्रतिपद्युपवासैकभक्तनक्तायाचितानि निर्णीतानि। तत्र, शुक्ल-प्रतिपत्पूर्व-विद्धोपोष्या, कृष्णा प्रतिपदुत्तर-विद्धा। एकभक्त-नक्तयो

* अत्र, 'प्राक् केनाप्यनिमन्त्रितम्'—इति ग्रन्थान्तरे पाठः।

सर्वासु तिथिषु मध्याह्न-प्रदोष-व्याप्त्या निर्णयः। अयाचितस्य प्रातिस्विक-काल-विशेष-विध्यभावात् उपवासवत् शुक्ल-कृष्ण-प्रतिपदौ-पूर्वापर-विद्धे ग्रहीतव्ये,—इत्येतावद्व्यवस्थितम्।

अथ प्रतिपद्दान-व्रतानि निर्णीयन्ते।

भविष्योत्तरपुराणे दानं पठ्यते,—

"प्रतिपत्सु द्विजान् पूज्य पूजयित्वा प्रजापतिम्।
सौवर्णमरविन्दञ्च कारयित्वाऽष्टपत्रकम्॥
कृत्वा त्वौदुम्बरे पात्रे सुगन्धि-घृत-पूरिते।
पुष्पैर्धूपैः पूजयित्वा विप्राय प्रतिपादयेत्"—इति।

ब्रह्मपुराणे फलव्रतं पठ्यते,—

"मासि भाद्रपदे शुक्ले पक्षे च प्रतिपत्तिथौ।
नैवेद्यन्तु पचेन्मौनी षोडश-त्रिगुणानि च।
फलानि पिष्टपक्वानि* दद्याद्विप्राय षोडश।
देवाय षोडशैतानि दातव्यानि प्रयत्नतः॥
भुञ्ज्यन्ते षोडश तथा व्रतस्य नियमाश्रया†"—इति।

एवमन्यान्यपि दान-व्रतान्युदाहरणीयानि। तानि च सर्वाण्युत्तर-विद्धायां प्रतिपदि कर्त्तव्यानि। तेषां दैवत्वात्। तदाह वृहद्याज्ञवल्क्यः,—

"पौर्वाह्णिकास्तु तिथयो दैवे कार्य्ये फलप्रदाः"—इति।

यद्यप्येतत्तिथि-सामान्यमुपजीव्य प्रवृत्तं, तथापि प्रतिपदि बाधका-

---

* फलानि घेरुपक्वानि,—इति वि॰ पुस्तके पाठः।
† नियमाश्रयाः, इति वि॰ पुस्तके पाठः।

भावात् तत्र प्रवर्त्तते। न चात्र युग्म-वाक्यं बाधकम्, तस्य तिथि-विशेषमुपजीव्य प्रवृत्तस्यापि कर्म-काल-व्याप्ति-वाक्यात् दुर्बलत्वात्। तिथिरङ्गं कर्माङ्गि ततः प्रबलमिति पूर्वमुक्तम्। कर्म-काल-व्याप्तिञ्च वृद्धयाज्ञवल्क्य आह,—

"कर्मणोयस्य यः कालस्तत्काल-व्यापिनी तिथिः।
तया कर्माणि कुर्वीत ह्रास-वृद्धी न कारणम्"—इति।

स्कन्दपुराणेऽपि,—

"यस्मिन् काले तु यत्कर्म तत्कालाव्यापिनी तिथिः।
तया कर्माणि कुर्वीत ह्रास-वृद्धी न कारणम्"—इति।

गार्ग्योऽपि,—

"योयस्य विहितः कालस्तत्काल-व्यापिनी तिथिः।
तया कर्माणि कुर्वीत ह्रास-वृद्धी न कारणम्"—इति।

कर्म-कालश्च दान-व्रतयोर्दैवत्वेन पूर्वाह्णोऽवगन्तव्यः। "पूर्वाह्णो वै देवानाम्"—इति शास्त्रात्। एकभक्त-नक्तयोर्दैवत्वेऽपि प्रतिपदोक्त-काल-विशेष-शास्त्रेण सामान्य-रूपं पूर्वाह्ण-शास्त्रं बाध्यते। मत्वेवं प्रकृतयोर्दान-व्रतयोः किञ्चिद्बाधकमस्ति।

अह्नः पूर्वोभागः पूर्वाह्णः। स च, पञ्चधा विभाग-पक्षे मुहूर्त्त-त्रयात्मकः प्रातः कालः। चतुर्द्धा विभाग-पक्षे सार्द्ध-प्रहरात्मकः। त्रिधा विभाग-पक्षे पञ्च-मुहूर्त्तात्मकः। द्वेधा विभाग-पक्षे सार्द्ध-सप्त-मुहूर्त्तात्मकः। पञ्चदशधा विभाग-पक्षेऽप्यर्थात्तथैव सम्पद्यते। यद्यपि बहुशास्त्रानुरोधेन पञ्चधा विभागएवात्र ग्राह्यः,—इति पूर्वमुक्तम्, तथापि बहुकर्त्तव्योपेतयोर्दान-व्रतयोर्मुहूर्त्त-त्रय-मात्रे-

ष्ठानुष्ठातुमशक्यत्वात् इतरेऽपि पक्षा अनुकल्पत्वेन ग्रहीतव्याः। यत्र सार्द्ध-सप्त-मुहूर्तैरपि कर्म न समाप्यते, तत्र कृत्स्नोदिवसोऽप्यभ्यनुज्ञायते। अतएव देवलः,—

"यान्तिथिं समनुप्राप्य उदयं याति भास्करः।

सा तिथिः सकला ज्ञेया स्नान-दान-जपादिषु"—इति।

व्यासोऽपि,—

"उदयन्नेव सविता यां तिथिं प्रतिपद्यते।

सा तिथिः सकला ज्ञेया दानाध्ययन-कर्मसु"—इति।

भविष्योत्तरपुराणेऽपि,—

"व्रतोपवास-नियमे घटिकैका यदा भवेत्।

सा तिथिः सकला ज्ञेया पित्र्यर्थे चापराह्णिकी"—इति।

पद्मपुराणेऽपि,—

"व्रतोपवास-नियमे घटिकैका यदा भवेत्।

उदये सा तिथिस्तत्र विपरीता तु पैतृके"—इति।

स्कन्दपुराणेऽपि,—

"व्रतोपवासदानादौ* घटिकैका यदा भवेत्।

उदये सातिथिर्ग्राह्या विपरीता तु पैतृके"—इति।

विष्णुधर्मोत्तरेऽपि,—

"व्रतोपवासस्नानादौ घटिकैका यदा भवेत्।

उदये सा तिथिर्ग्राह्या श्राद्धादावस्तगामिनी"—इति।

बौधायनोऽपि,—

* स्नानादौ,—इति वि० क० पुस्तकयोः पाठः।

"आदित्योदय-वेलायां याऽल्पापि च* तिथिर्भवेत् ।
पूर्णा इत्येव मन्तव्या प्रभूता नोदयं विना"—इति ।

नन्वस्त्वेवं कृत्स्नदिवसाभ्यनुज्ञा, तथाप्युत्तर-विद्धायास्तिथेर्ग्रहणे कियत्परिमाणमुदये अपेक्षणीयमिति विवेचनीयम् । तत्र, बौधायनेन 'अल्पापि'—इत्यभिधानात् निमेषमात्रं प्रतिभाति । तथा व्यासवाक्येऽपि प्रतिभाति । 'उदयन्नेव'—इत्यभिधानात् । भविष्योत्तरपुराणादिवचनेषु घटिकामात्रं प्रतीयते । वचनान्तरे तु विष्णुधर्मोत्तर-बौधायन-प्रोक्ते घटिका-चतुष्टयं प्रतिभासते । तथाच पठ्यते,—

"उदिते दैवतं भानौ पित्र्यञ्चास्तमिते रवौ ।
द्विमुहूर्त्तं त्रिरह्नश्च सा तिथिर्हव्य-कव्ययोः"—इति ।

अस्यार्थः । भानावुदिते सत्युत्तरकालेऽह्नोमुहूर्त-द्वयं दैवतम्, तस्मिंश्चास्तमिते ततः पूर्वकालीनमह्नोमुहूर्त्त-त्रयं पित्र्यम् । अतस्तावत्काल-व्यापिनी या तिथिर्भवति, सैव क्रमेण हव्य-कव्ययोर्ग्राह्या,—इति ।

अत्रोच्यते । 'पौर्वाह्णिकाः'—इति वचनेन दैवे पूर्वाह्ण-व्याप्त्यभिधानात् पूर्वाह्णस्य पञ्चधा विभक्तस्य मुख्यत्वादुदिते भानौ त्रिमुहूर्त्ता तिथिर्ग्रहीतव्या । यत्तु दक्षेणोक्तम्,—

"त्रिमुहूर्त्ता न कर्त्तव्या या तिथिः क्षय-गामिनी ।
द्विमुहूर्त्ताऽपि कर्त्तव्या या तिथिर्वृद्धि-गामिनी"—इति ।

तत् न त्रिमुहूर्त्त-व्याप्तेर्बाधकं, प्रत्युतोपोद्बलकमेव । तथा हि, प्रतिषेधः सर्वत्र प्रसक्ति-पूर्वकः, प्रसक्तिश्चात्र यथोक्त-रीत्या पौर्वाह्णिक-

* या स्वल्पापि,—इति वि॰ पुस्तके पाठः ।

वाक्याद्वा, त्रिमुहूर्त-वेधाभिधायि-पैठीनसि-वाक्याद्वा भवति। तच्च प्रसक्तं त्रिमुहूर्त्तत्वं, सम-तिथौ बाधकाभावात् तथैव व्यवतिष्ठते। तिथि-क्षये त्वधिक-व्याप्ति-विधित्सया प्रतिषिध्यते। अतस्तत्र चतुर्थ-मुहूर्त-स्पर्शिनी तिथिर्ग्राह्या। तिथि-साम्यवत्तिथि-वृद्धावपि मुहूर्त्त-त्रयमेव मुख्यम्। मुहूर्त्त-द्वयन्त्वनुकल्पः। एतदेव सूचयितुं 'द्विमु-हूर्ताऽपि'—इत्यपि शब्दः पठ्यते।

नन्वत्र, क्षय-वृद्ध्युपजीवनेन निर्णयः क्रियते। स चानुपपन्नः, व्यास-वाक्ये ह्रास-वृद्धि-चोदनायाः पित्र्य-विषयत्वाभिधानात्,

"एकोद्दिष्टादि वृद्ध्यादौ-ह्रास-वृद्ध्यादि-चोदना"—

इति हि पूर्वमुदाहृतम्। दान-व्रते च दैवे, अतः कथमनयोर्वृद्धि-क्षयाभ्यां निर्णयः? किञ्चोदाहृत-याज्ञवल्क्य-स्कन्दपुराण-गार्ग्य-वचनेषु 'ह्रासवृद्धी न कारणम्'—इत्युक्तम्। तत्कथमत्र, ह्रास-वृद्ध्योर्निर्णय-कारणत्वम्?

अत्रोच्यते। सन्ति ह्यन्यानि ह्रास-वृद्धि-वाक्यानि। तत्रोशना,—

"खर्वोदर्पस्तथा हिंस्रस्त्रिविधन्तिथि-लक्षणम्*।
खर्व-दर्पौ परौ कार्यौ हिंस्रः पूर्वत्र पूज्यते†"—इति।

भविष्योत्तरेऽपि,—

"खर्वोदर्पस्तथा हिंस्रस्त्रिविधन्तिथि-लक्षणम्।
खर्व-दर्पौ परौ कार्य्यौ हिंस्रः स्यात् पूर्वकालिकः"—इति।

पितामहोऽपि,—

* हिंसा त्रिविधं तिथिलक्षणम्,—इति वि० पुस्तके पाठः। एवं परत्र
† हिंस्रः स्यात् पूर्वकालिकी,—इति वि० पुस्तके पाठः। एवं परत्र।

"खर्वो दर्पस्तथा हिंस्रस्त्रिविधस्तिथि-लक्षणम्।
खर्व-दर्पौ परौ पूज्यौ हिंस्रः स्यात् पूर्वकालिकः"—इति।

खर्वः साम्यम्, अल्पक्षयो वा। दर्पो वृद्धिः। हिंस्रः अधिकक्षयः। एतैः खर्वादि-वाक्यैः सह यस्मिन् विषये युग्मादि-वाक्यस्य विरोधः प्राप्नोति, तत्र दैव-पित्र्य-भेदेन व्यवस्थापकं व्यास-वाक्यं, न तु प्रकृतयोः क्षय-वृद्ध्योः पित्र्य-विषयत्व-प्रतिपादकम्। याज्ञवल्क्यादि-वचनेष्वपि कर्म-काल-व्याप्ति-शास्त्रस्य खर्व-दर्पादि-शास्त्रस्य च विरोधे प्राप्ते सति, कर्म-काल-व्याप्ति-शास्त्रस्य प्राबल्यमुच्यते, न तु प्रकृतयोः क्षय-वृद्ध्यो-र्निर्णयहेतुत्वं प्रतिषिध्यते।

ननु, व्यासः खर्वादिवाक्यानि पित्र्य-विषयत्वेन सङ्कोचयामास, याज्ञवल्क्यादयस्तु पित्र्ये कर्म-काल-व्याप्त्या खर्वादि-वाक्यान्यबाधन्त*। इत्येवं निर्विषयत्वमेषां प्रसज्येत! इति चेत्। मैवं,यदा पूर्वोत्तर-दिनयोः पित्र्य-विषय-कर्म-काल-व्याप्तिः समाना, यदा वा दिनद्वयेऽपि कर्म-काल-व्याप्त्यभावस्तत्रोभयत्र खर्वादि-वाक्यैर्निर्णेतुं शक्यत्वात्।

आस्तां प्रासङ्गिकी खर्वादि-वाक्य-चिन्ता। प्रकृते तु, सूर्य्योदये मुहूर्त्त-त्रय-व्यापिनी प्रतिपद्दान-व्रतयोर्ग्रहीतव्या। एवं च सति उदय-मात्र-व्याप्ति-शास्त्रं घटिकामात्र-व्याप्ति-शास्त्रञ्च वैय्यानराधिकरणन्या-येनात्रयुत्यानुवाद-रूपतया त्रि-मुहूर्त्त-व्याप्तिं प्रशंसन्ति। अथवा, यदा पूर्वेद्युरुदयकालं परित्यज्योपरि सर्वत्र व्याप्नोति, परेद्युरुदय-कालमात्रं व्याप्नोति, तदानीमुदयानन्तर-भाविन्यामुख्यायास्त्रिमुहूर्त्त-व्याप्तेरभ-

---

* खर्वादिवाक्यानि पित्र्यविषयाण्यबाधन्त,—इति वि॰ पुस्तके पाठः।

द्वयेऽप्यभावेन द्वयोरपि दिनयोर्गौणकालत्वे सति किं ग्राह्यमिति वीचायां* पूर्वदिने कर्म-काल-व्याप्तेर्भूयस्त्वात्तस्यैव ग्रहणं न्यायतः प्राप्तम्। केनापि निमित्तेन तत्र प्रत्यूहे सति परेद्युः कर्म-काल-व्याप्ति-सम्पादनाय पूर्णत्वमभिधायोदय-विहीनस्य व्याप्ति-बाहुल्यस्य हेय-त्वोक्ति-व्याजेन तदेव प्रशस्यते;

"आदित्योदय-वेलायां याऽल्पाऽपि च तिथिर्भवेत्।
पूर्णाइत्येव मन्तव्या प्रभूता नोदयं विना"—इति।

यदा पूर्वद्युः सङ्गवमारभ्य परेद्युरुदयात् प्रागेव तिथि-क्षय-वशात् प्रतिपत्समाप्ता, तदा यद्यपि दिनद्वये सोदय-मुहूर्त्त-त्रयं नास्ति तथापि पूर्वद्युरेवानुष्ठेयम्।

"सा तिथिः सकला ज्ञेया यस्यामस्तमितोरविः"—इति

वचनेन सम्पाद्यायाः सोदय-त्रि-मुहूर्त्तायाव्याप्तेर्विद्यमानत्वात्। परेद्युस्तादृश्याश्चाप्यभावात्। यदा पूर्वेद्युरुदयमारभ्य परेद्युरुदयादूर्ध्वं मुहूर्त्त-त्रयं वर्द्धते, तदानीं यद्यपि द्वयोर्दिनयोः सोदय-त्रि-मुहूर्त्त-व्याप्तिरस्ति तथापि पूर्वेद्युरेवानुष्ठानम्। अस्तमय-व्याप्तेरधिकत्वात्। अतएव पद्मपुराणेऽभिहितम्,—

"व्रते स्नाने तथा नक्ते पितृकार्य्ये विशेषतः।
यस्यामस्तं गतोभानुः सा तिथिः पुण्यभाग्भवेत्"—इति।

---

* यथायोग्यं विपरिवर्त्तितव्येया। नापि पक्षस्य क्षयवृद्धिभ्यां निर्णयो-युज्यते, तत्राप्युक्तदोषस्यापरिहार्य्यत्वात्। यदा शुक्लपक्षस्य,—इत्यधिकः पाठः वि॰ पुस्तके।

नन्वास्तां सोदय-त्रि-मुहूर्त्त-व्याप्तिरस्तमय-व्याप्तिश्च, निर्णयस्तु शुक्ल-कृष्ण-पक्षाभ्यां भविष्यति। तथा च मार्कण्डेयः,—

"शुक्लपक्षे तिथिर्ग्राह्या यस्यामभ्युदितो रविः।
कृष्णपक्षे तिथिर्ग्राह्या यस्यामस्तमितो रविः"—इति।

विष्णुधर्मोत्तरेऽपि,—

"वर्द्धमानेन्दु-पक्षस्य उदये पूज्यते तिथिः।
यदा चन्द्रः क्षयं याति तदा स्यादापराह्णिकी"—इति।

अथवा, पक्षस्य वृद्धि-क्षयाभ्यां निर्णेतव्यम्। तथा च वृद्धवसिष्ठः,—

"वर्द्धमानस्य पक्षस्य उदये पूज्यते तिथिः।
यदा पक्षः क्षयं याति तदा स्यादापराह्णिकी"—इति।

बौधायनः,—

"सा तिथिस्तच्च नक्षत्रं यस्यामभ्युदितो रविः।
वर्द्धमानस्य पक्षस्य हानौ त्वस्तमयं प्रति"—इति।

अत्रोच्यते। न तावत् शुक्लपक्ष-कृष्णपक्षाभ्यां निर्णयः संभवति। तथा सति, बहु-वचन-बाध-प्रसङ्गात्। तथा हि,—यानि वचनानि पूर्व्व-विद्धायां शुक्लप्रतिपदि उपवास-विधायकानि पूर्व्वमुदाहृतानि, तानि बाध्येरन्। तथा, कृष्ण-प्रतिपदः पर-विद्धायामुपोष्यत्वं पर्व्व-निर्णीतं, तच्च विपरिवर्त्तेत। एवमेकभक्तादावपि यथायोग्यं विपरिवृत्तिरूह्या। नापि पक्षस्य क्षय-वृद्धिभ्यां निर्णयो युज्यते। तत्राप्युक्त-दोषस्यापरिहार्य्यत्वात्। यदा शुक्लपक्षस्तिथि-वृद्ध्या षोड़शदिनात्मको भवति, तदा भवन्मते पर-विद्धायां शुक्ल-प्रतिपद्युपवासः प्राप्नोति। कृष्णपक्षस्य तिथि-क्षय-वशाच्चतुर्द्दश-दिनात्मकत्वे पूर्व्व-विद्धायां कृष्ण-

प्रतिपद्युपवासः प्राप्नोति। एवं बाधान्तरमुन्नेयम्। अस्ति च शुक्ल कृष्ण-पक्ष-वाक्यस्य विनाऽप्यन्य-बाधं विषय-विशेषः। तथाऽङ्गिरसा स्मर्य्यते,—

"सम्पूर्णा दशमी कार्य्या परया पूर्वयाऽथवा।
युक्ता न दूषिता यस्मादिति सा सर्वतोमुखी"—इति।

तत्र शुक्ल-कृष्ण-पक्षाभ्यां व्यवस्था कर्त्तव्या। पक्ष-वृद्धि-क्षय-वाक्यमपि पूर्वेण समान-विषयतया व्याख्येयम्। वर्द्धमानस्य चन्द्रस्य यः पक्षस्तस्येति योजनीयम्। तथा सति, शुक्लपक्षइत्युक्तं भवति। यदा पक्षः क्षयं याति,—इत्यत्रापि पक्ष-निर्वाहकश्चन्द्रः क्षयं यातीति व्याख्याने कृष्णपक्षइति लभ्यते। अतोयथोक्त-सोदय-त्रिमुहूर्त्त-व्याप्ति-कृतो निर्णयः सुस्थितः।

अत्राप्येकभक्तवत् षोढा भिद्यते। उदयकाले पूर्वेद्युरेव त्रिमुहूर्त्तव्यापिनी, परेद्युरेव त्रिमुहूर्त्तव्यापिनी, उभयत्रापि त्रिमुहूर्त्तव्यापिनी, नोभयत्र त्रिमुहूर्त्तस्पर्शिनी, उभयत्र साम्येन वैषम्येण वा त्रिमुहूर्त्तवर्त्तिनी, एकदेशवर्त्तिनी चेति। अत्र, प्रथमपक्षे खण्डतिथित्वाभावान्नास्ति सन्देहः। तृतीयादिषु चतुर्षु पक्षेषु अस्तमय-व्याप्तेः कर्म-काल-साकल्यस्य च लाभात् पूर्वेद्युरेवानुष्ठानम्। द्वितीयपक्षे तु क्षयगामित्वे त्रिमुहूर्त्तामप्युत्तर-विद्धां परित्यज्य पूर्वेद्युरेवानुष्ठानम्। वृद्धिगामित्वे साम्ये च परेद्युरिति निर्णयः। इष्ट्यङ्गभूता प्रतिपत्पर्व-निर्णये वक्ष्यते।

॥०॥ इति दान-व्रत-निर्णयः ॥५॥

——०:०:०——

उक्तान्युपवासैकभक्तायाचितदानव्रतानि प्रतिपद्विषयाणि। तावता दैव-विषयोनिर्णयः सुस्थितः।

अथ पित्र्यं निर्णीयते।

तत्र, सामान्येनापराह्णिक-प्रतिपदि पित्र्यं विहितम्।

"प्रतिपत् सैव विज्ञेया या भवेदापराह्णिकी॥
दैवं कर्म तथा ज्ञेयं पित्र्यं वा मनुरब्रवीत्"—

इति हि व्यास-वाक्यं पूर्वमुदाहृतम्। पित्र्यञ्च द्विविधं एकोद्दिष्टं पार्वणञ्च। तयोः स्वरूपमाह कण्वः,—

"एकमुद्दिश्य यच्छ्राद्धमेकोद्दिष्टं प्रकीर्त्तितम्।
त्रीनुद्दिश्य तु यत्तद्धि पार्व्वणं मुनयोविदुः"—इति।

तत्र, प्रतिपदि मृतस्य मासान्तर-वर्त्तिन्यां प्रतिपद्येकोद्दिष्ट-रूपं मासिकं प्रसक्तम्। संवत्सरान्तर-वर्त्तिन्यां तस्यां प्रतिपदि पार्वण-रूप-माब्दिकं श्राद्धं प्राप्नोति। तत्र मासिकस्य तद्दिन-कर्त्तव्यतामाह याज्ञवल्क्यः,—

"मृतेऽहनि तु कर्त्तव्यं प्रतिमासन्तु वत्सरम्।
प्रतिसंवत्सरञ्चैव आद्यमेकादशेऽहनि"—इति।

तेषाञ्च मासिकानामेकोद्दिष्ट-रूपत्वं पैठीनसिराह,—

"षाण्मासिकाब्दिके श्राद्धे स्यातां पूर्व्वद्युरेव ते।
मासिकानि स्वकीये तु दिवसे द्वादशेऽपिवा॥
सपिण्डीकरणादर्व्वाक् कुर्व्वन् श्राद्धानि षोड़श।
एकोद्दिष्ट-विधानेन कुर्य्याच्छ्राद्धानि तानि तु"—इति।

अयमर्थः,—ऊनषाण्मासिकं सप्तम-मास-गत-मृताह-दिनात् पूर्वे-द्युरनुष्ठेयम्। ऊनाब्दिकञ्च द्वितीय-वत्सरादेर्मृताह-दिनात् पूर्वेद्युः कर्त्तव्यम्। मासिकानि तु तत्तन्मास-मृताह-दिनेऽनुष्ठेयानि। सएव मुख्यः कल्पः। यदा तु द्वादशाहादौ सपिण्डीकरणं, तदा तस्मात् पूर्वं यस्मिन् कस्मिन्नपि वा दिने मासिकान्याकृष्यानुष्ठेयानि। सोऽयमनु-कल्पः। पक्षद्वयेऽप्येकोद्दिष्ट-विधानमेव, न तु पार्वण-विधानम्,—इति।

अत्रेदं चिन्त्यते। किमेकोद्दिष्टेष्वपराह्ण-व्यापिनी तिथिर्ग्राह्या, किं वा सायाह्न-व्यापिनी, उतास्तमय-व्यापिनी, अहोस्विन्मध्याह्नव्या-पिनी?—इति। न चात्र पक्षान्तराणि सम्भाव्यन्ते, तत्प्रापकाभावात्।

ननु, युग्माग्नि-वाक्यं, तिथि-ह्रास-वृद्धि-वाक्यं, शुक्ल-कृष्ण-पक्षवाक्यं, पक्ष-क्षय-वृद्धि-वाक्यं, कर्म-काल-व्याप्ति-वाक्यं वा, पक्षान्तर-प्रापकं भविष्यति। मैवं,पक्ष-क्षय-वृद्धि-वाक्यस्य शुक्ल-कृष्ण-पक्ष-परत्वेन व्याख्या-तत्वात्। शुक्लादि-वाक्यन्तु पूर्वोत्तरयोस्तिथ्योः शास्त्रान्तराभ्यां प्राप्ति-साम्ये सति पुरुषेच्छा-निवारणाय व्यवस्थापकमित्युक्तम्। तिथि-ह्रास-वृद्धी तु कर्म-कालेन बाध्येते। कर्म-काल-वाक्ये साक्षादेव 'ह्रास-वृद्धी न कारणम्'—इत्युक्तत्वात्। युग्मवाक्यन्तु न पित्र्य-विषयम्। कर्मका-लस्य कोद्दिष्टस्य नाद्यापि निर्णीतः। अतोन पक्षान्तर-सम्भवः।

उपन्यस्तेषु तु पक्षेषु प्रथमस्तावत्सामान्य-विशेष-शास्त्राभ्यामपराह्ण-व्यापिनी प्रतिभाति।

"आपराह्णिकास्तथा ज्ञेयाः पित्र्ये तु शुभावहाः"—

इति हि निगम-वाक्यं पूर्वमुदाहृतम्। हारीतेऽपि,—

"अपराह्णः पितॄणान्तु याऽपराह्णानुयायिनी।

सा ग्राह्या पितृकार्य्ये तु न पूर्वाऽस्तानुयायिनी *"—इति ।

वृहन्मनुरपि,—

"यस्यामस्तं रविर्य्याति पितरस्तामुपासते ।

तिथिन्तेभ्यो यतोदत्तोह्यपराह्णः स्वयम्भुवा"—इति ।

तदेतत्सामान्य-शास्त्रं, तिथिमात्रमुपजीव्य प्रवृत्तत्वात् ।

"प्रतिपत्सैव विज्ञेया या भवेदापराह्णिकी"—

इति तु विशेष-शास्त्रं, तिथि-विशेषोपजीवनेन प्रवृत्तत्वात् । ताभ्यामुभाभ्यां शास्त्राभ्यां प्रथमपक्षउत्तिष्ठति । द्वितीय-पक्षेऽप्यस्ति शास्त्रद्वयम् । बौधायनः,—

"उदिते दैवतम्भानौ पित्र्यञ्चास्तमिते रवौ ।

द्विमुहूर्त्तं त्रिरह्नश्च सा तिथिर्हव्य-कव्ययोः"—इति ।

वचनार्थस्तु पूर्वं व्याख्यातः । तदेतत्सायाह्न-व्याप्तेः सामान्य-शास्त्रम् । विशेषस्तु पैठीनसिना दर्शितः,—

"पञ्चमी सप्तमी चैव दशमी च त्रयोदशी ।

प्रतिपन्नवमी चैव कर्त्तव्या सम्मुखी तिथिः"—इति ।

न चात्रापि प्रतिपदः साम्मुख्यमात्रं प्रतीयते, न तु सायाह्नव्याप्तिः,—इति शङ्कनीयम् ।

"सम्मुखी नाम सायाह्न-व्यापिनी दृश्यते यदा"—

इति स्कन्दपुराणे साम्मुख्यस्य व्याख्यातत्वात् । अस्तमय-व्यापित्वपक्षो वृद्धयाज्ञवल्क्येन दर्शितः,—

"देवकार्य्ये तिथिर्ज्ञेया यस्यामभ्युदितोरविः ।

* न पूर्व्वाह्णानुयायिनी,—इति वि० पुस्तके पाठः ।

पितृकार्य्ये तिथिर्ज्ञेया यस्यामस्तमितो रविः"—इति॥

तथा, दान-क्रियायामुदाहृतेषु घटिका-व्याप्ति-वाक्येष्वस्तमये घटिका-व्याप्तिः पित्र्ये प्रदर्शिता। तदेतदुपन्यस्तं पक्ष-त्रयमेकोद्दिष्ट-पार्वण-विषयं, पित्र्य-कर्म-सामान्यमुपजीव्य प्रवृत्तत्वात्। एकोद्दिष्टे तु चतुर्थः पक्षोवाचनिकः। तथा च वृद्धगौतमः *,—

"मध्याह्न-व्यापिनी या स्यात् सैकोद्दिष्टे तिथिर्भवेत्।
अपराह्न-व्यापिनी या पार्वणे सा तिथिर्भवेत्"—इति।

शिव-राघव-संवादेऽपि,—

"मध्याह्न-व्यापिनी या स्यात् सैकोद्दिष्टे तिथिर्भवेत्"—इति।

कर्म-काल-व्याप्ति-शास्त्रेणाप्ययमेव चतुर्थः पक्षः प्राप्यते। मध्याह्नस्यैकोद्दिष्टे कर्म-कालत्वात्। तथा च हारीत-शातातपौ,—

"आमश्राद्धन्तु पूर्वाह्णे एकोद्दिष्टन्तु मध्यमे।
पार्वणञ्चापराह्णे तु प्रातर्वृद्धि-निमित्तकम्"—इति।

स्मृत्यन्तरञ्च,—

"पूर्वाह्णे दैविकं श्राद्धमपराह्णे तु पार्वणम्।
एकोद्दिष्टन्तु मध्याह्ने प्रातर्वृद्धि-निमित्तकम्"—इति।

व्यासः,—

"एकमुद्दिश्य यच्छ्राद्धं दैव-हीनं विधीयते।
एकोद्दिष्टन्तु तत्प्रोक्तं मध्याह्ने तत्प्रकीर्त्तितम्"—इति।

मध्याह्नश्च, सप्तमाष्टमनवम-मुहूर्त्तात्मकः। ते च मुहूर्त्ता गान्धर्व-कुतप-रौहिण-संज्ञकाः॥

* 'वृद्ध'—इति नास्ति मु० पुस्तके।

तत्रैकोद्दिष्टस्योपक्रमे कुतपस्य पूर्वान्तरभागाविच्छया विकल्पितौ। तदाह व्यासः,—

"कुतप-प्रथमे भागे एकोद्दिष्टमुपक्रमेत्।
आवर्त्तन-समीपे वा तत्रैव नियतात्मवान्"—इति।

समाप्ति-कालमाह स्रोकगौतमः,—

"आरभ्य कुतपे श्राद्धं कुर्य्यादारौहिणं बुधः।
विधिज्ञो विधिमास्थाय रौहिणन्तु न लङ्घयेत्"—इति।

तदेवं कुतप-रौहिणयोर्मध्याह्न-गत-मध्यम-चरम-भागयोः कर्म-कालत्वेन व्यवस्थितयोः सतोस्तन्मुहूर्त्त-व्यापिनी तिथिरेकोद्दिष्टे ग्रहीतव्येति स्थितम्। अत्राप्येकभक्तवद्भेदा अवतारणीयाः। तत्र पूर्व्वेद्युरेव परेद्युरेव वा मध्याह्न-व्याप्तिरित्यनयोः पक्षयोर्न कोऽपि सन्देहः। उभयत्र तद्व्यापित्वं, तत्-संस्पर्शाभावो वेत्यनयोः पक्षयोः पूर्व्वेद्युरेवानुष्ठानम्। तथा सति पूर्व्वादाहृतान्यपराह्णसायाह्नास्तमय-व्याप्ति-विषयाणि पित्र्य-सामान्य-वचनान्यनुगृहीतानि भविष्यन्ति। उभयत्र साम्येन एकदेश व्याप्तौ खर्व्वादि-वाक्यं द्रष्टव्यम्। तच्च पार्व्वण-प्रस्तावे योजयिष्यते। वैषम्येणैकदेश-व्याप्तौ तु यदा पूर्व्वेद्युर्महती, तदा महत्त्वानुग्रहात् सामान्य-वचनानुग्रहाच्च पूर्व्वेद्युरेवानुष्ठानम्। यदा परेद्युरेव महती, तदा सामान्य-शास्त्रमुपेक्ष्यापि महत्त्वमेवादरणीयमिति पार्व्वण श्राद्ध-निर्णये वक्ष्यते। अतस्तेनैव न्यायेनात्रापि परेद्युरेवानुष्ठानं द्रष्टव्यम्।

॥०॥ इत्येकोद्दिष्ट-निर्णयः॥०॥

अथ पार्वण-श्राद्धं निर्णीयते ।

पर्वण्यमावास्यायां यद्विहितं, तत्पार्वणम्। तच्च तत्कालञ्च शातातप आह,—

"दर्शश्राद्धन्तु यत्प्रोक्तं पार्वणं तत्प्रकीर्त्तितम्।
अपराह्णे पितॄणान्तु तत्प्रदानं विशिष्यते"—इति।

यद्यप्येतादृशं पार्वणं प्रतिपदि न प्राप्नोति, तथापि तद्विकृति-रूपतया त्रिपुरुषोद्देशेन कर्त्तव्यस्याब्दिक-काम्य-श्राद्धादेः पार्वणत्वं व्यवहर्तुं शक्यम्। अतएव काण्व-वाक्यं पूर्वमुदाहृतम्;

"त्रीनुद्दिश्य तु यत्तद्धि पार्वणं मुनयोविदुः"—इति।

तथा सति, प्रतिपदि मृतस्य वत्सरान्तरे तन्मास-तत्पक्ष-वर्त्तिन्यां प्रतिपद्याब्दिकरूपं पार्वणं प्राप्नोत्येव। एतस्यार्थस्य प्रापकं वचनं मलमास-प्रस्तावे दर्शितम्,—

"मास-पक्ष-तिथि-स्पृष्टे योयस्मिन् म्रियतेऽहनि।
प्रत्यब्दन्तु तथाभूतं क्षयाहन्तस्य तं विदुः"—इति।

ब्रह्मपुराणेऽपि,—

"प्रतिसंवत्सरं कार्य्यं मातापित्रोर्मृतेऽहनि।
पितृव्यस्य त्वपुत्रस्य* भ्रातुर्ज्येष्ठस्य चैव हि"—इति।

काम्यन्तु पार्वणमपरपक्षे सर्वासु तिथिषु प्रत्येकं विहितम्। तथा च याज्ञवल्क्यः,—

"कन्यां कन्यावेदिनश्च पशून् वै मत्सुतानपि।
द्यूतं कृषिञ्च वाणिज्यं द्विशफैकशफांस्तथा॥

* पितृव्यस्याप्यपुत्रस्य,—इति वि॰ पुस्तके पाठः।

ब्रह्मवर्चस्विनः पुत्रान् स्वर्णरूप्ये सकुप्यके।
ज्ञातिश्रैष्ठ्यं सर्वकामानाप्नोति श्राद्धदः सदा॥
प्रतिपत्प्रभृतिष्वेकां वर्जयित्वा चतुर्द्दशीम्।
शस्त्रेण तु हतायं वै तेभ्यस्तत्र प्रदीयते"—इति।

मार्कण्डेयोऽपि,—

"प्रतिपद्धन-लाभाय द्वितीया द्विपद-प्रदा।
वरार्थिनी तृतीया च चतुर्थी शत्रुनाशनी॥
श्रियं प्राप्नोति पञ्चम्यां षष्ठ्यां पूज्यतमोनरः।
गाणपत्यं च सप्तम्यामष्टम्यां वृद्धिमुत्तमाम्॥
श्रियं नवम्यां प्राप्नोति दशम्यां पूर्णकामताम्।
वेदांस्तथाऽऽप्नुयात् सर्वानेकादश्यां क्रियापरः॥
द्वादश्यां जयलाभञ्च प्राप्नोति पितृपूजकः।
पूजां मेध्यां पशून् वृद्धिं स्वातन्त्र्यं पुष्टिमुत्तमाम्॥
दीर्घमायुर्धनैश्वर्य्यं कुर्वाणस्तु त्रयोदशीम्।
अवाप्नोति न सन्देहः श्राद्धं श्राद्धपरोनरः॥
युवानः पितरोयस्य मृताः शस्त्रेण वा हताः।
तेन कार्य्यं चतुर्द्दश्यान्तेषां तृप्तिमभीप्सता॥
श्राद्धं कुर्वन्नमावास्यां यत्नेन पुरुषः शुचिः।
सर्वान् कामानवाप्नोति श्राद्धकृत्पुरुषः सदा"—इति।

अतोविकृतिरूपं पार्वणं सम्भाव्यते प्रतिपदि। तस्य च पार्वणस्योचितां तिथिं निर्णेतुं प्रथमतोविधि-निषेध-रूपाभ्यां अन्वय-व्यतिरेकाभ्यामनुष्ठान-कालोनिरूप्यते। तत्र, शातातपोक्तोविधिरुदाहृतः,—

"अपराह्णे पितृणान्तु"—इति। तथा वाक्यान्तराण्यपि। मनुः,—

"तथा श्राद्धस्य पूर्वाह्णादपराह्णोविशिष्यते"—इति।

वृद्धमनु-हारीत-वचने एकोद्दिष्ट-प्रस्तावे उदाहृते,—"अपराह्णः स्वयम्भुवा"—इति। "अपराह्णः पितृणाम्"—इति च। श्रुतिश्च,—"अपराह्णः पितृणाम्"—इति। शङ्खः,—

"पूर्वाह्णे दैविकं कृत्यमपराह्णे पितृ-क्रिया।

ग्रहणे निशि वा कुर्य्यान्न रात्रौ पैतृकं पुनः"—इति।

स्मृत्यन्तरेपि,—"अपराह्णे तु पैतृकम्"—इति। ननु सायाह्नस्यापि कर्मकालत्वं क्वचित् स्मर्य्यते,—

"दिनान्ते पञ्च नाड्यस्तु पुण्याः प्रोक्ता मनीषिभिः।

उदये च तथा पित्र्ये दैवे चैव च कर्मणि"—इति।

मैवम्, यमेन प्रतिषिद्धत्वात्,

"सायाह्नस्त्रिमुहूर्त्तः स्याच्छ्राद्धं तत्र न कारयेत्।

राक्षसी नाम सा वेला गर्हिता सर्वकर्मसु"—इति।

तर्हि, पञ्च-नाडी-वचनं निर्विषयं स्यादिति चेत् न, केनापि निमित्तेनापराह्णासम्भवे गौणकालाभ्यनुज्ञा-परत्वात्। अतएव व्यासः,—

"स्वकालातिक्रमे कुर्य्याद्रात्रेः पूर्वं यथाविधि"—इति।

व्याघ्रपादोऽपि,—

"विधिज्ञः श्रद्धयोपेतः सम्यक् पात्र-नियोजकः।

रात्रेरन्यत्र कुर्वाणः श्रेयः प्राप्नोत्यनुत्तमम्"—इति।

ननु, सायाह्नेऽपि यदा कथञ्चित् प्रत्यूहस्तदा श्राद्धस्य किं लोपएव, किं वा रात्रावपि कर्तुं शक्यते? तत्र,लोपएवेति तावत् प्राप्तम्। कुतः?

मुख्यकालत्व-गौणकालत्वयोः रात्रेर्निषेधात्। मुख्यकालत्वं प्रतिषेधति मनुः,—

"रात्रौ श्राद्धं न कुर्वीत राक्षसी कीर्त्तिता हि सा।
सन्ध्ययोरुभयोश्चैव सूर्य्ये चैवाचिरोदिते"—इति।

न चैवं सति ग्रहण-श्राद्धमपि प्रतिषिध्येतेति शङ्कनीयम्। शातातपेन विशेषितत्वात्,

"रात्रौ श्राद्धं न कुर्वीत राहोरन्यत्र दर्शनात्।
सूर्य्योदय-मुहूर्त्ते च सन्ध्ययोरुभयोस्तथा"—इति।

गौणकालत्वमपि व्यास-व्याघ्रपद्भ्यां पर्युदस्तं, "रात्रेः पूर्वं" "रात्रेरन्यत्र"—इति ताभ्यामुक्तत्वात्। तस्मादह्नि श्राद्धासम्भवे लोपएवेति प्राप्ते ब्रूमः। न तावद्रात्रौ सर्वात्मना श्राद्धस्य निषेधोवक्तुं शक्यः, आपस्तम्बेन रात्रौ श्राद्ध-समाप्त्यभ्युपगमात्। "न च नक्तं श्राद्धं कुर्वीतारब्धे च भोजनसमापनम्"—इति। ननु, सन्ध्या-समीपे प्रारब्धस्य रात्रौ समाप्ति-प्रसङ्गः। तादृशस्तु प्रारम्भः स्कन्देन निषिद्धः,

"उपसन्ध्यं न कुर्वीत पितृ-पूजां कथञ्चन।
स कालश्चासुरः प्रोक्तः श्राद्धं तत्र विवर्जयेत्"—इति।

नैवम्। सन्ध्या-सामीप्यस्य मुख्यकालत्व-निषेधात्। गौणकालत्वञ्च पूर्वमभिहितम्। तत्र प्रारब्धस्य रात्रावपि परिसमाप्तिः सम्भाव्यते।

नन्वेवमपि रात्रौ समाप्तिरेवाभ्यनुज्ञायते न त्वारम्भ इति चेत्। नैवम्। आरम्भस्यापि तया समाप्त्या उपलक्षणीयत्वात्। आब्दिक-श्राद्ध-परित्यागे प्रत्यवाय-बाहुल्य-स्मरणात्। तथा च भविष्यत्पुराण-प्रभास-खण्डयोः पठ्यते,—

"मृतेऽहनि पितुर्यस्तु न कुर्य्याच्छ्राद्धमादरात्।
मातुश्चैव वरारोहे, वत्सरान्ते मृतेऽहनि॥
नाहन्तस्य महादेवि, पूजां गृह्णामि नो हरिः"—इति।

अन्यत्रापि,—

"भोजकोयस्तु वै श्राद्धं न करोति खगाधिप।
मातापितृभ्यां सततं वर्षे वर्षे मृतेऽहनि॥
स याति नरकं घोरं तामिस्रं नाम नामतः"—इति।

अन्यत्रापि,—

"पण्डिताज्ञानिनोवाऽपि मूर्खायोषितएववा।
मृताहं समतिक्रम्य चाण्डालाः कोटिजन्मसु"—इति।

मरीचिः,—

"पण्डिताज्ञानिनोमूर्खाः स्त्रियोवा ब्रह्मचारिणः।
मृताहं समतिक्रम्य चाण्डालेष्वभिजायते"—इति।

नन्वेवं सति,

"रात्रेरन्यत्र कुर्वाणः श्रेयः प्राप्नोत्यनुत्तमम्"—इति

स्मरणात् अपराह्णवन्मुख्यत्वेन सायाह्नवद्गौणत्वेन वा प्रातः-सङ्गवावपि कालौ प्रसज्येयाताम्। नायं दोषः। शिव-राघव-संवादे प्रातःकालस्य निषिद्धत्वात्,—

"प्रातःकाले तु न श्राद्धं प्रकुर्वीत द्विजोत्तमः।
नैमित्तिकेषु श्राद्धेषु न काल-नियमः स्मृतः"—इति।

यद्यपि सङ्गवेन सासान्निषिद्धस्तथापि कुतप-मुहूर्त्ते मुख्योपक्रमस्य गान्धर्व-मुहूर्त्ते च गौणोपक्रमस्याभिधाने सति अर्थान्निषेधः परि-

शिष्यते। उपक्रम-द्वयञ्च शिव-राघव-संवादएव दर्शितम्,

"ग्रहादि-व्यतिरिक्तस्य प्रक्रमे कुतपः स्मृतः।

कुतपादथवाऽप्यर्वागामनं कुतपे भवेत्"—इति।

ग्रहो ग्रहणम्। आदिशब्देन संक्रान्त्यादि-निमित्तमुच्यते। तस्य च निमित्ताधीनत्वात् कुतपोन नियन्तुं शक्यते। इतरस्य तु सांवत्सरिकादेरस्ति कुतप-नियमः। स च मुख्योपक्रमे नियमः। कदाचित्कार्य्यवशाच्छ्राद्धस्य सहसा करणीयत्वे सति कुतपादर्वाचीनोगान्धर्वोऽप्युपक्रमकालतयाऽभ्यनुज्ञापते। कुतपस्य मुख्यत्वमनेक-वचन-विहितत्वादवगन्तव्यम्। तत्र, कुत-स्वरूपं भविष्यत्पुराणेऽभिहितम्,—

"प्रविश्य भानुः स्वच्छायां शङ्कुवद्यत्र तिष्ठति॥

स कालः कुतपोनाम मन्दीभूतस्य संज्ञया"—इति।

नारदः,—

"सन्त्यज्य सप्तमं भागं अष्टमं क्रमते यदा।

स कालः कुतपोज्ञेयोमन्दीभूतस्य संज्ञया"—इति।

आपस्तम्बः,—

"सप्तमात्परतोयस्तु नवमात्पर्वतः स्थितः।

उभयोरपि मध्यस्थः कुतपः स उदाहृतः"—इति।

स च कुतपोमुख्यत्वाय वायुपुराणे प्रशस्यते,—

"दिवसस्याष्टमे भागे मन्दीभवति भास्करः।

स कालः कुतपोनाम पितॄणां दत्तमक्षयम्"—इति।

कुतपात्पूर्वोत्तरयोर्गान्धर्व-रौहिणयोर्गौण-प्रक्रम-कालत्वं सूचयितुं छत्रि-न्यायेन मुहूर्त्त-त्रयं कुतप-शब्देन व्यवजहार नारदः,—

"मध्येऽह्नस्त्रि-मुहूर्त्ते तु यदा भवति* भास्करः।

स कालः कुतपोनाम पितॄणां दत्तमक्षयम्"—इति।

कुतपे प्रक्रान्तस्य सायाह्नादार्व्वाचीनः सर्व्वोऽपि मुख्योऽनुष्ठान-कालः। तदुक्तं मत्स्यपुराणे,—

"अह्नोमुहूर्त्ताविख्यातादश पञ्च च सर्व्वदा।

तत्राष्टमोमुहूर्त्तोयः स कालः कुतपः स्मृतः॥

अष्टमे भास्करोयस्मात् मन्दीभवति सर्व्वदा।

तस्मादनन्त-फल-दस्तत्रारम्भोविशिष्यते†।

ऊर्द्ध्वं मुहूर्त्तात् कुतपाद्यन्मुहूर्त्त-चतुष्टयम्॥

मुहूर्त्त-पञ्चकं ह्येतत्स्वधा-भवनमिष्यते"—इति।

नन्वपराह्नस्यान्तिमोभागोनिषिद्धः। तथा च यमः,—

"चतुर्थे प्रहरे प्राप्ते यः श्राद्धं कुरुते नरः।

आसुरन्तद्भवेच्छ्राद्धं दाता तु नरकं व्रजेत्"—इति।

स्मृत्यन्तरेऽपि,—

"चतुर्थे प्रहरे प्राप्ते यः श्राद्धं कुरुते द्विजः।

तदन्नं राक्षसोभुङ्क्ते निराशाः पितरोगताः"—इति

नैवायं दोषः। इहापराह्नस्यान्तिमेन पादन्यून-मुहूर्त्तेन सह सायाह्नस्तुर्थ-प्रहरोभवति। तत्र, सायाह्न-भाग-कटाक्षेणायं निषेधोन त्वपराह्न-भाग-कटाक्षेण। तामेतां विवक्षां विशदीकर्त्तुं यमोवचनान्तरेण सायाह्नं निराचकार। तच्च वचनं पूर्व्वमुदाहृतम्।

* चलति,—इति वि॰ पुस्तके पाठः।

† विधीयते,—इति मु॰ पुस्तके पाठः।

नन्वपराह्णस्य मुख्यकालत्वं न प्रतिनियतं, शुक्लपक्षे व्यभिचारात्। तथाच मार्कण्डेयः,—

"शुक्लपक्षे तु पूर्वाह्णे श्राद्धं कुर्य्याद्विचक्षणः।
कृष्णपक्षेऽपराह्णे तु रौहिणं तु न लङ्घयेत्"—इति।

नैषदोषः। अत्र शुक्ल-कृष्ण-पक्षशब्दयोर्दैव-पित्र्य-परत्वात्। देवानुद्दिश्य क्रियमाणं श्राद्धं दैवम्। तच्च फलकामिनामुत्साह-हेतुतया चित्त प्रसादं जनयतीति शुक्लशब्देनाभिधीयते। एवं पितॄनुद्दिश्य क्रियमाणं पित्र्यम्। तदपि पितृ-मरणादि-स्मारकतया चित्तकालुष्यं जनयतीति कृष्णशब्देनाभिधीयते। शुक्लस्य दैवस्य कर्म्मणः पक्षः शुक्लपक्षः, यदा दैवं श्राद्धं करिष्यामीति बुद्धिस्तदेत्यर्थः। एवमितरच्च योजनीयम्। एवं सत्यपराह्णेन पार्वणश्राद्धं व्यभिचरति। 'रौहिणन्तु न लङ्घयेत्'—इत्येकोद्दिष्ट-विषयम्। यद्यापाततः प्रतीतएवार्थोवचनस्यास्य परिगृह्येत, तदा पूर्वोदाहृतं वचनजातं निखिलमपि व्याकुलीभवेत्। तदेवं पार्वणश्राद्धस्यापराह्णः कर्म-कालः, कुतपः प्रारम्भ-कालः,—इति।

भवेतामेतौ कर्म-तदुपक्रम-कालौ, प्रकृते तु सांवत्सरिकादौ किं प्रतिपत् पूर्व-विद्धा ग्राह्या उतोत्तर-विद्धेति वीक्षायां देवस्वामी ब्रूते। यस्मिन् काले यद्विहितं कर्मोपक्रमोपसंहारयुक्तं* तस्मिन् काले तस्यास्तिथी यस्मिन्नहनि सम्भावयितुं† शक्यते, तदुत्तरं पूर्वं वा ग्राह्यमिति। यदा कुतपापराह्णोभयव्यापिनी न सम्भवति, तदा केवलापराह्णव्यापि-

* तदुपक्रमोपसंहारसंयुक्तम्,—इति मु॰ पुस्तके पाठः।

† तत्सम्भावयितुम्,—इति मु॰ पुस्तके पाठः।

न्यपि तिथिर्ग्रहीतव्या। 'पित्र्यर्थे चापराह्णिकी'—इति भविष्यत्पुराणेऽभिधानात्। हारीतोऽपि,—

"अपराह्णः पितॄणान्तु याऽपराह्णानुयायिनी।
सा ग्राह्या पितृकार्य्ये तु न ग्राह्याऽस्तानुयायिनी"—इति।

ननु, केवलापराह्णव्यापिनीवत् केवल-मध्याह्न-व्यापिन्यपि स्मृत्यन्तरे कर्माङ्गत्वेन प्रतीयते,—

"मध्याह्न-व्यापिनी या स्यात्तिथिः पूर्वा पराऽपिवा।
तत्र कर्माणि कुर्वीत ह्रास-वृद्धी न कारणम्"—इति।

नैवम्। वचनान्तर-संवादेनास्य वचनस्यैकोद्दिष्ट-विषयत्वेनैकभक्त-विषयत्वेन चोपपत्तेः।

अपराह्ण-व्याप्तिरेकभक्त-न्यायेन षोढ़ा भिद्यते। तत्र, पूर्व्वेद्युरेवापराह्ण-व्याप्तौ यथोक्तवचनेन सा ग्राह्या। परेद्युरेवापराह्णव्याप्तौ यथोक्तवचनात् प्रारम्भ-काल-सद्भावाच्च परा प्रशस्ता। उभयत्रापराह्ण-व्यापित्वे बौधायनश्चाह,—

"अपराह्ण-द्वय-व्यापिन्यतीतस्य च या तिथिः।
क्षये पूर्वा च कर्त्तव्या वृद्धौ कार्य्या तथोत्तरा"—इति।

अतीतस्य मृतस्य। अत्रेदं चिन्त्यते। किं मृताह-तिथेः प्रतिपदो वृद्धि-क्षयाभ्यां निर्णयः, उतोत्तरस्याद्द्वितीयाया वृद्धि-क्षयाभ्यामिति। प्रतिपदोवृद्धिक्षयाभ्यामिति तावत् प्राप्तम्। खर्वादि-वाक्य-तुल्यतया प्रतिभासमानत्वात्। तथा हि,—

"खर्वोदर्पस्तथा हिंसा त्रिविधं तिथि-लक्षणम्।
खर्व-दर्पौ परौ कार्य्यौ हिंसा स्यात् पूर्वकालिकी"—इति।

अत्रानुष्ठानाङ्गतिथेरेव धर्माः खर्व-दर्प-हिंसाः, नतूपरितन-तिथि-धर्माः। एतच्च दर्श-निर्णये स्पष्टीकरिष्यते। खर्वादि-वाक्यवदत्रापि पाश्च-तिथि-गतावेव वृद्धि-क्षयाविति प्राप्ते ब्रूमः। उत्तर-तिथि-गतावेवात्र वृद्धि-क्षयौ न पाश्च-तिथि-गतौ। कुतः? ह्यपराह्ण-व्यापित्वाभिधानात्। पूर्व्वेद्युरामध्याह्नावसानममावास्या प्रवृत्ता, ततोऽपराह्णोपक्रममारभ्य परेद्युरपराह्णावसान-पर्य्यन्तत्वे सति प्रतिपदो ह्यपराह्ण-व्यापित्वं भवति। तच्च त्रिमुहूर्त्त-वृद्ध्या सम्पद्यते, न तु क्षयेण। तथा सति 'क्षये पूर्वा तु कर्त्तव्या'—इत्येतन्नोपपद्यते। उत्तर-तिथि-गत वृद्धिक्षय-स्वीकारे तु सुतरामिदं वचनमुपपद्यते। तथा हि। यदा परेद्युर्द्वितीया सायाह्नं प्रविशति, तदा तिथि-वृद्धिः। तत्र परेद्युरनुष्ठानं न्याय्यम्। कुतपमारभ्याशेष-मुख्यकाल-व्यापित्वात्। यदा द्वितीया परेद्युरपराह्णेऽपि कियती क्षीयते, तदा प्रतिपत्पूर्व विद्धा कर्त्तव्या। उत्तर-विद्धायाः प्रतिपदो-ज्योतिःशास्त्र-प्रक्रिययाऽपराह्ण-व्यापित्वेऽपि पारिभाषिक्या स्मार्त्त-प्रक्रियया तदव्यापित्वात्। तथा च स्मर्य्यते,—

"तिथ्यादौ च भवेद्यावान् ह्रासो वृद्धिः परेऽहनि।
तावान् ग्राह्यः स पूर्व्वेद्युरदृष्टोऽपि स्व-कर्म्मणि"—इति।

तिथ्यादावित्यादिशब्देन नक्षत्र-योगौ गृह्येते। तिथि-नक्षत्र-योगेषु क्षीयमाणेषु स क्षयो यावद्घटिका-परिमितो भवति, तावद्घटिकापरिमितः क्षयस्तेभ्यः पूर्व्वेषु तिथि-नक्षत्र-योगेषु ज्योतिःशास्त्रेणादृष्टोऽपि स्मार्त्त-परिभाषया ग्रहीतव्यः। एवं वृद्धिरपि द्रष्टव्या। तथा सति प्रक्रान्तेऽपि द्वितीयाया अपराह्णे यावान् क्षयस्तावान् पूर्व्वेद्युः प्रतिपदि योज

नीयः। तथा सत्युत्तर-विद्धाप्रतिपन्नापराह्ण-व्यापिनी पूर्व-विद्धा तु अपराह्ण-व्यापिनी, सैव ग्रहीतव्या भवति।

नन्वस्मिन् वचने स्वकर्मणीत्युच्यते, ततश्च, स्वकर्म-निमित्तौ वृद्धि-क्षय-प्रक्षेपइत्यर्थः सम्पद्यते। न च प्रकृतं प्रत्याब्दिकं द्वितीयायाः स्वकर्म, अतः कथं तदीय-वृद्धि-क्षयौ वचनस्यास्य विषयौ भवतः। नैष दोषः। मा भूत् प्रत्याब्दिकं द्वितीयायाः स्वकर्म, प्रतिपदस्तु तद्भवत्येव। तथा सति प्रतिपदोयत् स्वकर्म तस्मिन्निमित्तभूते सति तस्यां प्रतिपदि वृद्धि-क्षयौ प्रक्षेपणीयाविति वचनार्थः सम्पद्यते। तौ च वृद्धि-क्षयौ प्रक्षेपाधिकरणात् तिथ्यादेरुत्तरतिथ्यादि-गताविति लभ्यते।

ननु, तिथ्यन्तर-गतयोर्वृद्धि-क्षययोस्तिथ्यन्तर-प्रक्षेपे सति ज्योतिः-शास्त्र-प्रसिद्धिः सर्वत्र विप्लवेत, ततस्तां प्रसिद्धिमुपजीव्य प्रवर्त्तमानः स्मार्त्त-निर्णयः सर्वोऽपि विप्लवेतेति चेत्। नैवम्। न खल्वयं वृद्धि-क्षय-प्रक्षेपोऽनुष्ठेय-तिथि-निर्णयायोपन्यस्यते, किन्तर्हि शास्त्रान्तरेणानुष्ठेय-तिथौ निर्णीतायां तदुपपादनायैतावापाद्यौ वृद्धि-क्षयावुपन्यस्येते। यथा, दाम-व्रतयोः शास्त्रान्तरेण त्रिमुहूर्त्त-व्यापिन्यां तिथौ निर्णीतायां कर्मकाल-व्याप्त्यभाव-शङ्कामपनेतुं 'सा तिथिः सकला ज्ञेया'—इति अविद्यमानमपि साकल्यमापाद्यते। एवमत्राप्यपराह्ण-द्वयव्यापिनीत्येतेन बौधायनवचनेन ज्योतिःशास्त्र-प्रसिद्धं द्वितीयायाः क्षयमुपजीव्य पूर्व-विद्धायां प्रतिपदि निर्णीतायां, कुतपादि-कृत्स्न-काल-व्यापिन्युत्तर-विद्धा प्रतिपत्कुतोन ग्राह्येति शङ्कामपनेतुं तिथ्यादाविति वचनेनोत्तर-विद्धायां प्रतिपद्यपराह्ण-क्षयआपाद्यते। अतोज्योतिःशास्त्र-प्रसिद्धेः स्मार्त्त-निर्णयस्य वा न कोऽपि विप्लवः।

यदा दिनद्वयेऽप्यपराह्णमस्पृष्ट्वाऽवशिष्टं कञ्चित्कालं व्याप्नोति, तदा पूर्वविद्धा प्रतिपद्ग्रहीतव्या। तदाह मनुः,—

"द्वाहेऽप्यव्यापिनी चेत्स्यान्मृताहे तु यदा तिथिः।

पूर्व-विद्धैव कर्त्तव्या त्रिमुहूर्त्ता भवेद्यदि"—इति।

सुमन्तुरपि,—

"द्व्यहेऽप्यव्यापिनी चेत्स्यान्मृताहस्य तु या तिथिः।

पूर्वस्यां निर्वपेत् पिण्डमित्याङ्गिरस-भाषितम्"—इति।

नन्वपराह्णास्पर्शउभयत्रापि समानः, प्रारम्भ-काले तु कुतपे परेद्युः सद्भावोविशिष्यते, ततः पर-विद्धैव कुतोन ग्राह्यति चेत्। गुणाधिक्यादिति ब्रूमः। परेद्युः कुतप-प्राप्तिरेकएव गुणः, पूर्वद्युस्तु तिथि-मूलत्वमस्तमय-व्याप्तिश्चेति गुण-द्वयम्। मूलस्य प्राशस्त्यं नारदीयपुराणे दर्शितम्,—

"पैत्र्यं मूलन्तिथेः प्रोक्तं शास्त्रज्ञैः काल कोविदैः"—इति।

शिवरहस्य-सौरपुराणयोरपि,—

"प्रायः प्रान्तउपोष्या* हि तिथिर्दैवफलेप्सुभिः।

मूलं हि पितृ-तृप्त्यर्थं पैत्र्यं चोक्तं महर्षिभिः"—इति।

अस्तमय-व्याप्तेः प्राशस्त्यमाह मनुः,—

"यस्यामस्तं रविर्याति पितरस्तामुपासते।

स पितृभ्योयतोदत्तोह्यपराह्णः स्वयम्भुवा"—इति।

एतत्प्राशस्त्यमर्थमेवोत्तर-विद्धां[†] प्रतिषेधति व्यासः,—

* प्रातः प्रातरुपोष्या हि,—इति वि॰ पुस्तके पाठः।

† एतत्प्राशस्त्यमेवोत्तरविद्धा,॰ इति सु॰ पुस्तके पाठः।

"अह्नोऽस्तमय-वेलायां कलामात्राऽपि या तिथिः।
सैव प्रत्याब्दिके श्राद्धे नेतरा पुत्र-हानि-दा"—इति।

न चापराह्ण-वेलायामविद्यमानतया कर्म-काल-व्याप्ति-रहितायास्तिथेरनुपादेयत्वमिति शङ्कनीयम्। आपाद्यायास्तद्व्याप्तेर्विद्यमानत्वात्। अतएव वसिष्ठः,—

"पित्र्येऽस्तमय-वेलायां स्पृष्टा पूर्णा निगद्यते"—इति।

नारदीयपुराणेऽपि,—

"पारणे मरणे नृणां तिथिस्तात्कालिकी स्मृता।
पित्र्येऽस्तमय-वेलायां स्पृष्टा पूर्णा निगद्यते"—इति।

उदाहृताभ्यामस्तमय-स्पर्श-वाक्याभ्यां कलामात्र-वाक्येन च पूर्वेद्युः सायङ्काल-व्याप्तिर्विवक्षिता। परेद्युरपराह्ण-स्पर्श-हीनस्यपूर्व-दिने सायं-व्याप्तेरवश्यम्भावात्। अन्यथा षण्मुहूर्त्त-क्षय-प्रसङ्गात्। एतदेवाभिप्रेत्य गोभिलः,—

"सायाह्न-व्यापिनी या तु पार्वणे सा उदाहृता"—इति।

ईदृशे विषये पूर्व-विद्धायाः कर्त्तव्यता शिवरहस्य-ब्रह्मवैवर्त्त-सौर-नारदीय-पुराणेषु व्यतिरेक-मुखेन दर्शिता,—

"दर्शञ्च पूर्णमासञ्च * पितुः सांवत्सरं दिनम्।
पूर्व-विद्धमकुर्वाणो नरकं प्रतिपद्यते"—इति।

नन्वस्त्वेवमुभयत्रापराह्ण-स्पर्शाभावे तथाऽपराह्ण-द्वय-व्यापिन्यामुत्तरतिथि-गत-वृद्धि-क्षयाभ्यां निर्णयोऽप्यस्तु। उत्तर-तिथेः साम्ये तु

---

* पौर्णमासञ्च,—इति वि॰ पुस्तके पाठः।

किं तिथिमूलत्वात्समयव्याप्ति-गुण-द्वय-वशात् पूर्वविद्धा कर्त्तव्या, किं वा कुतप-गुण-सद्भाव-वशादुत्तर-विद्धा? तत्रापराह्ण-द्वय-स्पर्शाभाव-विषये न्यायेन पूर्व-विद्धायां प्राप्तायां देवस्वामि देवलादि*वचनादुत्तर-विद्धेति निश्चयः। वचनं हि न्यायाद्बलीयः। यदा तु दिन-द्वयेऽप्यपराह्णैक-देश-व्याप्तिस्तदाऽपि वैषम्येण तद्व्याप्तौ महत्त्वेन निर्णतव्यम्। तदाह मरीचिः,—

"द्व्यपराह्ण-व्यापिनी चेदाब्दिकस्य यदा तिथिः।
महती यत्र तद्विद्धां प्रशन्ति महर्षयः"—इति।

साम्येनोभयत्र व्याप्तिश्च तत्तिथि-गतेर्वृद्धि-क्षय-साम्यैस्त्रिधा भिद्यते। तथा हि। पूर्वेद्युरपराह्णस्य द्वितीय-घटिकामारभ्य परेद्युरपराह्णस्य चरम-घटिकां विहाय अवशिष्टासु पञ्चघटिकासु यदा तिथिः वर्त्तते, तदा† पूर्वापराह्णस्य प्रथमघटिकां द्वितीयापराह्णस्य चरमघटिकाञ्च विहायावशिष्टासु पञ्चसु घटिकासु वर्त्तमानत्वात् साम्येनैकदेश-व्याप्ति र्भवति। तिथिश्च तदा घटिका-चतुष्टयेन वर्द्धते। यदा पूर्वापराह्णस्य चरमघटिकायाम् उत्तरापराह्णस्य प्रथमघटिकायां च वर्त्तते, तदाऽपि साम्येन एकदेश-व्याप्तिर्भवति। घटिका-चतुष्टयेन तदा तिथिः क्षीयते। यदा पूर्वापराह्णस्य चरमे घटिका-त्रये द्वितीयापराह्णस्य चाद्य घटिका-त्रयेऽपि वर्त्तते, तदाऽपि साम्येनैकदेश-व्याप्तिः। तदवस्थ-तिथिस्तु न वर्द्धते नापि क्षीयते किन्तु समैव। ईदृशे विषये खर्वदर्प-वाक्यान्निर्णयः। तदेवं प्रतिपदि पार्वणरूपमाब्दिकं निर्णीतम्। पार्वणरूपस्य काम्यस्य

* देवलादि,—इति नास्ति वि० पुस्तके।
† पूर्व्वेद्युरपराह्णस्य-—इत्यारभ्य, तदा,—इत्यन्तोग्रन्थः नास्ति वि० पुस्तके।

तु दर्श-विकारत्वात् प्रातिस्विकविशेषाभावाच्च वक्ष्यमाणेन दर्श-निर्णयेनैव निर्णयोऽवगन्तव्यः।

॥०॥ इति माधवीये काल-निर्णये प्रतिपन्निर्णयाख्यं तृतीयप्रकरणम्॥ ०॥



## अथ द्वितीयामारभ्य पर्वावसानाः चतुर्दश तिथयोऽस्मिन् प्रकरणे निर्णीयन्ते।

प्रथम-द्वितीयाऽऽदीनां पञ्चदश-कलानां क्रमेण चन्द्रमण्डल-प्रवेश-निर्गमनाभ्यां शुक्ल-कृष्ण-पक्षयोः प्रतिपद्द्वितीयाऽऽदि नामधेयास्तिथयो भवन्ति। तत्र प्रतिपदि योनिर्णयः पूर्व-प्रकरणेऽभिहितः, सएवोत्तरासु सर्वासु तिथिषु सामान्येन* सञ्चारयितव्यः। विशेषतस्तु तत्र तत्राभिधास्ये। प्रतिपदि दैवं पित्र्यं व्यवस्थापितम्। दैवं षड्विधं उपवासैकभक्तनक्तायाचितदानव्रत-भेदेन। तीर्थस्नान-जप-होमादयस्तु व्रतशब्देनैव संगृहीताः। पित्र्यं द्विविधम्। एकोद्दिष्टं पार्वणञ्चेति। तत्र सर्वत्र कर्मकाल-व्याप्ति-युक्तायाएव तिथेरनुष्ठानांगत्वं स्मृतिष्वभिप्रेतम्। कर्मकालस्य द्विविधोमुख्योगौणश्चेति। तद्यथा; एकभक्ते मध्याह्नोमुख्यः, श्रामायस्त्वशिष्टः कालोगौणः। तिथि-व्याप्तिश्च द्विविधा, स्वाभाविक-तिथि-व्याप्तिः, साकल्यापादित-तिथि-व्याप्तिश्चेति। तद्यथा, यदा सङ्गवपर्य्यन्ताऽमावास्या, तदानीमुपरितनोमध्याह्नो-

* साम्येन,—इति स० पुस्तके पाठः।

मुख्ययैव प्रतिपदा व्याप्तिर्भवति। यदा त्वपराह्लादिमारभ्य तिथि-क्षय-वशात् परेद्युः सङ्गवान्ता प्रतिपद्भवति, तदा पूर्वेद्युर्गौण-काल-व्याप्तिमुपपजीव्यैकभक्तानुष्ठानाय तत्स्वीकारे सति मध्याह्नेऽवश्या-नुष्ठेयत्वात्तत्र स्वाभाविक-प्रतिपद्व्याप्त्यभावेऽपि साकल्यवचनमापादित-प्रतिपद्व्याप्तिः स्वीकृता। एवञ्च सति, कर्मकाल-व्याप्तौ सर्व-स्मृतीनाम-त्यन्त-निर्बन्ध-दर्शनात् कर्मकाल-व्याप्ति-शास्त्रमितरेभ्यः प्रबलमिति निश्चीयते। तदनुसारेण द्वितीयायामपि तिथयउपवासादौ दैवे एकोद्दिष्टादौ पित्र्ये च कर्म-काल-व्याप्ति-युक्ताः स्वीकर्त्तव्याः। उपवासस्तु सर्व-तिथिषु नारदीये दर्शितः,—

"शुक्लान् वा यदि वा कृष्णान् प्रतिपत्प्रभृतींस्तिथीन्।
उपोष्यैव बलिं दत्वा विधिना ह्यपरे दिने॥
ब्राह्मणान् भोजयित्वा तु सर्वपापैः प्रमुच्यते"—इति।

उपवासस्याहोरात्रः कर्म-कालः। तस्मात्तद्व्यापिनी तिथिर्ग्राह्या। तदसम्भवे खण्डतिथिर्ग्राह्येति निरूप्यते। तत्र च सूर्य्योदये त्रिमुहूर्त्ता ततोऽधिका वा प्रतिपद्भवति, उत्तरदिने चास्तमयादर्वाक् त्रिमुहूर्त्ता ततोऽधिका वा तृतीया भवति, सेयमुभय-विद्धा द्वितीया। तत्र वेधक तिथेरुदयेऽस्तमये वा त्रिमुहूर्त्तत्वं वेध-प्रयोजकं, न तु ततोन्यूनत्वम्। तदेव पैठीनसि-वाक्येन पूर्वमुदाहृतम्। वेध्य-तिथेस्तु त्रिमुहूर्त्त-सद्भावो ऽपेक्षितइति "त्रिमुहूर्त्तं त्रिरह्नस्य"—इत्यनेन सुमन्तु-वचनेन दर्शि-तम्। उदयास्तमययोरेव वेधः,—इत्यपरोऽयमर्थः,

"उदये सा तिथिर्ग्राह्या विपरीता तु पैतृके"—

इत्यादिभिः कात्यायन-वचनैरवगन्तव्यः। एवञ्च सति यथोदाहृते पूर्व

विद्धोत्तरविद्धे ये द्वितीये, तयोरुत्तर-विद्धा द्वितीयोपोष्या। युग्माग्नि वाक्येनान्वय-व्यतिरेकाभ्यामुत्तर-विद्धायाः प्राशस्त्याभिधानात्। यद्य-प्युपोष्यत्वं साक्षान्नाभिहितं, तथापि कर्मान्तर-विशेषस्यानुपादानात् उपवास-विषयत्वं परिशिष्यते। तथाहि। न तावत् पित्र्य-विषयत्वं सम्भवति, व्यासेन युग्मादि-शास्त्रस्य खर्वादि-शास्त्रस्य च दैव-पित्र्य-विषयत्वेन व्यवस्थापितत्वात्। नाप्येकभक्त-नक्त विषयत्वम्, तयोर्मध्याह्न-प्रदोष-व्याप्त्यधीनत्वेन युग्मादि-शास्त्रामधीनत्वात्। अयाचितस्य तूप-वासवदनुष्ठेयत्वेन न पृथग्विषयत्वम्। न च दानादि-विषयत्वम्, दानादेः पौर्वाह्णिक-तिथौ कर्त्तव्यतया निर्णीतत्वात्। अतउपवास-विषयत्वं परिशिष्यते। कदाचिदेकभक्तादि-तिथौ युग्मादिशास्त्रस्य संवादो भवति। तदा तच्छास्त्रमुपोद्बलकं भवतु, न वयं वारयामः। वचना-न्तरे तु युग्मतिथेरुपोष्यत्वं साक्षात् प्रतीयते। तथा च प्रतिपत् प्रकरणे प्रतिपदमावास्य-युग्मस्योपोष्यत्व-वचनमुदाहृतम्। अत्रापि युग्म-त्वाभिप्रायेणैव द्वितीयायाः पर-विद्धायाः उपोष्यत्वं भृगुस्मृतिविष्णुध-र्मोत्तराभ्यां दर्शितम्,—

"एकादश्यष्टमी षष्ठी द्वितीया च चतुर्दशी।
त्रयोदशी चतुर्थी च उपोष्याः स्युः परान्विताः"—इति।

यदा पूर्वेद्युरुदयमारभ्य परेद्युरुदयस्योपरि त्रिमुहूर्त्तं वर्त्तते, तदा पूर्वेद्युरेवोपवासः। न चोदाहृतेन 'परान्विताः'—इति वचनेन विरोधः शङ्कनीयः, परान्वित-पूर्वान्वितयोः प्रसक्तयोर्द्वयोः सतोरस्य वचनस्य नियामकत्वात्। न चात्र परान्वितत्वं* प्रसक्तमस्ति, पूर्वस्य दिनस्य संपूर्ण

* पूर्वान्वितत्वं,—इति वि॰ पुस्तके पाठः।

तिथित्वात् संपूर्ण-खण्डयोः संपूर्णस्यासन्देहत्वेन प्रबलत्वात्। खण्डत्वात विरोधित्व-हव्यकर्मकालव्याप्तिभ्यां पूर्वदिनस्यैव प्राबल्यम्। तस्मात् तत्रैवोपवासः। ननु, पूर्वदिनोपवासं प्रतिषेधति व्यासः,—

"तृतीयया युता कार्य्या द्वितीया न तु पूर्वया"—इति।

नैवम्। अस्य वचनस्य खण्ड-तिथि-विषयत्वेन संपूर्णतिथावप्रवृत्तेः। खण्ड-तिथि-विषयत्वञ्च, पूर्वया युता नैव कार्य्येत्यभिधानादवगम्यते। ननु, खण्डतिथावपि द्वितीया पूर्व-विद्धैवोपोष्या,—

"प्रतिपत्सद्वितीया स्याद्द्वितीया प्रतिपद्युता"—

इत्यापस्तम्बेन प्रतिपद्द्वितीययोर्युग्मत्वाभिधानात्। एतदेव वचन-मुपजीव्य कृष्णा प्रतिपत्परविद्धैवोपोष्येति पूर्वं निर्णीतम्। एवं तर्हि द्वितीयाऽपि क्वचित् पूर्वविद्धा भवतु। तदुक्तं स्कन्दपुराणे,—

"प्रतिपत्संमुखी कार्य्या या भवेदापराह्णिकी।

पूर्वाह्णिकी च कर्तव्या द्वितीया तादृशी विभो"—इति।

तादृशी सम्मुखी पूर्वयुतेत्यर्थः। पूर्वेद्युरुदये मुहूर्त्तं परित्यज्य वशिष्ट-पूर्वाह्ण-संबन्धिनी यदा भवति, तदा वेधकारिण्याः पूर्वतिथेः मुहूर्त्त-त्रयाभावेन वेद्धुमसामर्थ्यात् स्वयं खण्डाऽपि सती संपूर्णावत् पूर्वत्रोपवासे युज्यते।

अत्र द्वितीया नवधा भिद्यते। पूर्वेद्युरुदयमारभ्य प्रवृत्ता, उदयं परित्यज्य प्रवृत्ता, पूर्वाह्णं सर्वं परित्यज्य प्रवृत्तेति त्रयो भेदाः; तस्यै-कैकस्य परेद्युस्त्रिमुहूर्त्तत्व-तन्न्यूनत्व-शून्यत्वैस्त्रैविध्ये सति मिलित्वा नव विधत्वं सम्पद्यते। अत्र पूर्वेद्युरुदयमारभ्य प्रवृत्तायाः संपूर्णत्वेन परेद्यु-र्मुहूर्त्तत्रयत्व-तन्न्यूनत्व-शून्यत्वेषु त्रिष्वपि पक्षेषु विवादाविषयत्वात् पूर्वत्रै

वोपवासोयुक्तः। उदयं परित्यज्य कियत्पूर्वाह्ण-भागं प्रक्रम्य प्रवृत्तायाः परेद्युस्त्रिमुहूर्त्ततायां, सत्यपि परयुतोपवास-सम्भवे तां परित्यज्य पौर्वाह्णिकवचनेन पूर्वेद्युरेवोपवासोविधीयते। परेद्युस्त्रिमुहूर्त्तन्यूनत्वे पूर्णत्वे च वेधकारिण्यास्तृतीयायाः सत्यपि वेद्धुं सामर्थ्ये वेध्यायाद्वितीयायास्त्रिमुहूर्त्तत्वाभावेन वेधयोग्यत्वाभावात् तत्रोपवासेन प्रसक्तः। अतः परिशेषात् पूर्वाह्ण-वाक्याच्च पूर्वत्रैवोपवासः। पूर्वेद्युः पूर्वाह्णं सर्वं परित्यज्य प्रवृत्तायाः परेद्युस्त्रिमुहूर्त्ततयोभयत्र तिथिसत्त्वात् कुत्रोपवासइति सन्देहे सति व्यासेनोत्तर-दिन-विधानात् पूर्व-दिन-निषेधाच्चोत्तरत्रोपवासः। न चात्र शुक्ल-कृष्ण-व्यवस्था शङ्कनीया, युग्मवाक्ये शुक्ल-कृष्ण-पक्ष-साधारण्येन पर-दिन-विधानात् कृष्णपक्षेऽपि तत्-प्रवृत्तौ बाधाभावाच्च। अन्ययोस्तु पक्षयोः पूर्वत्रवेधानर्हत्वेन पूर्वेद्युः पौर्वाह्णिकत्वा भावेऽपि परिशेषादापस्तम्बोक्त-युग्मवाक्याच्च पूर्वत्रैवोपवासइति स्थितम्। एकभक्तादि-पार्वण-श्राद्धान्तेषु कर्मसु द्वितीया-प्रयुक्तस्य विशेषस्य क्वचिदप्यस्मरणात् पूर्वोक्त-प्रतिपन्न्यायोयोजनीयः।

इति द्वितीया-निर्णयः।



## अथ तृतीया निर्णीयते।

तत्र, त्रिविधानि वचनानि स्मर्यन्ते। कानिचित् पूर्व-विद्धा-विधायकानि, कानिचित् पूर्व-विद्धा-निषेधकानि, कानिचिदुत्तर-विद्धा-विधायकानीति। तत्र, युग्मवाक्यं तावत् पूर्व-विद्धा-विधायकं प्रसिद्धम्। पूर्व-विद्धा-निषेधकं वाक्यमाहापस्तम्बः,—

"तृतीया तु न कर्त्तव्या द्वितीयोपहिता विभो।
द्वितीयया युतां तां तु यः करोति नराधमः॥
संवत्सरकृतेनेह स तु धर्मेण लुप्यते।
द्वितीया-शेष-संयुक्तां तृतीयां कुरुते तु यः॥
स याति नरकं घोरं कालसूत्रं भयङ्करम्।
द्वितीया-शेष-संयुक्तां या करोति विमोहिता॥
सा वैधव्यमवाप्नोति प्रवदन्ति मनीषिणः"—इति।

स्कन्दपुराणेऽपि,—

"तृतीया तु न कर्त्तव्या द्वितीया-संयुता तिथिः।
या करोति विमूढा स्त्री पुरुषोवा शिखिध्वज॥
द्वितीया-संयुतां तात, पूर्व-धर्माद्विलुप्यते।
विधवात्वं दुर्भगत्वं भवेन्नास्त्यत्र संशयः॥
कला काष्ठाऽपिवा चैव द्वितीया संप्रदृश्यते।
सा तृतीया न कर्त्तव्या कर्त्तव्या गण-संयुता॥
यदीच्छेत्परमं पुण्यं व्रतकर्त्ता शिखिध्वज"—इति।

अत्र, पूर्व-विद्धायानिषेध-बाहुल्यात्सा न ग्राह्या, युग्मवाक्यन्तु रम्भा व्रत विषयं भविष्यति। रम्भाव्रतन्तु भविष्यत्पुराणे दर्शितम्,—

"भद्रे, कुरुष्व यत्नेन रम्भाख्यं व्रतमुत्तमम्।
ज्येष्ठ-शुक्ल-तृतीयायां स्नाता नियम-तत्परा"—

इत्यादि। तत्रैवापरं रम्भाव्रतं पठितम्,—

"रम्भा-तृतीयां वक्ष्यामि सर्व-पाप-प्रणाशिनीम्।
मार्गशीर्षेऽथवा मासि तृतीयायां नराधिप॥

शुक्लायां प्रातरुत्थाय दन्त-धावन-पूर्वकम्”—

इत्यादिना व्रतमभिधायोपसंहृतम्,—

“सौभाग्यार्थं पुरा चीर्णं रम्भया राजसत्तम।

तेन रम्भातृतीयेयं परं सौभाग्यदायिनी”—इति।

एतस्य रम्भाव्रतस्य पूर्वविद्धायां कर्त्तव्यत्वं स्कन्दपुराणे दर्शितम्,—

“बृहत्तपा तथा रम्भा सावित्री वटपैतृकी।

कृष्णाष्टमी च भूता च कर्तव्या सम्मुखी तिथिः”—इति।

तत्रैव पूर्व-विद्धा-निषेधो रम्भाव्रत-व्यतिरिक्त-विषयत्वेन पठ्यते,—

“द्वितीयया तु विद्धा च तृतीया न कदाचन।

कर्त्तव्या व्रतिभिस्तात, धर्मकामार्थ-तत्परैः॥

विहायैकान्तु रम्भाख्य तृतीयां पुण्यवर्द्धिनीम्”—इति।

उत्तर-विद्धा-विधायकन्तु ब्रह्मवैवर्त्ते दर्शितम्,—

“चतुर्थी-संयुता या तु सा तृतीया फल-प्रदा”—इति।

आपस्तम्बोऽपि,—

“चतुर्थी-संयुता या च सा तृतीया फल-प्रदा।

अवैधव्य-करी स्त्रीणां पुत्र सौभाग्य वर्द्धिनी”—इति।

बृहस्पतिरपि,—

“एकादश्यष्टमी षष्ठी पौर्णमासी चतुर्दशी।

आमावास्या तृतीया च ताउपोष्याः परान्विताः *”—इति।

अस्य चोत्तर-विद्धा-विधायकस्य रम्भा-व्यतिरिक्त-विषयत्वं ब्रह्मवैवर्त्ते दर्शितम्,—

* उपोष्याः स्युः परान्विताः,—इति वि॰ पुस्तके पाठः।

"रम्भाख्यां वर्जयित्वा तु तृतीयां द्विजसत्तम।
अन्येषु सर्वकार्य्येषु गणयुक्ता प्रशस्यते"—इति।

केचित्तु सर्वव्रतेषु पूर्वविद्धैव। तदाह वशिष्ठः,—

"एकादशी तृतीया च षष्ठी चैव त्रयोदशी।
पूर्व-विद्धा तु कर्त्तव्या यदि न स्यात् परेऽहनि"—इति।

अथ, परेऽहन्यसत्वन्त्रेधा भिद्यते। सर्वथैवासत्त्वं, द्विमुहूर्त्तासत्त्वं, त्रिमुहूर्त्तासत्त्वञ्चेति। सर्वथैवासत्त्वे पूर्व्वदिनानुष्ठानमस्तु। यदा तु परेऽहनि घटिकात्रयं घटिकापञ्चकं वा स्थिता भवति, तदा कथं अस्त्विति महान्सन्देहः। त्रिमुहूर्त्तसद्भावस्य मुख्यकल्पत्वात् पञ्चघटिकापक्षे मुख्यासम्भवः। द्विमुहूर्त्तसद्भावस्यानुकल्पत्वात् घटिकात्रयपक्षे तस्याप्यसम्भवः। तदा किं मुख्यानुकल्पयोरभावात् पूर्वेद्युरनुष्ठानं, किं वा पूर्वविद्धाया निषेधबाहुल्यादपरेऽहनि अल्पमपि सत्त्वमाश्रित्यानुष्ठानम्। न चात्र किञ्चिन्नियामकं वचनमस्ति। नापि न्यायेन निर्णेतुं शक्यते। न तावत् परदिनं न्याय्यम्, प्रापकाभावात्। नापि मुख्यानुकल्प-व्यतिरिक्तं कल्पान्तरं सम्भवति, येन प्रापकमाशङ्क्येत। नापि पूर्वदिनं न्याय्यम्, निषेध-बाहुल्यात्। वशिष्ठवचनोक्त-प्रतिप्रसवेन निषेधोबाध्यतइति चेत्, नैवम्। तस्य वचनस्य परेद्युरत्यन्तासत्त्वेऽप्युपपन्नत्वात्। तस्मादागमन्याययोरत्राप्रवृत्तेरयोगिनोऽसर्वज्ञस्य धर्म-तत्त्व-साक्षात्कारासम्भवात् शिष्टाचारएवात्र शरणम्। अतएव व्यासः,—

तर्कोऽप्रतिष्ठः श्रुतयोविभिन्ना
न चानृषेर्दर्शनमस्ति किञ्चित्।
धर्मस्य तत्त्वं निहितं गुहायां

महाजनो येन गतः स पन्थाः"—इति।

शिष्टाश्च मुहूर्त्तमात्र-सद्भावमाश्रित्य गौरीव्रतं परेद्युरेवानुतिष्ठन्ति। अतो गौरीव्रतं परेद्युरेवानुष्ठेयम्। अन्येषु भविष्यत्पुराणाद्युक्तेषु विघ्नेश-पूजादिषु मुख्यकल्पेनानुकल्पेन वा परेद्युरनुष्ठानम्। तद्विषयाश्च पूर्व-विद्धा-निषेधाः। कल्पद्वयासत्त्वे तु * विद्यमानायामपि परेद्युः स्वल्पाया-मपि तृतीयायां तां परित्यज्य वसिष्ठवचनेन पूर्वेद्युरनुष्ठानम्। एक भक्त-नक्ते तु व्रताङ्गे व्रतानुसारेणानुष्ठेये। स्वतन्त्रयोस्तु मध्याह्न-प्रदोष-व्याप्ति-वशेनानुष्ठानम्। रम्भाव्रतेऽप्यस्तमयादर्वाक् तृतीयायास्त्रिमुहूर्त्त सद्भावे तस्यामेव पूर्वविद्धायामनुष्ठानं, तद्विधायक-वाक्येषु संमुखीत्य-भिधानात् साम्मुख्यस्य च सायाह्न-व्याप्ति-रूपत्वात्। मुहूर्त्तत्रय-न्यूनत्वे सति पूर्व-विद्धायाः प्रापकाभावाद्रम्भाव्रते परविद्धाया अनिषिद्धत्वाच्च सामान्यवचनैः परविद्धा-प्रसंजकैः परेद्युरनुष्ठानम्। यानि द्वितीया-विद्धायानिषेधकानि वाक्यानि, तेषु द्वितीया कियती विवक्षितेति चेत्। मुहूर्त्त-त्रय-परिमितेति ब्रूमः। वेधशास्त्रे तथाऽभिधानात्। यत्तु 'कला काष्ठाऽपि' इति वचनं, तत्कैमुतिकन्यायेन त्रिमुहूर्त्त-सत्त्वं द्रढयति।

इति तृतीयानिर्णयः।



* कल्पद्वयासत्त्वन्तु,—इति वि० पुस्तके पाठः।

# अथ चतुर्थी निर्णीयते।

सा च युग्मवाक्यात् पर-विद्धा पूज्या। न च शुक्लपक्षे तथात्वेऽपि कृष्णपक्षे पूर्वैव स्यादिति शङ्कनीयम्, युग्मवाक्यस्य पक्ष-द्वय-साधारणत्वात्। "चतुर्द्दश्या च पूर्णिमा" इत्येतच्छुक्ल-पक्ष-विषयत्वे लिङ्गमिति चेत्। न, तस्यैकस्य युग्मस्य शुक्लपक्ष-विषयत्वेऽपि द्वितीयादिकानां युग्मानां पक्ष-द्वय-साधारण्यस्य वारयितुमशक्यत्वात्। साहचर्य्यात्तान्यपि शुक्ल-पक्ष-विषयाण्येवेति चेत्। न। "प्रतिपद्यप्यमावास्या"-इत्यनेन पक्ष-द्वय-स्पर्शिना युग्मेन साहचर्य्यादितरेषामपि पक्ष-द्वय-स्पर्शित्वं किं न स्यात्। एवं तर्हि साहचर्य्ययोर्द्वयोरपि परस्पर-कलहादनिर्णय इति चेत्। न, कारणान्तरेण निर्णेतव्यत्वात्।

तर्हि चतुर्द्दशी-पूर्णिमा-युग्ममेकपक्ष-वर्त्ति-तिथि-द्वयात्मकत्वात् द्वितीयादिक-युग्मैः सदृशं, प्रतिपदमावास्या-युग्मन्तु भिन्न-पक्ष-द्वय-वर्त्ति-तिथि-द्वय-रूपत्वाद्विलक्षणम्, अतः पूर्णिमा-युग्म-साहचर्य्येणैव निर्णय इति चेन्नैवम्। श्रुत्या साहचर्य्यस्य बाध्यमानत्वात्। द्वितीयादिशब्दो मुख्यया वृत्त्या पक्ष-द्वय-वर्त्तिनस्तिथीन् ब्रूते। सेयं श्रुतिर्लिङ्गादिषु षट्सु प्रथमं प्रमाणं, साहचर्य्यन्तु सन्निधिः। स च स्थानावान्तरभेदत्वात् पञ्चमं प्रमाणम्। तच्च प्रथमादत्यन्तदुर्बलम्। सोऽयमर्थः पूर्वमीमांसायां तृतीयेऽध्याये श्रुतिलिङ्गादि-सूत्रे महता प्रबन्धेन प्रपञ्चितः। सूत्रञ्चैतत् "श्रुति-लिङ्ग-वाक्य-प्रकरण-स्थान-समाख्यानां समवाये पारदौर्बल्यमर्थ-विप्रकर्षात्"—इति। इममेवच श्रुति-सान्निध्ययोर्विरोधमुद्दिश्योत्तर-मीमांसायां गुणोपसंहारे विचारितम्।

तथाहि। ताण्डिशाखायां श्रूयते। "ॐमित्येतदक्षरमुद्गीथमुपासीत"—इति। अस्यायमर्थः। पञ्च-भक्ति-युक्तस्य साम्नउद्गीथाख्या भक्तिः कश्चिदवयवः, तं चावयवमुद्गाता यागकाले गायति। गीयमानन्तमुद्गीथं सएवोद्गाता ताण्डिशाखागतोपनिषद्विहितैरनेकैर्गुणैरुपासीतेति। ते च गुणास्ताण्डिशाखायामेव विहिताः। उद्गीथभक्तिस्तु ताण्डि-शार्दूल-जैमिनीय-तलवकारादिषु सर्वासु सामशाखासु पठिता। तत्र, यदिदन्ताण्डिशाखोक्त-गुणमुपासनं, तत् किं ताण्डिशाखा-गतएवोद्गीथविशेषे व्यवतिष्ठते, किं वा सर्वशाखा-गतउद्गीथसामान्ये सञ्चरतीति संशयः। तत्र, सन्निधि-वशादुद्गीथ-विशेषे व्यवतिष्ठते,—इति पूर्वः पक्षः। उद्गीथ-शब्दोमुख्यया वृत्त्योद्गीथ-सामान्यं ब्रूते। न च सन्निधिना पञ्चम-प्रमाणेन प्रथम-प्रमाणस्य श्रुतेः सङ्कोचोयुक्तः। तस्मादुपासनमुद्गीथ-सामान्ये सञ्चरतीति राद्धान्तः।

अनेन न्यायेन प्रकृतेऽपि साहचर्य्याख्येन सन्निधिना द्वितीयादि-श्रुतेः सङ्कोचायोगाद्युग्मादि-शास्त्रं पक्ष-द्वय-विषयं द्रष्टव्यम्। यदि च चतुर्द्दशीपूर्णिमयोः कृष्ण-पक्ष-विषयत्वं न सम्भाव्यते, तर्हि तत्रैकत्र शुक्ल-पक्षविषयत्वमस्तु। तथा, दर्श-प्रतिपद्युग्ममपि गत्यन्तराभावात् पक्ष-द्वयसन्धि-विषयम्। एवं व्यवस्थितौ सत्यां युग्म-शास्त्रेण पक्ष-द्वयेऽपि चतुर्थी परविद्धैव प्राप्नोति।

ननु, वचनान्तरेण चतुर्थी-द्वयस्य व्यवस्था प्रतीयते। तथा च मार्कण्डेयपुराणे*,—

---

* मार्कण्डेयः,—इति क० वि० पुस्तकयोः पाठः।

"शुक्लपक्षे तिथिर्ग्राह्या यस्यामभ्युदितो रविः।

कृष्णपक्षे तिथिर्ग्राह्या यस्यामस्तमितो रविः"—इति।

अत्र वक्तव्यं, किमिदं शुक्लादि-वाक्यं युग्मादि-शास्त्र-नियमन-द्वारा एकवाक्यतया तिथीनां व्यवस्थापकं, उत स्वातन्त्र्येण ? यदि नियम द्वारा, तर्हि* युग्माग्नीत्यादि-युग्मे पूर्व-तिथीनामुत्तर-विद्धानां पूज्यत्वेन

"शुक्ल-पक्षे तिथिर्ग्राह्या यस्यामभ्युदितो रविः"—

इत्येतत् पूर्वार्द्धमविरोधि, उत्तरार्द्धन्तु विरोधि। तथा, तेष्वेव युग्मेषु चरम-तिथीनां पूर्व-विद्धानां पूज्यत्वेन,—

"कृष्ण-पक्षे तिथिर्ग्राह्या यस्यामस्तमितो रविः"—

इत्युत्तरार्द्धमविरोधि, पूर्वार्द्धन्तु विरोधि। तथा, दर्शप्रतिपद्-युग्मेऽपि कृष्णपक्ष-गतस्य दर्शस्योदये पूज्यत्वं, शुक्लपक्ष-गतायाः प्रतिपदोऽस्तमये पूज्यत्वम्†। तथा सति, तत्रोभयत्र विरोधः स्फुटतरः। तस्मान्न युग्मादि-शास्त्रमनेन नियन्तुं शक्यम्। नापि स्वातन्त्र्येण तिथीनां व्यवस्थापकम्। तत्र युग्मादि-शास्त्रादि-विरोधस्यापरिहार्य्यत्वात्। अविरोधेन तु शुक्लादि-वाक्यस्य दशमी-विषयत्वं प्रतिपत्प्रकरणे प्रसङ्गादुदाहृतम्। तस्माच्छुक्ल-कृष्णयोरुभयोरपि पक्षयोर्युग्मादि-शास्त्राच्चतुर्थी पर-विद्धा ग्राह्या। वृद्धवसिष्ठोऽपि,—

"एकादशी तथा षष्ठी अमावास्या चतुर्थिका।

उपोष्याः पर-संयुक्ताः पराः पूर्वेण संयुताः"—इति।

ननु, पर-विद्धोपवासः क्वचित् प्रतिषिध्यते ;

---

* न तावन्नियमद्वारा,—इति क० वि० पुस्तकयोः पाठः।

† 'तथा'—इत्यारभ्य, 'पूज्यत्वं'—इत्यन्तो ग्रन्थः मु० पुस्तके नास्ति।

"द्वितीया पञ्चमी वेधादष्टमी च त्रयोदशी ।

चतुर्द्दशी चोपवासे हन्युः पूर्वोत्तरे तिथी"—इति ।

अयमर्थः । पञ्चमी वेधेन पूर्वां चतुर्थीं तिथिमुत्तराञ्च षष्ठीं तिथिमुपवास-विषये हन्ति । अतः, पञ्चमी-विद्धायां चतुर्थ्यां नोपवास इति । नैष दोषः । व्रत-भेदेन व्यवस्थोपपत्तेः । सन्ति हि चतुर्थ्यां भिन्न-देवता-विषयाणि बहूनि व्रतानि । तत्र, विष्णुधर्मोत्तर-प्रोक्ते चतुर्मूर्त्ति-व्रते मूर्त्ति-चतुष्टयोपेतोविष्णुर्देवता । स्कन्दपुराणोक्ते अङ्गारक-चतुर्थी-व्रते भौमोदेवता । कूर्मपुराणोक्ते यम-व्रते यमोदेवता । सौरपुराणादि-प्रोक्तेषु दूर्वागणपत्यादि* व्रतेषु विनायकोदेवता । कूर्मपुराण-प्रोक्ते नाग-चतुर्थी-व्रते शेष-शङ्खपालादयः सर्पादेवताः ।

तत्र, विनायक-नाग-व्यतिरिक्तानां व्रते परेद्युरुपवासः । विनायक-नागयोस्तु व्रते मध्याह्नव्याप्त्या निर्णेतव्यत्वात् कदाचित् पूर्वेद्युरुपवासः प्राप्नोति† । तादृशे विषये पञ्चमी-वेध-निषेधोव्यवस्थापनीयः । तथा, पूर्व-विद्धा-प्रशंसा च तस्मिन्नेव विषये द्रष्टव्या । अतएव ब्रह्मवैवर्त्ते पूर्वोत्तर-विद्धयोर्विधिनिषेधौ स्मर्य्येते,—

"चतुर्थी-संयुता कार्य्या तृतीया च चतुर्थिका ।

तृतीयया युता नैव पञ्चम्या कारयेत् क्वचित्"—इति ।

तथा, तत्रैव पूर्व-विद्धा प्रशस्यते,—

"चतुर्थी-संयुता या च सा तृतीया फल-प्रदा ।

---

* दुर्गागणपत्यादि,—इति क० वि० पुस्तकयोः पाठः ।

† तत्र विनायक नागव्यतिरिक्तानां व्रते परेद्युरुपवासः प्राप्नोति,—इति मु० पुस्तके पाठः ।

चतुर्थी तु तृतीयायां महापुण्य-फल-प्रदा"—इति।

तस्याश्च विनायक-व्रत-विषयत्वं तत्रैव सूचितम्,—

"कर्त्तव्या व्रतिभिर्वत्स, गणनाथ-सुतोषणी"—इति।

स्कन्दपुराणेऽपि,—

"विनायक-व्रते कार्य्या सर्वमासेषु षण्मुख।

चतुर्थी तु जया-युक्ता गणनाथ-सुतोषिणी"—इति।

विनायक-व्रतानुष्ठाने चतुर्थ्यामध्याह्न-व्यापित्वं मुख्यं प्रयोजकम्।

तदाह बृहस्पतिः,—

"चतुर्थी गणनाथस्य मातृ-विद्धा प्रशस्यते।

मध्याह्न-व्यापिनी चेत्स्यात् * परतश्चेत् परेऽहनि"—इति।

यदा पूर्वेद्युर्मध्याह्न-व्यापिनी तिथिर्भवति, तदा मुख्य-प्रयोजकस्य विद्यमानत्वान्मातृ-विद्धत्व-गुण-सद्भावाच्च सा ग्राह्या। तादृशे विषये परेद्युः सत्यामपि मध्याह्न-व्यापिन्यां सा त्याज्या। अतएव, प्रशस्यते,—इत्युक्तम्। परेद्युरेव यदा मध्याह्न-व्यापिनी, तदा मातृ-विद्धत्व-गुणाभावेऽपि प्रधान-प्रयोजकानुसारेण पर-विद्धैव ग्राह्या। तथा च स्मृत्यन्तरम्,—

"मातृ-विद्धा प्रशस्ता स्याच्चतुर्थी गणनायके।

मध्याह्ने परतश्चेत्स्यान्नाग-विद्धा † प्रशस्यते"—इति।

ननु, बहुषु वचनेषु पूर्व-विद्धायागणनाथ-सन्तोष-हेतुत्वमुक्तम्, अतः पूर्व-विद्धत्वस्यैव मुख्य-प्रयोजकता युक्ता। नैवम्। मध्याह्न-व्यापित्वस्य‡

---

* चेत् सा,—इति वि॰ पुस्तके पाठः।

† परतश्चेत् सा नागविद्धा,—इति वि॰ पुस्तके पाठः।

‡ मध्याह्नव्यापित्वस्यैव, —इति मु॰ पुस्तके पाठः।

वैयर्थ्य-प्रसङ्गात् । अवश्यं हि तदा मध्याह्न-व्यापित्वं प्रसङ्गाद्भवति। अतस्तद्विधानं व्यर्थं व्यावर्त्याभावात् ।

अथोच्येत,—पक्षान्तरेऽप्यनेकवचन-विहितस्य पूर्व-विद्धत्वस्य वैयर्थ्यं तदवस्थम्, मध्याह्न-व्यापित्वेनैव तन्निर्णयात्,—इति । तन्न । यदा तिथि-क्षय-वशादुभयत्र मध्याह्न-व्याप्तिर्नास्ति, यदा चोभयत्र कृत्स्न-मध्याह्न-व्यापित्वं तदेकदेश-व्यापित्वं वा समानं, तत्र सर्वत्र मध्याह्न-व्याप्त्या निर्णयाभावे सति पूर्व-विद्धत्वेनैव निर्णेतव्यत्वात् । एवं तर्हि, "सावकाश-निरवकाशयोर्निरवकाशं बलीयः"—इति न्यायेन मध्याह्न-व्यापित्वस्य निरवकाशतया प्राबल्यमित्येव वक्तव्यं न तु मुख्यतयेति चेत् । न, मुख्यत्वस्यापि सम्भवात् । तिथि-निर्णये कर्म-काल-व्याप्ति-शास्त्रस्य मुख्यत्वमस्य प्रकरणस्य प्रारम्भे दर्शितम् । कर्म-कालश्च विनायक-व्रतस्य मध्याह्नः,

"प्रातः शुक्ल-तिलैः स्नात्वा मध्याह्ने पूजयेन्नृप"—

इति तत्-कल्पे विधानात् ।अतोमुख्यत्वादपि मध्याह्न-व्यापित्वं प्रबल-मिति । ननु, कस्याञ्चित् स्मृतौ पूर्व-विद्धत्वेन मध्याह्न-व्यापित्व-बाध उपलभ्यते,

"जया च यदि संपूर्णा चतुर्थी ह्रसते यदि ।

जया सैव हि कर्त्तव्या नाग-विद्धां न कारयेत्"—

इति स्मरणात् । मैवम् । अस्य वचनस्य दिन-द्वये मध्याह्न-स्पर्शा-भाव-विषयत्वेनाप्युपपत्तेः । तथा हि । पूर्व-दिने विनायक-व्रत-प्रयोजके मध्याह्ने जया संपूर्णा परेद्युर्मुहूर्त्त-त्रय-क्षय-वशान्मध्याह्नादर्वागेव चतुर्थी समाप्ता, तदा दिन-द्वये कर्म-काले ग्राह्य-तिथेश्चतुर्थ्या अभावा-

द्विनायकत्वे किं दिनमुपादेयमिति वीक्षायां*, पूर्व-दिनं विधाय परदिनं निषेधति।

अपि च,—"चतुर्थी च यदि संपूर्णा"—इत्यनेन कर्म-काल-व्याप्ति-समाप्तिः† पर्यन्तत्वं न विवक्षितम्, किं तर्ह्यस्तमय-पर्यन्तत्वम्,—इति। तर्हि, पूर्व-विद्धैव नास्ति, वेधिकायाः पूर्वतिथेः सति ‡ .याम्त्तुर्थ्याअनवकाशत्वात्। अथ, मा भूत्पूर्वत्वं, तथापि मध्याह्न-व्यापिन्यां जयायां विहितायां परेद्युर्मध्याह्न-व्यापित्वं वा,—इति चेत्। मैवम्। न खलूत्तरस्य दिनस्य हेयत्वे मध्याह्न-व्यापित्वं कारणतयोपन्यस्यते, किन्तु नाग-विद्धत्वम्। अतो नाग-विद्धत्व-निन्दायां वचनस्य तात्पर्य्यं न चतुर्थी-रहित-जया-विधाने। अन्यथा, चतुर्थी-निन्दायामपि तात्पर्य्यं प्रसज्येत। न च तद्-युक्तम्। न हि, वर-घाताय कन्यामुद्वाहयन्ति!

वचन-च्छाया तु नाग-विद्धा-हेयत्वे कैमुतिक-न्याय-परा लक्ष्यते§ 'यदि' शब्द-प्रयोगात्। यद्यपि जया संपूर्णा, तथापि नागविद्धा हेया। किमुत जया-युक्तायां चतुर्थ्यां मध्यवर्त्यामिति हि वचनव्यक्तिः। मध्याह्न-व्याप्तावियती भक्तिः कुतस्तवेति चेत्। चतुर्थीरहितायां शुद्ध-तृतीयायां तवापि कुतोभक्तिरिति समानः पर्य्यनुयोगः। वचन-बला-दित्युत्तरमस्माकमपि। वचनयोः परस्पर-कलहे पूर्वोक्ताभ्यां मुख्यत्व-नि-

* वीप्सायां,—इति वि० पुस्तके पाठः।

† व्याप्ति,—इति वि० पुस्तके पाठः।

‡ अवकाशाभावात्,—इति वि० पुस्तके पाठः।

§ वचनच्छायायातु नागविद्धाहेयत्वेकैमुतिकन्यायेन परा लक्ष्यते,—इति क० वि० पुस्तकयोः पाठः।

गिरवकाशत्वाभ्यां मध्याह्न-व्यापित्व-वचनमेवातिप्रबलं विद्धि। वि
व्रते तस्य प्रतिपदोक्तत्वादपि प्रबलत्वम्। जया-वचनन्तु गौर्या
चरितार्थम्। तच्च व्रतं भविष्यत्पुराणेऽभिहितम्,—

"विनायकं समभ्यर्च्य चतुर्थ्यां यदुनन्दन।
सर्व-विघ्न-विनिर्मुक्तः कार्य्य-सिद्धिमवाप्नुयात्"॥

इत्यभिधायानन्तरमिदं पठ्यते,—

"निद्रां रतिं शिवां भद्रां कीर्त्तिं मेधां सरस्वतीम्।
प्रज्ञां तुष्टिं तथा कान्तिं तत्रैवाहनि पूजयेत्॥
विद्याकामोविशेषेण पूजयेच्च सरस्वतीम्"—इति।

लिङ्गपुराणेऽपि,—

"चतुर्थ्यान्तु गणेशस्य गौर्य्याश्चैव विधानतः।
पूजां कृत्वा लभेत् सिद्धिं सौभाग्यञ्च नरः क्रमात्"—इति।

नारदीयपुराणेऽपि,—

"माघ-शुक्ल-चतुर्थ्यान्तु गौरीमाराधयेद्बुधः।
चतुर्थी वरदा नाम गौरी तत्र सुपूजिता"—इति।

अतोयथोक्त-रीत्या विनायक-व्रते मध्याह्न-व्यापित्वेनैव निर्णयः।
गौरी-व्रते तु जया-वचनं द्रष्टव्यम्।

तत्र, यदा दिन-द्वयेऽपि वैषम्येण मध्याह्नैकदेश-व्यापिनी, तदा
पूर्वदिने तन्महत्त्वञ्चेत् तदेवोपादेयम्। उत्तरदिने तन्महत्त्वे किं
महत्वगुणेन तदुपादेयं, किं वा मातृ-विद्धत्व-गुणेन पूर्व-मुपादेयमिति

---

* वचनमेवाति प्रबलं सिद्धिविनायक,—इति मु॰ पुस्तके, वचनमेवाति
प्रबलं मुद्धाविनायक,—इति वि॰ पुस्तके पाठः।

संशये, पूर्वमिति ब्रूमः। परस्य नाग-विद्धत्व-दोषोपेतत्वात्। पूर्वस्य च तदभावत्वात्। एतदेवाभिप्रेत्य स्कन्दपुराणे पठ्यते,—

"ज्यैष्ठे* च वट-सावित्री तथाऽनङ्ग-त्रयोदशी।
विनायक-चतुर्थी च कर्त्तव्या संमुखी तिथिः"—इति।

विनायक-व्रतवन्नाग-व्रतेऽपि चतुर्थी मध्याह्न-व्यापिनी ग्राह्या। नाग-व्रतञ्च कूर्मपुराणे दर्शितम्,—

"तिथौ युगाङ्कयायाञ्च समुपोष्य यथाविधि।
शङ्खपालादि-नागानां शेषस्य च महात्मनः॥
पूजा कार्य्या पुष्प-गन्ध-क्षीराप्यायन-पूर्वकम्।
विषाणि तस्य नश्यन्ति न च तान् घ्नन्ति पन्नगाः"—इति।

चतुर्थी। मध्याह्न-व्यापित्वञ्च देवलेनोक्तम्†,—

"युगे मध्यन्दिने यत्र तत्रोपोष्य फणीश्वरान्।
क्षीरेणाप्याय्य पञ्चम्यां पूजयेत् प्रयतोनरः॥
विषाणि तस्य नश्यन्ति न तान् हिंसन्ति पन्नगाः"—इति।

युगं चतुर्थी। विनायकचतुर्थी-नागचतुर्थ्योरियान् विशेषः;— एकभक्त-न्यायेन मध्याह्न-व्याप्तेः षोढा भेदे सति, यदा परेद्युरेव मध्याह्न-व्याप्तिस्तदा विनायक-चतुर्थी परा। इतरेषु तु पञ्चसु भेदेषु जया-योगस्य प्रशस्तत्वात् पूर्वेद्युरेव सा भवति। यदा तु पूर्वेद्युरेव मध्याह्न-व्यापिनी, तदा नाग-चतुर्थी पूर्वा। इतरेषु तु पञ्चसु भेदेषु पञ्चमी-योगस्य प्रशस्तत्वात् उत्तरा भवति। तत्प्राशस्त्यञ्च,—

* ज्येष्ठा,—इति मु० पुस्तके पाठः।

† पुराणान्तरेपि,—इति का० वि० पुस्तकयोः पाठः।

"चतुर्थी पञ्चमी-युक्ता नाग-प्रीति-विवर्द्धिनी।

प्रीताः स्युः पूजितास्तस्यां नागांस्तांस्तच पूजयेत्"—

इति वचनादवसीयते।

इति चतुर्थी-निर्णयः।

## अथ पञ्चमी निर्णीयते।

युग्म-शास्त्रेण पञ्चमी पूर्व-विद्धा ग्राह्या। ननु,

"प्रायः प्रान्तउपोष्या हि तिथिर्दैवफलेप्सुभिः,—इति

शिवरहस्य-सौरपुराणयोस्तिथ्यन्तभागस्योपवासाङ्गत्वाभिधानात् पञ्चम्युपवासः परेद्युः प्राप्नोति। तन्न। हारीतेन पर-विद्धायाः प्रतिषिद्धत्वात्,

"चतुर्थी-संयुता कार्य्या पञ्चमी परया न तु।

दैवे कर्मणि पित्र्ये च शुक्लपक्षे तथाऽसिते"—इति।

न चैतावता प्रायः प्रांतइति वचनस्य निर्विषयत्वं शङ्कनीयम्। निर्णीतासु निर्णेयमाणासु च तिथिषु यत्र यत्र परविद्धोपवासः शास्त्रान्तरेण प्राप्नस्तस्य सर्वस्य तद्विषयत्वोपपत्तेः। न च तेनैव* शास्त्रेण तदुपवास-सिद्धेः कृतमनेन वचनेनेति शङ्कनीयम्। सामान्य-विशेष-रूपेण शास्त्र-द्वयस्यापि चरितार्थत्वात्। तस्य च सामान्य-शास्त्र-रूपस्य प्रान्तोपवास-वचनस्य विरोधिना षष्ठी-युक्त-पञ्चमी-निषेधकेन विशेष-शास्त्र-रूपेण हारीत-वचनेन बाधो युज्यते। एतादृशं बाधमभिलक्ष्यैव "प्रायः प्रान्तउपोष्या"—इति प्रायः-शब्दः प्रयुक्तः।

* तेन तेन, इति खि॰ पुस्तके पाठः।

प्रतिपन्न्यायेन 'पौर्वाह्णिकाः'—इतिवचन-बलात् पञ्चम्यामपि दान-व्रतयोः परदिनानुष्ठान-प्राप्तौ तद्व्यावृत्तये हारीत-वचने 'दैवे कर्मणि'—इत्युच्यते। न च, दैव-कर्मणि पूर्वाह्णस्य कर्म-कालत्वात् कर्म-काल-शास्त्र-प्राबल्यस्य च वर्णितत्वात् तदाधीन युक्तइति शङ्कनीयम्। विधेर्निषे-धस्य वा प्रतिपदोक्तस्य प्रबलतरत्वात्। न च पूर्व-दिनपूर्वाह्णस्यात्यन्ताम-कर्म-कालत्वं *, साकल्य-वचनापादित-कर्मकालत्वस्य सद्भावात्। ईदृ-शमेव विषयमभिलक्ष्य साकल्य-वचनस्य प्रवृत्तत्वात्। स्वाभाविक-तिथि-व्याप्ति-युक्ते विषये साकल्य-वचनस्य निरर्थकत्वात्। तस्माद्दैव-कर्मणि पर-विद्धायाः पंचम्याः निषेधोन विरुध्यते। नन्वेवमपि पित्र्ये-तन्निषेधो †, निरर्थकः। पित्र्यस्य स्वतएव पर-विद्धायामप्राप्तत्वात्। मैवम्। दृष्टान्ततयाऽपि तदुपन्यासोपपत्तेः। यथा पित्र्ये कर्मणि उत्तर-विद्धा न ग्राह्या, तथा दैवेऽपीति विवक्षया दैव-पित्र्ययोः सहोपन्यासः। ननु, व्यास-निगम-गतं युग्म-शास्त्रमुदाहृत्य भवता पञ्चम्याः पूर्व-विद्धत्वमभिधीयते। आपस्तम्बादयस्तु तद्विपर्य्ययेण युग्मा-न्युदाजह्रुः,

"प्रतिपत्सद्वितीया स्याद्द्वितीया प्रतिपद्युता।
चतुर्थी सहिता या च सा तृतीया फल-प्रदा॥
पञ्चमी च प्रकर्त्तव्या षष्ठ्या युक्ता च नारद"—इति।

अतएवैतद्युग्म-शास्त्र-पर्य्यालोचने पञ्चम्याः पर-विद्धत्वं प्राप्नोति।

---

* पूर्व्वाह्णस्य नात्यन्तकर्म्मकालत्वं,—इति पाठान्तरम्।

† पित्र्य इति निषेधो.—इति वि॰ पुस्तके, पित्र्य निषेधो.—इति मु॰ पुस्तके पाठः।

बाढम्। अतएवात्र शुक्ल-कृष्ण-शास्त्रेण व्यवस्था प्रसक्ता, तां व्यवस्थां निषेद्धुं हारीतेन 'शुक्लपक्षे तथाऽसिते'—इत्युक्तम्। न च सा व्यवस्था वचनेन निषेद्धुमशक्या, "किं हि वचनं न कुर्य्यान्नास्ति वचनस्यातिभारः"—इति न्यायात्। तस्माद्धारीत-वचनेन पञ्चमी पूर्व-विद्धा ग्राह्या। स्कन्दपुराणेऽपि,—

"पञ्चमी च तथा कार्य्या चतुर्थ्या संयुता विभो"—इति।

तथा, पद्मपुराण-भविष्यत्पुराणयोः पूर्वोत्तर-विद्धा-विषयौ विधि-निषेधौ स्मर्य्येते,—

"पञ्चमी तु चतुर्थ्या तु कार्य्या षष्ठ्या न संयुता"—इति।

यत् तु ब्रह्मवैवर्त्तेऽभिहितम्,—

"पञ्चमी तु प्रकर्त्तव्या षष्ठ्या युक्ता तु नारद"—इति।

तद्वचनं स्कन्दोपवास-विषयतया सङ्कोचनीयम्। वाक्य-शेषे तथा ऽभिधानात्।

"स्कन्दोपवासे स्वीकार्य्या पञ्चमी पर-संयुता"—इति हि वाक्यशेषः। न चासञ्जात-विरोधिनोवाक्योपक्रमस्य सञ्जात-विरोधिना वाक्य-शेषेण कथं सङ्कोचइति शङ्कनीयम्। असन्दिग्धोपक्रमस्य प्राबल्येऽपि सन्दिग्धोपक्रमस्य वाक्य-शेषेण निर्णेतव्यत्वात्। अतएव जैमिनिनाऽपि सूत्रितम्,—"सन्दिग्धेषु * वाक्य-शेषात् (मी० १अ० ४पा० २९सू०)" इति। अतः, स्कन्दोपवासे पञ्चमी पर-विद्धा, अन्यत्र पूर्व-विद्धेति स्थितम्।

इति पञ्चमीनिर्णयः।

---

* सन्दिग्धे तु,—इत्यादर्श पुस्तकेषु पाठः।

## अथ षष्ठी निर्णीयते।

सा च युग्म-शास्त्र-द्वयेन द्विविधा प्रतिभाति। तत्र, 'षण्मुन्योः'—इत्येकं युग्मशास्त्रम्। तेन षष्ठ्याः सप्तमी-विद्धत्वं प्रतीयते।

"पञ्चमी तु प्रकर्त्तव्या षष्ठ्या युक्ता तु नारद"—

इत्यपरं युग्म-शास्त्रम्। तेन षष्ठ्याः पञ्चमी-विद्धत्वं प्रतीयते। तयोः शास्त्रयोः किं शुक्ल-कृष्ण-भेदेन व्यवस्था कार्य्या, किं वा दैव-पित्र्य-भेदेन, उत स्कन्दव्रतान्य-व्रत-भेदेन? तत्र, न तावत्प्रथमः कल्पः, सुमन्तुना पक्ष-द्वय-व्यवस्थां निराकृत्य दैव-पित्र्य-भेदेन व्यवस्थापितत्वात्। तथा च तद्वचनम्,—

"नाग-विद्धा न षष्ठी स्यात् पक्षयोरुभयोरपि।
दैवे कर्मणि तामन्यां पित्र्ये पूर्वेण संयुताम्"—इति।

नापि द्वितीयः, दैवे-पित्र्य-भेदेन व्यवस्थायाअयुक्तत्वात्। तथा हि। यदेतत्सुमन्तुना दैवे कर्मणि शुक्ल-कृष्ण-पक्ष-द्वय-गतायाः षष्ठ्यानाग-विद्धत्वं प्रतिषिध्यते, तत्तथाऽस्तु। यत्तु नाग-विद्धायाः पित्र्ये व्यवस्थापनं, तत्र वक्तव्यम्; किं पूर्व-विद्धत्वमेकोद्दिष्ट-विषयं, किं वा पार्वण-विषयम्? नोभयमप्युपपद्यते। मध्याह्नापराह्ण-व्याप्तिभ्यामेव द्वयोर्निर्णये सति पूर्व-विद्धतायाअकिञ्चित्करत्वात्। नचैवं मन्तव्यं, परेद्युः सत्यामपि मध्याह्ना-पराह्ण-व्याप्तौ तत्परित्यागाय पूर्व-विद्धत्व-विधानम्,—इति। मुख्य-कर्म-काल-व्याप्तेः परित्यागायोगात्। अन्यथा, "मूषक भिया स्व-गृहं* दहति",—इति न्यायश्रापतेत। तर्हि, सुमन्तु-वचनस्य का गतिरिति चेत्। उच्यते। न खल्वेतद्वचनं पित्र्ये पूर्व-विद्धां विधातुं प्रवृत्तम्,

* स्वकर्म्मगृहं,—इति मु० पुस्तके पाठः।

किन्तर्हि, दैवे तां निवारयितुं तत्प्रवृत्तिः। तत्रार्थवादत्वेन पित्र्ये साऽभ्यनुज्ञायते। तत्रेयं वचन-व्यक्तिः, यदि नाम कथञ्चित् पूर्व-विद्धा भवेत्; भवतु नाम सा पित्र्ये, तिथि-मूलस्य प्रायेण पितृ-तुष्टि-हेतुत्वात्। दैवे तु सर्वथा पूर्व-विद्धा न ग्राह्येति। तस्मात् तृतीयः पक्षः परिशिष्यते। स्कन्द-व्रते पूर्व-विद्धा, व्रतान्तरेषु तूत्तर-विद्धेति। तत्र-स्कन्द-षष्ठ्याः पूर्व-विद्धत्वमाह वसिष्ठः,—

"कृष्णाष्टमी स्कन्द-षष्ठी शिवरात्रि-चतुर्द्दशी।
एताः पूर्व-युताः कार्य्यास्तिथ्यन्ते पारणं भवेत्"—इति।

स्कन्द-षष्ठी लिङ्गपुराणे दर्शिता,—

"प्रत्यब्दमपि पूजा च षष्ठ्यां कार्य्या गुहस्य च।
दीप्ताग्निः स सुखी च स्यात्तस्मिन्नागामि-वत्सरे"—इति॥

तथा, तत्रैव रवि-षष्ठी दर्शिता,—

"षष्ठ्यामुपोष्य विधिवत्सप्तम्यामर्कमर्चयेत्।
स द्रव्यभागरुक् चैव* सम्प्राप्नोतीप्सितं फलम्"—इति।

फलषष्ठी मन्दार-षष्ठीत्यादि-व्रतानि † भविष्योत्तरे प्रोक्तानि। तत्र तत्र रव्यादि-व्रतेषु पर-विद्धा ग्राह्या। तदुक्तं विष्णुधर्मोत्तरे,—

"एकादश्यष्टमी षष्ठी पौर्णमासी चतुर्द्दशी।
अमावास्या तृतीया च ताउपोष्याः ‡ परान्विताः"—इति।

यद्यप्यत्र व्रत-विशेषोनोपात्तः, तथापि स्कन्द-व्रतस्य पूर्व-विद्धायां

---

* सद्द्रव्यभागैर्व्विविधैः,—इति वि० पुस्तके पाठः।
† षष्ठ्यां,—इत्यधिकः पाठः मु० पुस्तके।
‡ उपोष्योः स्युः,—इति वि० पुस्तके पाठः।

विहितायां परिशेषादन्येषामुत्तर-विद्धा भवति। तेषामप्यविरोधात् पूर्वा-विद्धाऽस्त्विति चेत्। न, प्रतिषेधात्। तथा च निगमः,—

"नाग-विद्धा तु या षष्ठी रुद्र-विद्धो दिवाकरः।
काम-विद्धो भवेद्विष्णुर्न ग्राह्यास्ते तु वासराः"—इति।

नागः पञ्चमी। रुद्रः षष्ठी। दिवाकरः सप्तमी। कामस्त्रयोदशी। विष्णुर्द्वादशी। शिवरहस्य-सौरपुराणयोः,—

"नाग-विद्धा तु या षष्ठी शिव-विद्धा तु सप्तमी।
दशम्येकादशी विद्धा नोपोष्या तु कथञ्चन"—इति।

तथा, पूर्वविद्धा-प्रतिषेधः, उत्तरविद्धा-विधिश्चेत्युभयं सहैव स्कन्द पुराणे पठ्यते,—

"नाग-विद्धा तु कर्त्तव्या षष्ठी च न कदाचन *।
सप्तमी-संयुता कार्य्या षष्ठी धर्मार्थ-चिन्तकैः"—इति।

ब्रह्मवैवर्त्तेऽपि,—

"न हि षष्ठी नाग-विद्धा कर्त्तव्या तु कदाचन।
नाग-विद्धा तु या षष्ठी कृता पुण्य-क्षया भवेत्॥
सप्तम्या सह कर्त्तव्या महापुण्य-फल-प्रदा"—इति।

पुण्यस्य क्षयोयस्यां, सा पुण्य-क्षया। यदि कदाचित्तिथि-क्षय-वशादुत्तर-विद्धा षष्ठी न लभ्यते, तदा स्कन्दव्रतवदन्यान्यपि व्रतानि नाग-विद्धायां कर्त्तव्यानि। तदाह वसिष्ठः,—

"एकादशी तृतीया च षष्ठी चैव त्रयोदशी।

---

* न षष्ठी तु कदाचन,—इति वि० पुस्तके पाठः।

पूर्व-विद्धा तु कर्त्तव्या यदि न स्यात्परेऽहनि"—इति।

नाग-वेधश्च षण्मुहूर्त्तात्मकः। तथा च स्कान्दे,—

"नागोद्वादश-नाडीभिर्दिक् पञ्चदशभिस्तथा।

भूतोऽष्टादश-नाडीभिर्दूषयत्युत्तरान्तिथिम्"—इति।

इति षष्ठीनिर्णयः।



## अथ सप्तमी निर्णीयते।

सन्ति* हि सप्तम्यां नानादेवताकानि बहूनि व्रतानि। तत्र, भविष्योत्तर-प्रोक्तम् उमा-महेश्वर-देवताकं मुक्ताभरण-सप्तमी-व्रतम्। तथा, भविष्यत्पुराणे सूर्य्य-देवताकं विजय-सप्तमी-व्रतमुक्तम्। सूर्य्य-देवताकमारोग्य-सप्तमी-व्रतं वराहपुराणेऽभिहितम्। विष्णु-देवताकं माङ्गल्य-व्रतं गारुड़-पुराणेऽभिहितम्। एवमन्यान्यप्युदाहरणीयानि।

तत्र, काश्चित्तिथयो देवता-भेदेन व्यवतिष्ठमाना लक्ष्यन्ते। तद्यथा। स्कन्दषष्ठी पूर्व-विद्धा, मन्दरादि-षष्ठी पर-विद्धा। काश्चित्तस्यामेकस्यां देवतायां व्रत-भेदेन व्यवतिष्ठन्ते। तद्यथा। † गौरी-व्रतेष्वेव; रम्भा-तृतीया पूर्व-विद्धा, लवणतृतीया पर-विद्धा। काश्चिदेक-देवताके एकस्मिन् व्रते कर्म-काल-व्याप्ति-भेदेन व्यवतिष्ठन्ते। तद्यथा। विनायक-व्रते पूर्वेद्युः परेद्युर्वा चतुर्थी मध्याह्न-व्यापिनी गृह्यते। काश्चिच्छुक्ल-कृष्ण-भेदेन व्यवतिष्ठन्ते। तद्यथा। शुक्ल-प्रतिपत्पूर्व-विद्धा, कृष्ण-प्रतिपदुत्तर-विद्धेति।

* इह,—इति मु० पुस्तके पाठः।

† तत्र,—इत्यधिकः पाठः मु० पुस्तके।

तत्र, केन न्यायेन सप्तमी व्यवस्थापनीयेति वीक्षायां न केनापीति प्रतिजानीमहे। सप्तम्याः * पूर्व्व-विद्धा-निन्दकस्योत्तर-विद्धा-विधायकस्य च वचनस्य कस्य चिददर्शनात्। तद्विपर्य्ययेण पूर्व्व-विद्धा-विधायकस्योत्तर-विद्धा-निषेधकस्य सर्व्वत्रोपलम्भात्। सर्व्वासु देवतासु सर्व्वेषु व्रतेषु शुक्ल-कृष्ण-पक्षयोरुभयोरपि सप्तमी पूर्व्व-विद्धैव ग्राह्या, युग्मादि-शास्त्रे 'षण्मुन्योः'—इत्यभिधानात्। स्कन्दपुराणे,—

"कर्त्तव्या सप्तमी तत्र षष्ठी यत्र च सर्व्वदा †।
षष्ठी च सप्तमी यत्र तत्र सन्निहितोरविः"—इति।

भविष्यत्पुराण-ब्रह्मपुराणयोः,—

"षष्ठी च सप्तमी तात, अन्योन्यन्तु समाश्रिता ‡।
पूर्व्व-विद्धा द्विजश्रेष्ठ, कर्त्तव्या सप्तमी तिथिः"—इति।

पैठीनसिः,—

"पञ्चमी सप्तमी चैव दशमी च त्रयोदशी।
प्रतिपन्नवमी चैव कर्त्तव्या सम्मुखी तिथिः"—इति।

उत्तर-विद्धा-प्रतिषेधः स्कन्दपुराणे दर्शितः,—

"षष्ठ्येकादश्यमावास्या पूर्व्व-विद्धा तथाऽष्टमी।
सप्तमी पर-विद्धा च नोपोष्यं तिथि-पञ्चकम्"—इति।

न च व्रत-विशेषेणाप्युत्तर-विद्धायामाशा कर्त्तव्या। तदुक्तं ब्रह्म-वैवर्त्ते,—

---

* सप्तम्यां,—इति वि॰ पुस्तके पाठः।
† यत्रा युता सप्तमी च कर्त्तव्या तात सर्व्वदा,—इति वि॰ पुस्तके पाठः।
‡ समाश्रिते,—इति मु॰ पुस्तके पाठः।

"सप्तमी नाष्टमी-युक्ता न सप्तम्या युताऽष्टमी।
सर्व्वेषु व्रत-कल्पेषु अष्टमी परतः शुभा"—इति।

यदा पूर्व्वेद्युरस्तमयपर्य्यन्ता षष्ठी परेद्युस्तिथिक्षयेणास्तमयादर्व्वागष्टमी त्रिमुहूर्त्ता, तदा पूर्व-विद्धायाश्चलाभादुत्तर-विद्धायाश्च प्रतिषिद्धत्वात् कुत्रानुष्ठानमिति चेत्। निषेधमुल्लङ्घ्याप्युत्तर-विद्धायामिति ब्रूमः। यद्यप्यस्मिन्नर्थे वचनं नोपलभ्यते, तथापि शेषि-लोप-न्यायत्वादुत्तरविद्धा गौण-कालत्वेन स्वीकर्त्तव्या। अस्ति चात्र दृष्टान्तः। स्कन्द-व्यतिरिक्त-व्रतेषु पूर्व-विद्धायाः षष्ठ्या निषेधमुल्लङ्घ्य, "यदि न स्यात्परेऽहनि"—इति वाक्येन पूर्व-विद्धा गृहीता। तथा, रम्भा-व्यतिरिक्त-गौरी-व्रतेषु द्वितीया-युता स्वीकर्त्तव्या। तेनैव न्यायेनात्राप्यष्टमी-विद्धायाः स्वीकारोऽस्तु।

इति सप्तमीनिर्णयः।

## अथाष्टमी निर्णीयते।

द्विविधोहि तत्र निर्णयः। व्रत-सामान्य-निर्णयोव्रत-विशेष-विषयश्चेति। व्रत-सामान्ये तु शुक्ल-कृष्ण-पक्ष-भेदाद्व्यवतिष्ठते। तत्र, शुक्लाष्टमी परा ग्राह्या। 'षण्मुन्योर्वसुरन्ध्रयोः'—इति युग्मशास्त्रात्। यद्यप्येतच्छास्त्रं पक्ष-द्वय-साधारणमिति चतुर्थी-प्रस्तावे प्रतिष्ठितम्, तथापि शास्त्रान्तर-बलात् शुक्ल-पक्षे पर्य्यवस्यति। तथा च निगमः,—

"शुक्लपक्षेऽष्टमी चैव शुक्लपक्षे चतुर्द्दशी।
पूर्व-विद्धा न कर्त्तव्या कर्त्तव्या पर-संयुता॥
उपवासादि-कार्य्येषु एष धर्मः सनातनः"—इति।

ब्रह्मवैवर्त्ते,—

"सप्तमी नाष्टमी-युक्ता न सप्तम्या युताऽष्टमी।

सर्वेषु व्रतकल्पेषु अष्टमी परतः शुभा"—इति।

पद्मपुराणे,—

"नाष्टमी सप्तमी-युक्ता सप्तमी नाष्टमी-युता।

नवम्या सह कार्य्या स्यादष्टमी नात्र संशयः"—इति।

स्कन्दपुराणेऽपि,—

"अष्टमी नवमी-मिश्रा कर्त्तव्या भूतिमिच्छता।

सप्तम्या चाष्टमी चैव न कर्त्तव्या शिखिध्वज"—इति।

तान्येतानि ब्रह्मवैवर्तादि-वचनानि यद्यपि पक्ष-द्वय-साधारण्येन पूर्व-विद्धा-निषेधमुत्तर-विद्धा-विधिञ्च कुर्वन्ति, तथाप्युदाहृत-निगमानु-सारेण शुक्ल-पक्ष-विषयतया योजनीयानि। तथा च शुक्लपक्षाभिप्रा-येणैव पूर्व-विद्धां प्रतिषेधति जावालिः,—

"नाग-विद्धा तु या षष्ठी भानु-विद्धा महेश्वरः।

चतुर्दशी काम-विद्धा तिस्रस्तामनिनाः स्मृताः"—इति।

स्कन्दपुराणेऽपि,—

"नाग-विद्धा तु या षष्ठी सप्तम्या तु यदाऽष्टमी।

भूत-विद्धाऽप्यमावास्या न ग्राह्या मुनि-पुङ्गव"—इति।

तथा च शुक्लपक्षमेवाभिप्रेत्योत्तर-विद्धा विधीयते विष्णुधर्मोत्तरे,—

"एकादश्यष्टमी षष्ठी द्वितीया च चतुर्दशी।

अमावास्या तृतीया च ताउपोष्याः परान्विताः"—इति।

शङ्करगीतायां साक्षादेव शुक्लपक्षे पर-विद्धा विहिता,—

"एकादश्यष्टमी षष्ठी शुक्लपक्षे चतुर्दशी ।

पूज्याः परेण संयुक्ताः पराः पूर्वेण संयुताः"—इति ।

कृष्णपक्षे पूर्व-विद्धा-विधिरुत्तर-विद्धा-प्रतिषेधश्च निगमे पठ्यते,—

"कृष्णपक्षेऽष्टमी यत्र कृष्णपक्षे चतुर्दशी ।

पूर्व-विद्धा तु कर्त्तव्या पर-विद्धा न कर्हिचित् ॥

उपवासादि-कार्य्येषु ह्येष धर्मः सनातनः"—इति ।

नारदीये,—

"कृष्णाष्टमी तथा रम्भा तृतीया वटपैतृकी ।

वृहत्तपा तथा ब्रह्मन्, कर्त्तव्या सम्मुखी तिथिः"—इति ।

अत्राष्टम्याः शुक्ल-कृष्ण-व्यवस्था सामान्येन सर्व-व्रत-विषया, व्रत-विशेषस्यानुपादानात् । व्रतानि चोदाह्रियन्ते । तत्र वामनपुराणे, नभोमासे कृष्णाष्टम्यां कालाष्टमीव्रतं पठितम्, विष्णुधर्मोत्तरे कृष्णपक्षे सन्तानाष्टमीव्रतम्'—इति । एतदुभयं यथोक्तरीत्या पूर्व-विद्धायामनुष्ठेयम् । देवीपुराणे श्रावणमासे शुक्लाष्टम्यां देवीव्रतम्, गारुड़पुराणे शुक्लाष्टम्यां नृसिंहव्रतम् । एतदुभयमुत्तर-विद्धायामनुष्ठेयम् । एवमन्यान्यप्युदाहरणीयानि ।

व्रत-विशेषादष्टमी-निर्णयो द्विविधः ; व्रत-विशेषमात्रोपजीवनेन प्रवृत्त एकः, नक्षत्रादि-योगं व्रत-विशेषञ्चोपजीव्य प्रवृत्तोऽपरः । तत्र, दूर्वाष्टमी-संज्ञितः कश्चिद्व्रत-विशेषो भविष्यत्पुराणे पठ्यते,—

"ब्रह्मन्, भाद्रपदे मासि शुक्लाष्टम्यामुपोषितः ।

सहेशं पूजयेद्यस्तु दूर्वया सहितं शुभे"—इति ।

अस्मिन् व्रत-विशेषे शुक्ल-पक्ष-वर्त्तिनेनोत्तर-विद्धायां प्राप्तायाम-पवादमाह नारदः,—

"धन्या कृष्णाष्टमी दूर्वा सावित्री वटपैतृकी।
अनङ्गत्रयोदशी रम्भा कर्त्तव्या सम्मुखी तिथिः"—इति।

पद्मपुराणे,—

"श्रावणी दुर्गनवमी तथा दूर्वाष्टमी च या।
पूर्व-विद्धैव कर्त्तव्या शिवरात्रिर्बलेर्दिनम्"—इति।

तथा, शिवशक्तिमहोत्सव-नामकः कश्चिद्व्रत-विशेषः। तस्य पूर्व-न्यायेन शुक्ल-कृष्ण-पक्ष-व्यवस्थायां प्राप्तायां तदपवादः पद्मपुराणे पठ्यते,—

"अष्टमी नवमी-विद्धा * नवम्या चाष्टमी युता।
अर्द्धनारीश्वरप्राया उमामाहेश्वरी तिथिः॥
अष्टमी-नवमी-युग्मे महोत्साहे महोत्सवः।
शिवशक्त्योः शिवक्षेत्रे पक्षयोरुभयोरपि"—इति।

महानुत्साहोयस्मिन्निति बहुव्रीहिः। तत्परन्तिथि-युग्मस्य क्षेत्रस्य वा विशेषणम्,—इति। यदा युग्मस्य विशेषणं, तदा तादृशं युग्ममुपलभ्य सूर्य्यग्रहणार्द्धोदयादाविव मनस्युत्साहं प्राप्य देवतोत्सवः कर्त्तव्यः,—इत्युक्तं भवति। यदा तु क्षेत्र-विशेषणं, तदा काशी-श्रीगिर्य्यादौ यस्मिन् क्षेत्रे मनस्युत्साहोजायते तत्रोत्सवः कर्त्तव्यः,—इत्युक्तं भवति।

---

* इत्यमेव सर्व्वत्र पाठः। ममतु 'अष्टम्या नवमी विद्धा',—इति पाठः प्रतिभाति। रघुनन्दनेन तु तिथितत्त्वे, 'अष्टम्या नवमी युक्ता नवम्या चाष्टमी तथा'—इति पठितम्।

नक्षत्रादि-योगि-व्रत-विशेषोपजीवी निर्णयउदाह्रियते। स्कन्द-पुराणे व्रत-विशेषः पठ्यते,—

"मासि भाद्रपदे शुक्ले पक्षे ज्येष्ठर्क्ष-संयुते।
यस्मिन् कस्मिन् दिने कुर्य्यात् ज्येष्ठायाः परिपूजनम्"—इति।

तस्य ज्येष्ठाव्रतस्य नक्षत्र-योग-वशेनाष्टमी ग्रहीतव्या,

"नाष्टमी सप्तमी-विद्धा सप्तमी चाष्टमी-युता।
नवम्या सह कार्य्या स्यादष्टमी नात्र संशयः॥
मासि भाद्रपदे शुक्लपक्षे ज्येष्ठर्क्ष-संयुता।
रात्रिर्यस्मिन् दिने कुर्य्यात् ज्येष्ठायाः परिपूजनम्"—इति।

अयमर्थः। अष्टम्यां नक्षत्रयोगाभावे शुक्ल-पक्ष-वर्त्तित्वात् परैवाष्टमी ग्राह्या। यदा तु पूर्व्वदिने रात्रौ नक्षत्र-योगोऽस्ति, तदा पूर्व्व-विद्धा ग्राह्या। सोऽयं शुक्ल-पक्ष-प्रयुक्तस्य सामान्य-शास्त्रस्य नक्षत्र-प्रयुक्त-विशेष-शास्त्रेणापवादइति। योऽयं पूर्व्वदिने रात्रौ नक्षत्र-योगः, सोऽपि क्वचिदपोद्यते। तथा च स्कन्दपुराणे,—

"यस्मिन् दिने भवेत् ज्येष्ठा मध्याह्नादूर्ध्वमप्यणुः।
तस्मिन् हविष्यं पूजा च न्यूना चेत् पूर्व्ववासरे"—इति।

अत्र, केवल-तिथितोनक्षत्र-योगस्य प्रशस्तत्वात् केवल-तिथि-प्रयुक्तं निर्णयमपोह्य यथा नक्षत्र-प्रयुक्तोनिर्णयश्चादृतः, तथा नक्षत्र-युक्त-तिथौ वार-विशेष-योगस्य ततोऽपि प्रशस्तत्वात्तेन निर्णयः कर्त्तव्यः। एतदेवाभिप्रेत्य स्कन्दपुराणे पठ्यते,—

"नभोऽष्टम्यां यदा वारोभानोर्ज्येष्ठर्क्षमेव च।
नीलज्येष्ठेति सा प्रोक्ता दुर्लभ बहुकालिकी"—इति।

तदेवं त्रिधा निर्णयः सम्पन्नः; नृसिंहव्रत-सप्तम्याष्टमीव्रतादौ शुक्ल-कृष्ण-भेदेन निर्णयः, दूर्वाष्टम्यां व्रत-विशेषेण निर्णयः, नीलज्येष्ठाष्टम्यां योग-विशेषेण निर्णयः,—इति।

तदेतन्निर्णय-त्रयं दृष्टान्तीकृत्य जन्माष्टमी विचार्यते। सा किं पक्ष-भेदेन निर्णेतव्या, उत व्रत-विशेषेण, आहोस्विद्योग-विशेषेण? इति। अत्रैवेदमपरश्चिन्त्यते। किं जन्माष्टमी-व्रतमेव जयन्ती-व्रतं, उत तयोर्भेदः? इति। तथा अन्यदपि चिन्तनीयम्, किं तिथ्यन्तरवदह्नार्द्धवेधः, उत मध्यरात्रवेधः? इति। प्रथमं व्रत-स्वरूपे निश्चिते पश्चादस्मिन् व्रते कीदृशी तिथिरित्याकाङ्क्षोदेति। तिथौ च पूर्व-विद्धत्वेन पर-विद्धत्वेन वा निश्चितायां पश्चात् कीदृशोवेधइत्याकाङ्क्षा। तस्मादादौ व्रतं निश्चीयते।

तत्र, जन्माष्टमी-जयन्ती-शब्दाभ्यां व्यवह्रियमाणं व्रतमेकमेवेति तावत्प्राप्तम्। कुतः? रूपभेदाभावात्। यथा यागस्य द्रव्य-देवते रूपम्, यथा चोपासनस्य गुण-विशेषैर्युक्ता देवता, यथा च तत्वविद्यायां वेद्यन्तत्त्वं रूपम्; तथा व्रते नियम-विशेषः स्वरूपम्। नियमश्चात्रोपवास-जागरण-कृष्णपूजा-चन्द्रार्घ्यदानमित्यादिलक्षणः। स चोभयत्र न भिद्यते।

अथोच्येत,—रूपाभेदेऽपि नित्यत्व-काम्यत्वाभ्यां ज्योतिष्टोमयो रिव* भेदोभविष्यति। नित्या जन्माष्टमी, अकरणे प्रत्यवाय-स्मरणात्। तथा च स्मर्य्यते,—

---

* नित्यकाम्ययोरिव,—इति मु॰ पुस्तके पाठः।

"गृध्र-मांसं खगं काकं श्येनञ्च मुनि-सत्तम।
मांसं वा द्विपदां भुङ्क्ते * कृष्णजन्माष्टमी-दिने॥
जन्माष्टमी-दिने प्राप्ते येन भुक्तं द्विजोत्तम।
त्रैलोक्य-सम्भवं पापं तेन भुक्तं द्विजोत्तम"—इति।

भविष्यत्पुराणे,—

"श्रावणे बहुले पक्षे कृष्णजन्माष्टमी-व्रतम्।
न करोति नरोयस्तु भवति क्रूरराक्षसः॥
कृष्णजन्माष्टमीन्त्यक्त्वा योऽन्य-व्रतमुपासते।
नाप्नोति सुकृतं किञ्चिदिष्टापूर्त्तमथापिवा॥
वर्षे वर्षे तु या नारी कृष्णजन्माष्टमी-व्रतम्।
न करोति महाप्राज्ञ,व्याली भवति कानने"—इति।

स्कन्दपुराणेऽपि,—

"ये न कुर्वन्ति जानन्तः कृष्णजन्माष्टमी-व्रतम्।
ते भवन्ति नराः प्राज्ञ, व्यालाव्याघ्राश्च कानने॥
रटन्तीह पुराणानि भूयोभूयोमहामुने।
अतीतानागतन्तेन कुलमेकोत्तरं शतम्॥
पातितं नरके घोरे भुञ्जता कृष्ण-वासरे"—इति।

जयन्ती च काम्या, फल-विशेष-स्मरणात्। विष्णुधर्म्मोत्तरे हि जयन्तीं प्रकृत्य पठ्यते,—

"यद्बाल्ये यच्च कौमारे यौवने वार्द्धके तथा।

---

* द्विपदा भुक्तं,—इति मु° पुस्तके पाठः।

बहु-जन्म-कृतं पापं हन्ति सोपोषिता तिथिः—इति।

वह्निपुराणेऽपि,—

"सप्त-जन्म-कृतं पापं राजन्, यत् त्रिविधं नृणाम्।

तत् नाशयति* गोविन्दस्तिथौ तस्यां समर्चितः॥

उपवासश्च तत्रोक्तो महापातक-नाशनः।

जयन्त्याञ्चगतीपाल, विधिना नात्र संशयः"—इति।

पद्मपुराणेऽपि,—

"प्रेत-योनि-गतानान्तु प्रेतत्वं नाशितं नरैः।

यैः कृता श्रावणे मासे अष्टमी रोहिणी-युता॥

किं पुनर्बुध-वारेण सोमेनापि विशेषतः"—इति।

स्कन्दपुराणेऽपि,—

"महाजयार्थं कुरुतां जयन्तीं मुक्तयेऽनघ।

धर्ममर्थञ्च कामञ्च मोक्षञ्च मुनिपुङ्गव॥

ददाति वाञ्छितानर्थांस्तानार्थेन।तिदुर्लभम्"—इति।

भविष्योत्तरे जयन्तीकल्पे,—

"प्रतिवर्षं विधानेन मद्भक्तो धर्मनन्दन।

नरो वा यदि वा नारी यथोक्तफलमाप्नुयात्॥

पुत्रसन्तानमारोग्यं सौभाग्यमतुलं भवेत्।

इह धर्म-रतिर्भूत्वा मृतो वैकुण्ठमाप्नुयात्"—इति।

एवं जन्माष्टम्याः प्रकरणे प्रत्यवायाज्जयन्त्याः फलविशेषाभयाः

---

* ध्वाजयति,—इति मु॰ पुस्तके पाठः।

क्रमेण नित्यत्वं काम्यत्वञ्चाभ्युपेतव्यमिति। नैवम्। गुणफलाधिकारत्वाभ्युपगमेऽपि जयन्त्याः फलविशेषोपपत्तेः। गोदोहन-दध्यादि तत्र दृष्टान्तः। "चमसेनापः प्रणयेद्गोदोहनेन पशुकामस्य"—इति नित्ययोर्दर्शपूर्णमासयोरपां प्रणयनं विधाय तदेवाश्रित्य पशुफलाय गोदोहनमात्रं विहितम्। "दध्नेन्द्रियकामस्य" इत्यत्र च पूर्व-प्रकृते नित्याग्निहोत्रे फलाय दधि विधीयते। एवं जन्माष्टमीमाश्रित्य फल-विशेषाय जयन्तीनामकोरोहिणी-योगोविधीयताम्।

न च, रोहिणी-लक्षणस्य काल-विशेषस्यानुपादेयत्वादविधेयत्वं शङ्कनीयम्। काल-विशेषस्य स्वरूपेण पुरुषैरनुत्पाद्यत्वेऽप्यनुष्ठानांगत्वं शास्त्रेणावगत्यानुष्ठानाय तत्प्रतीक्षायाः कर्त्तुं शक्यत्वात्। अन्यथा, "वसन्ते वसन्ते ज्योतिषा यजेत" इत्यादिकः सर्वोऽपि काल-विधिर्लुप्येत।

रोहिणीयोगस्य च जयन्ती-नामकत्वं जयन्ती-लक्षण-प्रतिपादकैः स्मृतिवाक्यैरध्यवसेयम्। तानि च वाक्यान्युदाहरामः। विष्णुधर्मोत्तरे,—

"रोहिणी च यदा कृष्णे पक्षेऽष्टम्यां द्विजोत्तम।
जयन्ती नाम सा प्रोक्ता सर्व-पाप-हरा तिथिः"—इति।

सनत्कुमारसंहितायाम्,—

"शृणुष्वावहितोराजन् कथ्यमानं मयाऽनघ।
श्रावणस्य च मासस्य कृष्णाष्टम्यां नराधिप॥
रोहिणी यदि लभ्येत जयन्ती नाम सा तिथिः"—इति।

स्कान्दे,—

"प्राजापत्येन संयुक्ता अष्टमी तु यदा भवेत्।
श्रावणे बहुले सा तु सर्व-पाप-प्रणाशिनी॥

जयं पुण्यञ्च कुरुते जयन्तीमिति तां विदुः"—इति।

विष्णुरहस्ये,—

"अष्टमी कृष्णपक्षस्य रोहिणी-ऋक्ष-संयुता।

भवेत्प्रौष्ठपदे मासि जयन्ती नाम सा स्मृता"—इति।

पौर्णमास्यन्तेषु मासेषु स्वीकृतेषु श्रावण्यां पूर्णिमायां श्रावणमासस्य समाप्तत्वादुपरितनीं प्रतिपदमारभ्य भाद्रपदमास इत्यभिप्रेत्य प्रौष्ठपद इत्युक्तम्। विष्णुधर्मोत्तरे,—

"प्राजापत्यर्क्ष-संयुक्ता कृष्णा नभसि चाष्टमी।

सोपवासो हरेः पूजां तत्र कृत्वा न सीदति"—इति।

वसिष्ठसंहितायाम्,—

"श्रावणे वा नभस्ये वा रोहिणी-सहिताऽष्टमी।

यदा कृष्णा नरैर्लब्धा सा जयन्तीति कीर्त्तिता॥

श्रावणे न भवेद्योगो नभस्ये तु भवेत् ध्रुवम्।

तयोरभावे योगस्य तस्मिन् वर्षे न सम्भवः"—इति।

अत्र, श्रावणे,—इति मुख्यः कल्पः। नभस्ये,—इत्यनुकल्पः। यदि वा श्रावणे यदि वा नभस्ये, सर्वथाऽपि रोहिणी-कृष्णाष्टमी-योगो जयन्तीत्येतदविवादम्। पुराणान्तरे,—

"रोहिणी च यदा कृष्णे पक्षेऽष्टम्यां द्विजोत्तम।

जयन्ती नाम सा प्रोक्ता सर्व-पाप-हरा तिथिः"—इति।

तदेवमेतैः स्मृति-वाक्यैर्जयन्त्याः कृष्णाष्टमी-रोहिणी-योगे स्वरूपे सति पूर्वोदाहृत-फल-कामिनस्तादृशो योगो गोदोहन-दध्यादिवद्गुणत्वेन

विधीयते। काम्ये तु ज्योतिष्टोमे गुण-विशेषेण कोऽपि फलाय विहितः। अतः काम्यज्योतिष्टोम-वैषम्याद् गोदोहन-दध्यादि-साम्याच्च पूर्वोदाहृत-फल-वाक्यानि प्रकृते नित्ये जन्माष्टमी-व्रते गुण-फल-प्रतिपादकत्वेनोपपद्यन्ते। तथा सति यथा दर्शपूर्णमासाभ्यामन्यः कश्चित् पशु-फल-कोगोदोहन-संज्ञकोयागोनास्ति किन्तु गुणएव केवलं गोदोहनम्, तथा न जन्माष्टमी-व्रतादन्यज्जयन्ती-व्रतं किन्तु प्रकृतएव व्रते फलाय गुण-विधिरित्येवं प्राप्ते ब्रूमः,— .

व्रत-द्वयमिदं भवितुमर्हति। कुतः? नाम-भेदात्, निमित्त-भेदात्, रूप-भेदात्, शुद्धमिश्र-भेदात्, निर्देश-भेदाच्च। तथाहि। पूर्वोदाहृतेषु अकरणे प्रत्यवाय-प्रतिपादक-स्मृतिवाक्येषु जन्माष्टमी-व्रतमित्येव नाम व्यवहृतम्। तथा पूर्वोदाहृतेषु जयन्ती-व्रतमिति नाम व्यवहारः। नाम-भेदाच्च कर्म-भेदोज्योतिरधिकरणे (मी० २अ० २पा० ८अ०) व्यवस्थितः। अस्य चाधिकरणस्य सङ्ग्राहकावेतौ श्लोकौ भवतः,—

"अथैषज्योतिरित्यत्र गुणोवा कर्म वा पृथक्।
गुणः सहस्रदानात्मा ज्योतिष्टोमे ह्यनूदिते।
अथेति प्रकृते च्छिन्नएतच्छब्दोऽप्य-गे वदेत्॥
सञ्ज्ञयेवान्य-कर्मत्वमुत्पत्ति-गत-संज्ञया"—इति।

अयमर्थः। "अथैष ज्योतिरथैष विश्वज्योतिरथैष सर्वज्योतिरेतेन सहस्र-दक्षिणेन यजेत"—इति श्रुतम्। तत्र संशयः; किं प्रकृतएव ज्योतिष्टोमे सहस्र-दक्षिणाऽऽख्योगुण-विधिः, उत यागान्तर-विधिः,—इति। एष ज्योतिरेतेनेत्याभ्यामेतच्छब्दाभ्यां प्रकृतं ज्योतिष्टोममनूद्य

तत्र गुण-विधिरिति पूर्वः पक्षः। अर्थान्तर-द्योतकेनाथशब्देन प्रकृतस्य ज्योतिष्टोमस्य विच्छेदः क्रियते। एतच्छब्दश्च प्रत्यासन्नं ब्रूते। प्रत्यासत्तिश्च द्विविधा; अतीता आगामिनी चेति। तत्रातीतायाः प्रत्यासत्ते-र्विच्छेदे सति आगामि-प्रत्यासत्ति-परत्वेनैतच्छब्दौ उपपन्नौ। तथाप्येक-कर्मत्वं माभूत्कर्म-भेदे तु किं प्रमाणमिति चेत्। अपूर्व-संज्ञेति वदामः। एषज्योतिरित्यस्मिन्नुत्पत्ति-वाक्ये पूर्व-प्रकृत-कर्म-विषयाया ज्योतिष्टोम-संज्ञायाअन्या ज्योतिरित्येषा संज्ञा श्रूयते। तत्र, यथा पूर्वाधिकरणे "सप्तदश प्राजापत्यान् पशूनालभेत"—इत्यत्रोत्पत्ति-वाक्य-गतया सङ्ख्यया कर्मभेदोनिरूपितः, तथाऽत्राप्युत्पत्ति-वाक्य-गतया नूतन-संज्ञया कर्म-भेदोऽभ्युपगन्तव्यइति।

एवञ्च सति प्रकृतेऽप्यनेन न्यायेनोत्पत्ति-वाक्य-गताभ्यां जन्माष्टमी-व्रत-जयन्तीव्रत-संज्ञाभ्यां व्रत-भेदोऽभ्युपगन्तव्यः। तथा, निमित्त-भेदा-दपि व्रत-भेदः। जन्माष्टमी-व्रते तिथिरेव निमित्तम्, जयन्ती-व्रते तु रोहिणी-योगः। ननु, जन्माष्टमीत्यस्मिन्नपि व्यवहारे योगएव विवक्षितव्यः, नक्षत्र-युक्तायामेव तिथौ देवकी-नन्दनस्योत्पत्तेः। मैवम्। तज्जन्मन्यष्टम्याएव प्रधान-प्रयोजकत्वात्। रोहिणी-तद्योगयो-र्विद्यमानयोरपि बुधवारादिवदुपलक्षणत्वात्। अतएव शास्त्रेषु जन्मा-ष्टमीत्येव समाख्यायते। अन्यथा, जन्मरोहिणी,—इति वा, जन्मयोगः,—इति वा, समाख्यायेत। तत्सद्भावमात्रेण प्रयोजकत्वे बुधवारोऽपि प्रयोजकः स्यात्। अस्त्विति चेत्। न। अतिप्रसङ्गात्। तज्जन्मकाले द्वापरा-वसानस्य संवत्सर-विशेषस्य च सद्भावेन तयोरपि प्रयोजकत्वं केन वार्येत। तस्माज्जन्माष्टम्याएव प्राधान्यम्। तत्प्राधान्ये च, श्रुति-लिङ्गादिषु

षट्सु[१] समाख्यारूपं षष्ठं प्रमाणमुपन्यस्तं वेदितव्यम्। तथा, प्रत्यक्षादिषु सम्भवैतिह्यान्तेष्वष्टसु[२] प्रमाणेष्वैतिह्यरूपमागमरूपं वा प्रमाणमुक्तं भवति।

ननु, निरर्थकोऽयं वाग्वाद-लक्षणः कोलाहलः; यद्येकं व्रतं यदि वा व्रत-द्वयमुभयथाऽप्यनुष्ठाने कोनामातिशयः स्यात्। उच्यते, अस्त्येव महानतिशयः। यस्मिन् संवत्सरे श्रावण-बहुलाष्टमीं परित्यज्यान्यस्मिन् नवम्यादौ रोहिणी भवति, तस्मिन् संवत्सरे जयन्ती स्वरूपेणैव नास्ति। अतोजयन्ती-व्रतस्य तत्र लुप्तत्वात्तस्यैव जन्माष्टमी-व्रतत्वे तदपि न प्राप्नुयात्। भेद-पक्षे त्वसत्यामपि जयन्त्यां जन्माष्टमी-व्रतं तत्र प्रवर्त्तते,— इत्ययमनुष्ठानेऽतिशयः। भवत्वेवं, तथापि नोपन्यस्तोनिमित्त-भेदो-व्रत-भेदमावहति। कर्म-भेद-हेतुषु शब्दान्तराभ्यास-सङ्ख्या-गुण-प्रक्रिया-

(१) "श्रुतिर्द्वितीया क्षमता च लिङ्गं वाक्यं पदान्येव तु संहतानि। सा प्रक्रिया या कथमित्यपेक्षा स्थानं क्रमो योगबलं समाख्या"—इत्युक्तलक्षणानि श्रुतिलिङ्गादीनि षट् प्रमाणानि मीमांसादर्शनस्य तृतीयाध्याये दर्शितानि।

(२) यत्राभिधीयमानेऽर्थे योऽन्योऽर्थः प्रसज्यते सोऽर्थापत्तिः। यथा, मेघेष्वसत्सु वृष्टिर्न भवतीत्युक्ते सत्सु भवतीति प्रसज्यते। अनुपलब्धिरभावग्राहकं प्रमाणम्। यथा, भूतले घटानुपलब्ध्या तदभावो गृह्यते। सम्भवस्त्वविनाभाविनोऽर्थस्य सत्ताग्रहणादन्यस्य सत्ताग्रहणम्। यथा, सम्भवति सहस्रे शतमित्यादि। अनिर्दिष्टप्रवक्तृकं प्रवादपारम्पर्य्यमिति होचुर्वृद्धाइत्यैतिह्यमुच्यते। यथा, इह वटे यक्षः प्रतिवसतीति। प्रसिद्धमन्यत्। आगमः शब्द इत्यनर्थान्तरम्।

नामधेयेषु षट्सु प्रमाणेषु[1] निमित्तस्यानन्तर्भावादिति चेत्। नैवम्। तथा हि*, पूर्वोक्त-संज्ञाभेद-सम्पादितं व्रत-भेदं निमित्त-भेदउपोद्बलयति। तस्मादत्र निमित्त-भेदाद्व्रतभेदः।

तथा, रूप-भेदादपि व्रत-भेदोऽवगन्तव्यः। रूप-भेदस्य कर्म-भेदहेतुत्वमामिक्षाऽधिकरणे (मी० २अ० २पा० ९अ०) निर्णीतम्। तस्य चाधिकरणस्य संग्राहकावेतौ श्लोकौ भवतः,—

"गुणः कर्मान्तरं वा स्यात् वाजिभ्योवाजिनन्त्विति।
गुणोदेवाननूद्योक्तः समुच्चय-विकल्पतः॥
आमिक्षोत्पत्ति-शिष्टत्वात् प्रबला तत्र वाजिनम्।
गुणोऽप्रविश्य कर्मान्यत् कल्पयेद्वाजि-दैवकम्"—इति।

"तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा वाजिभ्योवाजिनम्"—इति श्रुतम्। अम्ल-दधि-संपर्कात् क्षीर-नीरयोर्विभेदे सति याघनीभूतः क्षीरांशः,साऽऽमिक्षा। तस्याश्च विश्वेदेवादेवताः। तत्र यत् पृथग्भूतं नीरन्त द्वाजिनम्। तस्य च वाजिनोदेवताः। तस्य च वाक्यस्य आमिक्षान्तस्य प्रतिपाद्यमामिक्षा-द्रव्यकं विश्वदेवदेवताकमेकं कर्म। तथा सति किमुपरितनेन वाजिभ्योवाजिनमित्यनेन वाक्येन पूर्वस्मिन्नेव कर्मणि वाजिनं गुणोविधीयते, उत कर्मान्तर-विधिः,—इति संशयः। तत्र वाजोऽन्नमामिक्षा, सा येषां विश्वेषां देवानामस्ति, ते वाजिनइति व्युत्पत्त्या प्रकृतान् देवाननूद्य वाजिनं गुणोविधीयते। सा चामिक्षया

* चेत्। वाढम्। नैवम्। तथापि,—इति वि० पुस्तके पाठः।

(१) तइमे कर्म्मभेदहेतवो मीमांसादर्शनस्य द्वितीयाध्याये प्रदर्शिताः।

सह विकल्प्यते समुच्चीयते वेति पूर्व्वः पक्षः। उत्पत्ति-शिष्टाभिक्षा-गुणावरुद्धस्य कर्मणोगुणान्तराकाङ्क्षाऽभावात् वाजिनस्य तत्र प्रवेशासम्भवे सत्यन्यथानुपपन्नोवाजिन-गुणोवाजिशब्दार्थस्य प्रकृत-देवताव्यतिरिक्त-देवत्वं कल्पयित्वा कर्म-भेदे पर्य्यवस्यतीति सिद्धान्तः।

तत्र यथा द्रव्य-देवता-लक्षणस्य[१] यागरूपस्य भिन्नत्वात् कर्म-भेदः, तथा प्रकृतेऽपि रूप-भेदाद्व्रत-भेदोऽभ्युपगम्यताम्। उपवासमात्रं जन्माष्टमी-स्वरूपं, तदुत्पत्ति-वाक्ये तन्मात्रस्य प्रतीयमानत्वात्।

ननु, जयन्ती-व्रतएव 'उपवासं कुर्य्यात्'—इत्युत्पत्ति-वाक्यं स्मर्य्यते, न तु जन्माष्टमी-व्रते। बाढम्। तथाप्यत्र विधिरुन्नेतव्यः। अन्यथा, भोजने प्रत्यवाय-स्मरणानुपपत्तेः। स चोन्नीयमानोविधिरुपवासमात्रं विधत्ते, न तु मण्डपनिर्माण-जागरण-प्रतिमादानादिकम्। विधेरुन्नयन-हेतुष्वकरण-प्रत्यवाय-वाक्येषु भोजन-निषेध-मात्र-स्मरणात्। न हि, तत्र निद्रायां दानाभावे वा प्रत्यवायः स्मर्य्यते। अतः, उपासमात्रं तस्य

---

(१) तथा च जैमिनीयं सूत्रम् "यजातिचोदना द्रव्यदेवताक्रियं समुदाये कृतार्थत्वात् (मी० ४अ० २पा० २७सू०)"—इति। यद्यप्यत्र द्रव्य-देवताक्रियमिति त्रितयमुपन्यस्तं, तथापि द्रव्यदेवते एव यागस्य स्वरूपं क्रिया तु तयोः संबन्धार्था। तदुक्तं भाष्यकृता "यजतिचोदना तावत् द्रव्यदेवताक्रियं द्रव्यं देवता च, तस्य द्रव्यस्य क्रिया, यया तयोः संबन्धो भवति"—इति। अतएव मीमांसाभाष्यकारेण 'द्रव्यदेवते यागस्य स्वरूपम्'—इत्यन्यत्राप्युक्तम्। त्रितयस्य यागस्वरूपत्वविवक्षायामपि यागानां परस्परभेदे द्रव्यदेवताभेदएव हेतुः क्रियायाः सर्व्वत्राविशेषादिति न प्रकृतग्रन्थस्य न्यूनता।

स्वरूपं, न तु दानादिकम्। अतएवाकरणे प्रत्यवायमभिधाय वाक्य-शेषे जयन्तीप्रयुक्त-दानादि-शङ्का-व्यावृत्तये केवलशब्द उपवास-विशेषणत्वेन पठ्यते,—

"केवलेनोपवासेन तस्मिन् जन्मदिने मम।
शत-जन्म-कृतात् पापान्मुच्यते नात्र संशयः"—इति।

तस्माज्जन्माष्टमी-व्रतस्योपवासमात्रं स्वरूपम्। यदि शिष्टास्तत्रापि जागरण-दानादिकमनुतिष्ठन्ति, अनुतिष्ठन्तु नाम। अविरुद्धैः पुण्य-विशेषैः व्रतस्योपोद्बलनसम्भवात्*। शास्त्रेण तु प्रापितमुपवासमात्रम्। जयन्ती-व्रतस्य तु दानादि-सहित उपवासः स्वरूपम्। तद्विधायकेषु शास्त्रेषु तथाऽभिधानात्। तथा च वह्निपुराणे,—

"तुष्ट्यर्थं देवकी-सूनोर्जयन्ती-संज्ञकं व्रतम्।
कर्त्तव्यं वित्त-मानेन†(१) भक्त्या भक्त-जनैरपि"—इति।

भविष्योत्तरेऽपि,—

"मासि भाद्रपदेऽष्टम्यां निशीथे कृष्णपक्ष-गे।
शशाङ्के वृषराशिस्थे ऋक्षे रोहिणी-संज्ञके॥
योगेऽस्मिन् वसुदेवाद्धि देवकी मामजीजनत्।
तस्मान्मां पूजयेत्तत्र शुचिः सम्यगुपोषितः॥

---

* अविरुद्धैः कर्म्मविशेषैः पुण्यविशेषत्वेन पठितस्य केवलेनोपवासेनास्य व्रतस्योपोद्बलनसम्भवात्,—इति वि० पुस्तके पाठः।

† चिन्त्यमानेन,—इति वि० पुस्तके पाठः।

---

(१) वित्तं धनं, तस्य मानेन परिमाणेनेत्यर्थः। वित्तशाठ्यं न कर्त्तव्यमिति भावः। "वित्तशाठ्यमकुर्व्वाणः सम्यक् फलमवाप्नुयात"—इति वचनान्तरेऽप्युक्तम्।

ब्राह्मणान् भोजयेद्भक्त्या ततोदद्याच्च दक्षिणाम् ।
हिरण्यं मेदिनीं गावोवासांसि कुसुमानि च ॥
यद्यदिष्टतमन्तत्तत् कृष्णोमे प्रीयतामिति"—इति ।

भविष्यद्विष्णुधर्मोत्तरयोः,—
"जयन्त्यामुपवासश्च महापातक-नाशनः ।
सर्वैः कार्य्योमहाभक्त्या पूजनीयश्च केशवः"—इति ।

वह्निपुराणे,—
"कृष्णाष्टम्यां भवेद्यत्र कलैका* रोहिणी यदि ।
जयन्ती नाम सा प्रोक्ता उपोष्या सा प्रयत्नतः"—इति ।

स्मृत्यन्तरेऽपि,—
"प्राजापत्यर्च्च-संयुक्ता श्रावणस्यासिताष्टमी ।
वर्षे वर्षे तु कर्त्तव्या तुष्ट्यर्थं चक्रपाणिनः[१]"—इति।

नारदीयसंहितायां जयन्तीं प्रकृत्य स्मर्य्यते,—
"उपोष्य जन्म-चिह्नानि कुर्य्याज्जागरणन्तु यः ।
अर्द्धरात्र-युताष्टम्यां सोऽश्वमेध-फलं लभेत्"—इति ।

एवमेतेषु विधि-वाक्येषु दानादियुक्तउपवासोजयन्तीव्रत-रूपत्वेन प्रतीयते । अतोरूपभेदाद्व्रतभेदः । तथा शुद्ध-मिश्रत्व-भेदादपि द्रष्टव्यः[२] । अकरणे प्रत्यवायमात्र-स्मरणात् शुद्धं नित्यं जन्माष्टमी-व्रतम् । करणे फल-विशेष-स्मरणात् अकरणे प्रत्यवाय-स्मरणाच्च नित्यत्वेन

* पलैका,—इति वि० पुस्तके पाठः ।

(१) चक्रपाणिन इति 'प्रयागव्यवहारे'—इत्यस्माद्धातोः सिद्धम् ।
(२) व्रतभेद इति शेषः ।

काम्यत्वेन च मिश्ररूपं जयन्तीव्रतम्। तत्र, फल-वाक्यानि पूर्वपक्षएव प्रसङ्गादुदाहृतानि। अकरणे प्रत्यवायस्तु जयन्तीं प्रकृत्य कस्मिंश्चित्पुराणे स्मर्य्यते,—

"अकुर्वन् याति नरकं यावदिन्द्राश्चतुर्द्दश"—इति।

स्कन्दपुराणेऽपि,—

"शूद्रान्नेन तु यत्पापं शवहस्तस्य भोजने।
तत्पापं लभते कुन्ति, जयन्ती-विमुखोनरः॥
ब्रह्मघ्नस्य सुरापस्य गोवधे स्त्रीवधेऽपिवा।
न लोकोयदुशार्द्दूल, जयन्ती-विमुखस्य च॥
क्रियाहीनस्य मूर्खस्य परान्नं भुञ्जतोऽपिवा।
न कृतघ्नस्य लोकोऽस्ति जयन्ती-विमुखस्य च॥
न करोति यदा विष्णोर्जयन्ती-सम्भवं व्रतम्।
यमस्य वशमापन्नः सहते नारकीं व्यथाम्॥
जयन्ती-वासरे प्राप्ते करोत्युदर-पूरणम्।
संपीड्यतेऽतिमात्रन्तु यमदूतैः सुदारुणैः॥
काकोलाश्चायसैस्तुण्डैः कृषन्त्यस्य कलेवरम्*।
योभुञ्जीत विमूढात्मा जयन्ती-वासरे नृप"—इति।

एतैरकरणे प्रत्यवाय-वाक्यैर्नित्यत्वञ्च जयन्त्याः। नन्वेवमुक्तैरकरणे प्रत्यवाय-वाक्यैः'केवलेनोपवासेन'—इति पाप-क्षय-वाक्याच्च जन्माष्टमी व्रतमपि नित्य-काम्यं स्यात्। मैवम्। पाप-क्षय-फलकत्व-मात्रेण काम्यत्वे

* संपीड्यतेऽतिमात्रं तु यमदूतैः कलेवरम्,—इति मु० पुस्तके पाठः।

सन्ध्यावन्दनादेरपि काम्यत्व-प्रसङ्गात्। अतः सत्यपि पाप-क्षये फला-नुपस्मरणेन केवल-नित्यत्वं जन्माष्टमी-व्रतस्य युक्तम्। ततः शुद्धमि-श्रत्व-भेदाद्व्रतयोर्भेदः। तथा निर्द्देशभेदादपि व्रतभेदो द्रष्टव्यः। निर्देश-भेदश्च भृगुवाक्ये दृश्यते,—

"जन्माष्टमी जयन्ती च शिवरात्रिस्तथैवच।

पूर्व्वविद्धैव कर्त्तव्या तिथिभान्ते च पारणम्"—इति।

यत्र, 'जन्माष्टमी रोहिणी च'—इति पाठः, तत्रापि रोहिणीशब्देन तद्युक्ता तिथिर्विवक्षिता, न तु केवल-रोहिणी*। तस्मिन् वाक्ये निर्द्दिष्टयोः पूर्व्वोत्तरयोर्जन्माष्टमी-शिवरात्र्योस्तिथित्वात्। यद्येकमेव व्रतं स्यात्तर्हि निर्द्देश-भेदो नोपपद्येत।

ननु, व्रतभेदेऽप्यस्ति दोषः, यदा दिनद्वयेऽष्टमी वर्त्तते रोहिणी तूत्तरदिनएव, तदा पूर्व्वदिने जन्माष्टम्युपवासः परेद्युर्जयन्त्युपवासः,—इति नैरन्तर्य्येणोपवास-द्वयं प्रसज्येत। प्रसज्यतां नाम, प्रमाणवत्त्वा-दिति चेत्, न, परदिने भोजनोपवास-लक्षण-विरुद्ध-धर्म्म-द्वय-प्रस-ङ्गात्। उपवासस्याङ्गं पारणमिति हि वक्ष्यते। तथा च जन्माष्टम्युप-वासाङ्गस्य पारणस्य जयन्त्युपवासस्य चैकत्र प्राप्तिः। सोऽयमेकोदोषः। व्यतिरेकानुपलम्भश्चापरोदोषः। तथाहि। यथा जयन्ती-व्यतिरिक्ता जन्माष्टम्युपलभ्यते, तथा जन्माष्टमी-व्यतिरिक्ताऽपि जयन्ती क्वापि वत्सरे उपलभ्येत। न त्वेवमुपलभ्यते। अतोव्रतभेद-पक्षोऽपि दुष्टएव।

अत्रोच्यते। न तावत्पारणोपवास-सांकार्य्य-लक्षण-दोषोऽस्ति। आघ्राणोदकपानादिना पारणे सम्पादितेऽप्युपवास-भङ्गाभावात्।

* केवलं रोहिण्यां,—इति मु॰ पुस्तके पाठः।

अन्यथा द्वादशीपारणा-त्रयोदशीनक्तयो: क्वचित् साङ्कर्य्यं केन वार्य्यते। साप्युपवासद्वय-नैरन्तर्य्यम्। रोहिणी-योग-सम्भवे जन्माष्टम्यामपि तत्रैव कर्त्तव्यत्वात्। सर्व्वत्र तिथिषु नक्षत्रयोगस्य* केवल-तिथेरुत्कृष्टत्वेन केवलायास्तिथेस्तत्रोपेक्षणीयत्वात्। अतएव, व्यतिरेकानुपलम्भोऽप्य-लङ्काराय, न तु दोषाय! जन्माष्टम्यारोहिणी-निरपेक्षत्वेन व्यतिरेक-उपलभ्यतां नाम। जयन्त्यान्तु योग-रूपत्वेन रोहिण्यामिवाष्टम्यामपि सापेक्षत्वेन कथं व्यतिरेकशङ्काऽवकाशः। तस्माद्व्रत-द्वय-पक्षे न कोऽप्य-स्ति दोषः। किञ्च। यदा रोहिणी-योगोऽस्ति, तदा जन्माष्टमी-जयन्त्योः सह प्रयोगस्यावश्यम्भावित्वेन जयन्तीव्रतएव जन्माष्टमीव्रतमन्तर्भवति। तस्मादपि नोपवास-द्वय-प्रसङ्गः। तदेवं व्रतभेदे दोषाभावात् तत्साधका-नाञ्च नाम-भेदादीनां पञ्चानां हेतूनां सद्भावाद्व्रतभेदएवावश्यमभ्युपेयः।

अतैक्यभ्रमस्तु तयोरुक्तयुक्त्यनुसन्धानाभावादष्टम्युपवास-सादृश्याच्च केषाञ्चिद्वदेति। सादृश्यञ्च गुण-विकृतित्वादाश्रयाश्रयि-भावाच्च सम्भा-व्यते। यथा, दर्शयागस्य गुणविकृतिः साकंप्रस्थायीयको यागः। तत्र, दर्शयागे यावन्तोऽङ्गाङ्गि-विषयाः प्रयोगास्ते सर्व्वेऽपि साकंप्रस्थायीये विद्यन्ते। भेदस्तु स्वल्पएव भवति। दर्शयागे साम्नाय्यहविषोर्द्धिप-यसोः पृथगवदानम्। साकंप्रस्थायीये तु सहैव प्रस्थानम्। एतावता भेदेन गुणविकृतिरित्यभिधीयते। तथा, अग्निष्टोमस्य गुणविकृतिरुक्थ्यः। अग्निष्टोमे द्वादश स्तोत्राणि, उकथ्ये त्वधिकानि त्रीणि। ततोगुणाधि-क्याद्गुणविकृतित्वम्। एवमत्रापि जन्माष्टम्यामुपवासोऽनुष्ठेयः, जयन्त्यान्तु दानादिरधिकोगुणः। अतः सा गुणविकृतिः।

* तिथिष्वम्भ्ययोगस्य, इति मु० पुस्तके पाठः।

आश्रयाश्रयिभावश्च ज्योतिष्टोमे तदङ्गावबद्धोपासने* दृष्टः। तत्र ज्योतिष्टोमश्राश्रयः, तस्याङ्गान्युक्थ्योद्गीथानि। तत्रोक्थं नाम वह्वृचाध्यायिना होत्रा शस्यमानमाज्य-मरुत्वतीय-निष्कैवल्यादिनामकं शस्त्रम्। तच्चोक्थ्यमाश्रित्य वह्वृचब्राह्मणोपनिषद्युपासनानि विहितानि। तथा च श्रुतिः। "उक्थ्यमुक्थ्यमिति वै प्रजावदन्ति तदिदमेवोक्थ्यमियमेव पृथिवी"—इति। "अहमुक्थ्यमस्मीति विद्यात्"—इति च। उद्गीथोनाम सामवेदिनोद्गात्रा यागे गीयमानः साम्नोभाग-विशेषः। तच्चोद्गीथमाश्रित्य च्छान्दोग्योपनिषद्युपासनानि विहितानि। "ओमित्येतदक्षरमुद्गीथमुपासीत"—इति। एवं प्रकृतेऽपि जन्माष्टमीव्रते येयं श्रावणकृष्णाष्टमी तामाश्रित्य रोहिणी-योग-निमित्तं दानादिकं जयन्तीव्रते विधीयते। अतोगुण विकृतित्वेनाश्रयाश्रयिभावेन च सादृश्यसद्भावादनयोर्व्रतयोरैक्यभ्रमोमन्दबुद्धेर्जायतां नाम। प्रमाण-न्यायदर्शिभिस्तु सर्वथैव व्रत-भेदोऽङ्गीकर्त्तव्यः,—इति सिद्धम्।

यदेतद्विचारत्रयं पूर्वमुपक्षिप्तं; व्रत-भेदे तिथि-निर्णये वेधे च इति। तत्र व्रतभेदोनिर्णीतः। अथ तिथिर्निर्णेतव्या, तन्निर्णयस्य वेधाधीनः, अतोवेधः पूर्वमभिधीयते। तिथ्यन्तरस्यैकएव प्रायेण कर्मकालत्वादुदयास्तमय-वेलायान्त्रिमुहूर्त्त-वेधः सामान्येन निरूपितः। पश्चम्यान्तु विशेषः षण्मुहूर्त्त-वेधोदर्शितः। जन्माष्टम्याजयन्त्याश्च रात्रि-प्रधानत्वाद्रात्रि-योगोऽत्र प्रशस्तः। एतच्च जावालि-वृद्धगौतमाभ्यां दर्शितम्,—

* तदङ्गावबद्धोपासने च, इति वि० पुस्तके पाठः।

"अहःसु तिथयः पुण्याः कर्मानुष्ठानतोदिवा।
नक्तादिव्रतयोगेषु रात्रियोगोविशिष्यते"—इति।

यद्यप्युपवासव्रतत्वादहनि रात्रौ च मुख्यत्वं युक्तितः सामर्थ्यसिद्धं, तथाप्यर्द्धरात्रस्य* मुख्यकालत्वमुक्तं वसिष्ठसंहितायाम्,—

"अष्टमी रोहिणी-युक्ता निशार्द्धे दृश्यते यदि।
मुख्यकालइति ख्यातस्तत्र जातोहरिः स्वयम्"—इति।

एवं सत्यर्द्धरात्रसद्भावएवात्र कर्म-काल-व्याप्तिरित्यभिधीयते। तदेवाभिप्रेत्य विष्णुरहस्ये दृश्यते,—

"रोहिण्यामर्द्धरात्रे तु यदा कृष्णाष्टमी भवेत्।
तस्यामभ्यर्चनं शौरेर्हन्ति पापं त्रिजन्मजम्"—इति।

एतस्मिन्नर्द्धरात्रे कियत्परिमाणमपेक्षितमित्यपेक्षायामादित्यपुराणे† दर्शितम्,—

"अर्द्धरात्रादधश्चोर्द्ध्वं कलयाऽपि यदा भवेत्।
जयन्ती नाम सा प्रोक्ता सर्व-पाप-प्रणाशिनी"—इति।

पराशरसंहितायामपि,—

"सिंहेऽर्के रोहिणी-युक्ता नभः-कृष्णाष्टमी यदि।
रात्र्यर्द्ध-पूर्वापर-गा जयन्ती कलयाऽपि च"—इति॥

रात्रेरर्द्धं रात्र्यर्द्धं, पूर्वश्चापरश्च पूर्वापरे, रात्र्यर्द्धं च ते पूर्वापरे च

---

* युक्तितः कल्पयितुं सामर्थ्यसिद्धं, तथापि वेधेऽर्द्धरात्रस्य,—इति वि॰ पुस्तके पाठः।

† आदिपुराणे, इति वि॰ पुस्तके पाठः।

इति राच्यर्द्धपूर्व्वापरे, तयोर्गच्छति वर्त्तते,—इति राच्यर्द्धपूर्व्वापरगा। घटिकायाश्चशीत्यधिकशततमोभागः कला,

"अष्टादश निमेषास्तु काष्ठा त्रिंशत्तु ताः कलाः।

तास्तु त्रिंशत्चणस्ते तु मुहूर्त्तोद्वादशास्त्रियाम्"—इत्यमरः।

तथा च, पल-तृतीयोभागः कला भवति*। तावता परिमाणेन पूर्व्वार्द्धावसाने उत्तरार्द्धादौ च वर्त्तमाना ग्रहीतव्या। खण्डतिथि-रूपा कृष्णाष्टमी द्विविधा; पूर्व्वेद्युः सप्तमी-युक्ता, परेद्युर्नवमी-युक्ता च"—इति। तत्र, सप्तमी-युक्तायां रात्रि-पूर्व्वार्द्धावसाने कला-सद्भावोविधीयते। उत्तरार्द्धादौ स्वतः सिद्धत्वेनाविधेयत्वात्। तद्विपर्य्ययेण नवमी-युक्तायामुत्तरार्द्धादौ कला-सद्भावोविधीयते। तदा पूर्व्वार्द्धावसाने स्वतः सिद्धत्वादनुवादः †। पूर्व्वार्द्धावसान-कलायाः सप्तमी-युत-विषयत्वं विष्णुधर्म्मोत्तरे स्पष्टमभिहितम्,—

"रोहिणी-सहिता कृष्णा मासि भाद्रपदेऽष्टमी।

सप्तम्यामर्द्धरात्राधः कलयाऽपि यदा भवेत्॥

तत्र जातोजगन्नाथः कौस्तुभी हरिरीश्वरः।

तमेवोपवसेत् कालं कुर्य्यात्तत्रैव जागरम्"—इति।

इयमष्टमी कृष्णपक्षादि-मास-विवक्षया भाद्रपदे भवति। सैवाष्टमी शुक्लपक्षादि-मास-विवक्षया श्रावणे भवति। अतएव योगीश्वरः,—

"रोहिणी-सहिता कृष्णा मासे च श्रावणेऽष्टमी।

---

* अष्टादश,—इत्यारभ्य, कला भवति,—इत्यन्तोग्रन्थः वि॰ पु॰ नास्ति।

† नास्त्ययमंशः मु॰ पुस्तके।

अर्द्धरात्रादधश्चोर्द्ध्वं कलयाऽपि यदा भवेत्॥
जयन्ती नाम सा प्रोक्ता सर्व-पाप-प्रणाशिनी"—इति।

कलायाश्चातिसूक्ष्मत्वेन दुर्लक्ष्यत्वात् मएव पक्षान्तरमाह,—

"अर्द्धरात्रादधश्चोर्द्ध्वं एकार्द्ध-घटिकाऽन्विता।
रोहिणी चाष्टमी ग्राह्या उपवास-व्रतादिषु"—इति।

एका चार्द्धघटिका चैकार्द्धघटिके, ताभ्यामन्विता। कलामपेक्ष्यार्द्ध घटिका स्थूला, तामपेक्ष्य घटिका स्थूला। तत्रायमर्थः सम्पद्यते। पूर्वभागावमानएका घटिका, उत्तरभागादौ चैका, मिलित्वा तन्निशीथ शब्दवाच्यं मुहूर्त्तम्। तावत्परिमाणं सर्वैरपि सुलक्ष्यत्वान्मुख्यः कल्पः, तदसम्भवेऽर्द्धघटिकाऽन्वेष्टव्या, तस्याप्यसम्भवे कलेति। तत्र मुख्यं पक्षमभिप्रेत्य भविष्योत्तरे, 'निशीथे कृष्णपक्षगे'—इत्युक्तम्। तच्च वचनं साकल्येन पूर्वमेवोदाहृतम्।

अत्र, जयन्त्यां चन्द्रार्घ्यस्यावश्यकर्त्तव्यत्वात्तस्य च चन्द्रोदयकालीनत्वान्निशीथे यागः* प्रशस्तः। एतदेव विष्णुधर्मोत्तरेऽभिहितम्,—

"अर्द्धरात्रे तु योगोऽयन्तारापत्युदये तथा।
नियतात्मा शुचिः स्नातः पूजां तत्र प्रवर्त्तयेत्"—इति।

सोऽयमर्द्धरात्रयोगोमुख्यः कल्पः। यस्तु कृत्स्नाहोरात्रयोगः, सोऽयं मुख्यतरः। यश्च यदाकदाचिदोपयोगः सोऽनुकल्पः। स च वशिष्ठसंहितायां दर्शितः,—

"अहोरात्रं तयोर्योगोह्यसम्पूर्णो भवेद्यदि।
मुहूर्त्तमप्यहोरात्रे योगश्चेत्तामुपोषयेत्"—इति।

* निशीथयोगः,—इति मु० पुस्तके पाठः।

पुराणान्तरेऽपि,—

"रोहिणी च यदा कृष्णपक्षेऽष्टम्यां द्विजोत्तम ।

जयन्ती नाम सा प्रोक्ता सर्व-पाप-हरा तिथिः ॥

वासरे वा निशायां वा यत्र स्वल्पाऽपि रोहिणी ।

विशेषेण नभोमासे सैवोपोष्या मनीषिभिः"—इति ।

योऽयं जयन्तीव्रते योग-निर्णयः, सएव जन्माष्टमी-व्रतेऽपि द्रष्टव्यः। यस्मिन् वत्सरे योगोनास्ति, तस्मिन् वत्सरे जन्माष्टमी-व्रतमेकमेव प्रवर्त्तते। तत्रापि नेतराष्टमीवद्दिवसे वेधः किन्त्वर्द्धरात्रवेधएव । तथा च तस्मिन्नेव पुराणान्तरे,—

"दिवा वा यदि वा रात्रौ नास्ति चेद्रोहिणीकला ।

रात्रि-युक्तां प्रकुर्वीत विशेषेणेन्दु-संयुताम्"—इति ।

अन्यत्रापि,—

"अष्टमी शिवरात्रिश्च ह्यर्द्धरात्रादधो यदि ।

दृश्यते घटिका या सा पूर्व-विद्धा प्रकीर्त्तिता"—इति ।

इति वेधोनिरूपितः ।

---

## अथ ग्राह्या तिथिर्निरूप्यते ।

सा च संवत्सर-भेदेन द्विधा भवति ; रोहिणी-रहिता रोहिणी-युक्ता चेति । तत्र या रोहिणी-रहिताऽष्टमी, साऽपि द्विविधा ; शुद्धा सप्तमी-विद्धा चेति । सूर्य्योदयमारभ्य प्रवर्त्तमानाऽष्टमी शुद्धा, निशीथादर्वाक् सप्तम्या कियत्याऽपि युक्ता विद्धा। शुद्धाऽपि पुनर्निशीथ-व्याप्त्यव्याप्तिभ्यां द्विविधा। तत्र निशीथ-व्यापिनी जन्माष्टमी

व्रते मुख्या, 'विशेषेणेन्दु-संयुताम्"—इति वचनात्। निशीथ-व्याप्ति-रहिताऽपि रात्रियुक्ता*, 'रात्रि-युक्तां प्रकुर्वीत'—इति वचनेन ग्रहीतव्या भवति।

ननु, पूर्वेद्युर्निशीथादूर्ध्वमारभ्य परेद्युर्निशीथादर्वाग्या समाप्यते, तस्याउभयत्र रात्रिसंबन्धित्वात् कुत्रोपवासइति चेत्। परेद्युरिति ब्रूमः। उभयत्र निशीथ-व्याप्त्यभावस्य रात्रि-संबन्धस्य च तुल्यत्वेऽपि परेद्युः प्रातः सङ्कल्पकालमारभ्य वर्त्तमानतया प्राशस्त्यं द्रष्टव्यम्।

सप्तमी-विद्धाऽपि त्रिविधा; पूर्वेद्युरेव निशीथ-व्यापिनी, परेद्युरेव निशीथ-व्यापिनी, उभयत्र व्यापिनी चेति। तत्र, प्रथम-द्वितीययोः पक्षयोः निशीथ-व्याप्तिः प्रयोजकत्वेन या निशीथ-व्यापिनी, सा, 'विशेषेणेन्दु-संयुताम्"—इति वचनेन ग्रहीतव्या भवति। या तु दिन-द्वयेऽपि निशीथ-व्यापिनी, तस्याउभयत्र निशीथ-योगस्य रात्रि-योगस्य च तुल्यत्वान्नानेन वचनेन निर्णयः सम्भवति। नापि, 'कृष्ण-पक्षेऽष्टमी चैव'—इत्यादिभिरष्टमीमात्रमुपजीव्य प्रवृत्तैर्निर्णेतुं शक्यते, तेषामष्टवेध-विषयत्वात्। अन्यथा, व्रतान्तरेष्वपि निशीथ-वेधः प्रसज्येत। तस्मान्न्यायः परिशिष्यते। न्यायश्च परेद्युरुपवासं प्रापयति। सङ्कल्प-कालमारभ्य तिथि-सद्भावात्। न च, साकल्याभिधायि-वचनेन पूर्वेद्युरपि सङ्कल्प-काले तिथिरस्तीति शङ्कनीयम्। तस्या मुख्य-तिथित्वाभावात्। किञ्च,

"सा तिथिः सकला ज्ञेया यस्यामस्तमितो रविः."—

---

* रात्रियुक्ता,—इति नास्ति मु० पुस्तके।

इति वचनं निशीथ-व्यापिनीमष्टमीं न विषयीकरोति। तस्मात्परेद्युरेवोपवासः।

तदेवं चतुर्विधा रोहिणी-रहिताऽष्टमी निर्णीता। अथ रोहिणी-सहिताऽष्टमी निर्णीयते। साऽपि चतुर्विधा; शुद्धा, विद्धा, शुद्धाऽधिका, विद्धाऽधिका चेति। तत्र शुद्धायां, सम्पूर्ण-योगो निशीथ-योगो यत्किञ्चिन्मूहूर्त्त-योगश्चेति त्रैविध्यं भवति। एवं विद्धायामपि द्रष्टव्यम्। एतेषु षट्सु भेदेषु दिनान्तरे योगाभावादुपवासे सन्देहो-नास्ति। किन्तु केवलं योग-तारतम्यात् प्राशस्त्य-तारतम्यं भवति। यत्किञ्चिन्मूहूर्त्त-योगः प्रशस्तः, अर्द्धरात्र-योगः प्रशस्ततरः, सम्पूर्ण-योगः प्रशस्ततमः। सर्वेष्वपि योगेषु योगमुपजीव्योपवासोविहितोविष्णुरहस्ये,—

"प्राजापत्यर्क्ष-संयुक्ता कृष्णा नभसि चाष्टमी।
मुहूर्त्तमपि लभ्येत सोपोष्या सुमहाफला॥
मुहूर्त्तमप्यहोरात्रे यस्मिन् युक्तं हि दृश्यते।
अष्टम्यां रोहिणी-ऋक्षन्तां सपुण्यामुपावसेत्"—इति।

शुद्धाऽधिका तु सूर्य्योदयमारभ्य प्रवृत्ता परेद्युः सूर्य्योदयमतिक्रम्यैषद्वर्द्धते*। सा च त्रिविधा; पूर्वद्युरेव रोहिणी-युक्ता, परेद्युरेव-रोहिणी-युक्ता, दिन-द्वयेऽपि रोहिणी-युक्ता चेति। तत्राद्ययोर्द्वयोः पक्षयोर्नास्त्युपवासे सन्देहः। रोहिणी-युक्तायाद्वितीयायाः कोटेरभावात्। तृतीय-पक्षे तु रोहिणी-योगस्योभयत्र समानत्वेऽपि गुणाधिक्यात् पूर्वैवोपोष्या। गुणाधिक्यञ्च दर्शयिष्यते।

---

* सूर्य्योदयमतिक्रम्यापि वर्त्तते,—इति रवि० पुस्तके पाठः।

येयमत्रोपोष्यत्वेनोक्ता पूर्वा तिथिः, साऽपि रोहिणी-योग-भेदात्त्रिधा भिद्यते; अष्टमीवत् सूर्य्योदयमारभ्य प्रवृत्ता रोहिणी कदाचित् परेद्युरपि कियती वर्द्धते, कदाचित् पूर्व्वद्युर्निशीथमारभ्य रोहिणी प्रवर्त्तते, कदाचिन्निशीथादूर्ध्वमारभ्य प्रवर्त्तते। तत्र प्रथमपक्षे सम्पूर्ण-योगत्वमेको गुणः। सङ्कल्प-कालमारभ्य कृत्स्न-कर्म-काल-व्याप्तिरपरो गुणः। निशीथ-व्याप्तिस्तृतीयो गुणः। नचैते त्रयो गुणाः परेद्युः सम्भवन्ति। द्वितीयपक्षे निशीथे जयन्ती-सद्भावो गुणः। न च परेद्युः सोऽस्ति। तृतीयपक्षे दिन-द्वयेऽपि निशीथे योगो नास्ति*। पूर्व्वेद्युः केवलाष्टमी, परेद्युः केवल रोहिणी[१]। तत्राष्टम्याः प्राधान्यात् प्राबल्यमभ्युपेयम्। सर्व्वत्र हि जयन्ती-वाक्येषु 'रोहिणी-सहिताऽष्टमी'—इति व्यवहारादष्टमी-सहिता रोहिणीति व्यवहाराभावाच्च तिथि-नक्षत्रयोः क्रमेण प्रधानोपसर्ज्जनभावोऽवगन्तव्यः। अतो गुणाधिक्याच्छुद्धाऽधिका पूर्व्वैवोपोष्या।

निशीथादर्व्वाक् सप्तम्या युक्ता परेद्युरपि विद्यमाना विद्धाऽधिका। नन्वत्र निशीथवेधोग्राह्य इत्युक्तम्। वाढम्। वेध्याया अष्टम्या निशीथे सद्भावोऽत्र निशीथ-वेधः। न तु वेधिकायाः सप्तम्याः निशीथे सद्भावः। विद्धाऽधिकायामपि पक्ष-त्रयं, द्वयोः पक्षयोः सन्देहाभावश्च पूर्व्ववद्योजनीयः। तत्र, या पूर्व्वद्युरेव रोहिणी-युक्ता विद्धाऽधिका, तस्यामुपवासमादित्यपुराणं स्मर्य्यते,—

* निशीथे जयन्तीयोगो नास्ति,—इति वि॰ पुस्तके पाठः।

(१) निशीथे वर्त्तते,—इति शेषः। योगो नास्तीत्यस्य रोहिण्यष्टम्योर्योग इत्यर्थो बोध्यः।

"विना ऋक्षं न कर्त्तव्या नवमी-संयुताऽष्टमी ।

कार्य्या विद्धाऽपि सप्तम्या रोहिणी-संयुताऽष्टमी"—इति ।

विष्णुधर्मोत्तरेऽपि,—

"जयन्ती शिवरात्रिश्च कार्य्ये भद्रा-जयाऽन्विते ।

कृत्वोपवासन्तिथ्यन्ते तथा कुर्य्यात्तु पारणम्"—इति ।

गारुड़पुराणेऽपि,—

"जयन्त्यां पूर्वविद्धायामुपवासं समाचरेत् ।

तिथ्यन्ते वोत्सवान्ते वा व्रती कुर्वीत * पारणम्"—इति ।

या परेद्युरेव रोहिणी-युक्ता विद्धाऽधिका, तत्रोपवासः पूर्वतिथौ न युक्तः । रोहिणी-योगाभावात् । परेद्युस्तु तत्सद्भावात् पूर्वोदाहृतेन प्राजापत्यादिना विष्णुरहस्य-वचनेनोपवासो विधीयते । या तूभयत्र रोहिणी-युक्ता विद्धाऽधिका, साऽपि निशीथे जयन्तीयोगमपेक्ष्य चतुर्द्धा भिद्यते ; पूर्वेद्युरेव निशीथयोगवती†, परेद्युरेव तादृशी, उभयत्रापि तादृशी, उभयत्र निशीथ-योग-रहिता चेति । तत्र या पूर्वेद्युरेव निशीथ-योगवती, सा पूर्वोपोष्या । तदुक्तं पद्मपुराणे,—

"कार्य्या विद्धाऽपि सप्तम्या रोहिणी-सहिताऽष्टमी ।

तत्रोपवासं कुर्वीत तिथिभान्ते च पारणम्"—इति ।

अत्रावशिष्टेषु त्रिषु पक्षेषु परदिनएवोपवासः । तत्र दिनद्वयं निशीथ-योगमभिलक्ष्य ब्रह्मवैवर्त्ते पठ्यते,—

---

* प्रतिकुर्व्वीत,—इति वि० पुस्तके पाठः ।

† निशीथे योगवती,—इति मु० पुस्तके पाठः ।

"वर्जनीया प्रयत्नेन सप्तमी-संयुताऽष्टमी।
सा सर्चाऽपि न कर्त्तव्या सप्तमी-संयुताऽष्टमी॥
अविद्धायान्तु सर्चायां जातो देवकीनन्दनः"—इति।

यदा दिनद्वयेऽपि निशीथ-योगे * परत्रोपवासस्तदा किमुवक्तव्यं परेद्युरेव निशीथ-योगे।

दिनद्वयेऽपि निशीथ-योग-राहित्यं बहुधा जायते। तद्यथा, पूर्वेद्युर्निशीथादूर्द्धन्तिथि-नक्षत्र-द्वयं प्रवृत्तम्, तच्च परेद्युर्निशीथादर्वागेव समाप्तमित्येकः प्रकारः। पूर्वेद्युर्निशीथादर्वागेव नक्षत्रं अष्टमी तु निशीथादूर्ध्वं प्रवृत्ता, परेद्युर्निशीथादर्वाक् नक्षत्रं निवृत्तमित्यपरः†। अष्टमी निशीथादर्वाक् प्रवृत्ता ऋक्षञ्च निशीथादूर्ध्वं प्रवृत्तं परेद्युर्निशीथादर्वागेव समाप्तमिति तृतीयः‡। त्रिष्वप्येतेषु प्रकारेषु पर्वैवोपोष्या। दिनद्वयेऽप्यर्द्धरात्रयोग-विषये पूर्वमुदाहृतस्य 'वर्जनीया प्रयत्नेन'—इतिवचनस्यात्रापि सञ्चारयितुं शक्यत्वात्। किञ्च। प्रथम-प्रकारे न्यायोऽप्युपोद्बलकोऽस्ति। सङ्कल्प-कालमारभ्य तिथि-नक्षत्र-योगस्य बहुकाल-व्यापित्वात् प्राशस्त्यं द्रष्टव्यम्। द्वितीय-प्रकारे परेद्युरष्टमी-राहित्येऽपि नक्षत्र-योगस्याल्पत्वादनुपादेयत्वमित्याशङ्का न कर्त्तव्या। अतएव स्कन्दपुराणे पठ्यते,—

"सप्तमी-संयुताष्टम्यां भूत्वा ऋक्षं द्विजोत्तम।
प्राजापत्यं द्वितीयेऽह्नि मुहूर्त्तार्द्धं भवेद्यदि॥

* दिनद्वये निशीथयोगेऽपि,—इति वि० पुस्तके पाठः।
† अष्टमी तु निशीथादूर्द्ध प्रवृत्तेत्यपरः,—इति मु० पुस्तके पाठः।
‡ तृतीयः पक्षः,—इति मु० पुस्तके पाठः।

तदाष्टयामिकं ज्ञेयं प्रोक्तं व्यासादिभिः पुरा"—इति ।

तृतीय-प्रकारे परेद्युर्नक्षत्र-बाहुल्येऽप्यष्टमी-योगस्याल्पत्वादनुपादेय-त्वमित्याशङ्का भवति । सा च पद्मपुराणेन निवर्त्त्यते,—

"पूर्व-विद्धाऽष्टमी या तु उदये नवमी-दिने ।
मुहूर्त्तमपि * संयुक्ता सम्पूर्णा साऽष्टमी भवेत् ॥
कला काष्ठा मुहूर्त्तोऽपि यदा कृष्णाष्टमी तिथिः ।
नवम्यां सैव † ग्राह्या स्यात् सप्तमी-संयुता न हि"—इति ।

तदेवं जन्माष्टमी-भेदाजयन्ती-भेदाश्च निरूपिताः । तत्र जयन्ती-भेदेषूपवासदिने यदि सोमवारोबुधवासरोवा भवति, तदा फलाधिक्यं भवति । तदुक्तं पद्मपुराणे,—

"प्रेत-योनि-गतानान्तु प्रेतत्वं नाशितं नरैः ।
यैः कृता श्रावणे मासि अष्टमी रोहिणी-युता ॥
किं पुनर्बुधवारेण सोमेनापि विशेषतः ।
किं पुनर्नवमी-युक्ता कुलकोट्यास्तु मुक्तिदा"—इति ।

स्कन्दपुराणेऽपि,—

"उदयेचाष्टमी किञ्चिन्नवमी सकला यदि ।
भवेत्तु बुध-संयुक्ता प्राजापत्यर्क्ष-संयुता ॥
अपि वर्षशतेनापि लभ्यते यदि वा न वा ‡ "—इति ।

विष्णुधर्मोत्तरेऽपि,—

* मुहूर्त्तेनापि,—इति क० वि० पुस्तकयोः पाठः ।
† नवम्यां चैव,—इति मु० पुस्तके पाठः ।
‡ लभ्यते वाथवा नवा,— इति वि० पुस्तके पाठः ।

"अष्टमी बुधवारेण रोहिणी-सहिता यदा।
भवेत्तु मुनिशार्दूल, किं कृतैर्व्रत-कोटिभिः"—इति।

यथोक्त-रीत्या विहित-तिथावुपवासं कृत्वा परेद्युः पारणेनोपवासं समापयेत्। "पार तीर कर्म-समाप्तौ"—इत्यस्माद्धातोर्निष्पन्नः पारण-शब्दः। यद्यप्यसौ समाप्तिमात्रमभिदधाति, तथाप्युपवास-समाप्तावेव लोक-शास्त्रयोः प्रयोगात्पङ्कजादि-शब्दवद्योगरूढो द्रष्टव्यः[१]। तथा च योगरूढ्योपवासस्य चरमाङ्गं भोजनमभिधत्ते। अङ्गत्वञ्चोपवास-विधिवाक्येषु 'तिथिभान्ते च पारणम्'—इति विधानादवगन्तव्यम्। न च, रागप्राप्तस्य भोजनस्यानेन वचनेनोपवासाङ्ग-तिथि-नक्षत्र-शेष-योर्निषेधः क्रियते, न तु पारण-नामकं किञ्चिदङ्गं विधीयते,—इति शङ्कनीयम्। तथा सति पारण-शब्द-प्रयोगानुपपत्तेः। राग-प्राप्ते हि अभ्यवहरणे भोजनशब्दः। तत्र, पारणशब्देन राग-प्राप्त-भोजन-विवक्षायां * मुख्यार्थोबाधितः स्यात्। किञ्च, यदि पारणमङ्गं न स्यात्तदा प्रतिनिधि-विधानं नोपपद्यते। तद्विधानञ्च द्वादशी-प्रस्तावे देवलेन स्मर्यते,—

"सङ्कटे विषमे प्राप्ते द्वादश्यां पारयेत् कथम्।

* रागप्राप्तभोजनशब्दविवक्षायां,—इति त्रि० पुस्तके पाठः।

(१) यस्य शब्दस्यावयवशक्तिलभ्योऽर्थः समुदायशक्तिलभ्यस्यार्थोऽस्ति, सोऽयं योगरूढः। पङ्कजपदस्य हि पङ्कजनिकर्तृरूपोऽर्थोऽवयवशक्तिलभ्यः, समुदायशक्तिलभ्यस्त्वर्थः पद्मम्। एवं पारणशब्दस्यापि समाप्तिमात्रमवयवशक्तिलभ्योऽर्थः समुदायशक्तिलभ्यस्तूपवाससमाप्तिः। अर्थद्वयस्यान्वयबोधविषये प्रकारभेदो मतभेदश्चान्यत्र द्रष्टव्यः।

अद्भिस्तु पारणं कुर्य्यात् पुनर्भुक्तं न दोषकृत्"—इति ।

अतः पारण-शब्द-बलात् प्रतिनिधि-बलाच्च पारणस्याङ्गत्वं द्रष्टव्यम् । अतएवादित्यपुराणे,—

"पारणान्तं व्रतं ज्ञेयं व्रतान्ते तद्धि भोजनम्* ।

असमाप्ते व्रते पूर्वं नैव कुर्य्यात् व्रतान्तरम्"—इति ।

तच्च पारणमुपवास-दिनात्परदिने पूर्वाह्ने कर्त्तव्यम् ।

"उपवासेषु सर्वेषु पूर्वाह्ने पारणं भवेत्"—इति

देवल-स्मरणात् । एवं सामान्यतः पूर्वाह्ने पारण-प्राप्तौ क्वचिदपवादाय, 'तिथिभान्ते च पारणम्'—इत्यभिधीयते ।

शुद्धाधिकायां,—पूर्वेद्युरेव जयन्तीयोगः, उभयत्रापि जयन्तीयोगः,—इत्यनयोः पक्षयोः पूर्वेद्युरेवोपवास-विधानात्परेद्युः केवल-तिथेस्तिथि-नक्षत्रयोर्वा सद्भावात्तदन्ते पारणविधिः । तथा, शुधाधिका-विद्धाधिकयोरुभयोरपि यदा परेद्युरेव जयन्तीयोगस्तदा पर-तिथावुपवास-विधानात् पारण-दिने तिथ्यभावेऽपि कदाचित् नक्षत्रावशेष-सम्भवात्तदन्ते पारणं विधीयते । तिथेर्वा नक्षत्रस्य वा शेषकाले पारणं ब्रह्मवैवर्त्ते प्रतिषिध्यते,—

"अष्टम्यामथ रोहिण्यां न कुर्य्यात् पारणं क्वचित् ।

हन्यात्पुराकृतं कर्म उपवासार्जितं फलम् ॥

तिथिरष्टगुणं हन्ति नक्षत्रञ्च चतुर्गुणम् ।

तस्मात् प्रयत्नतः कुर्य्यात् तिथिभान्ते च पारणम्"—इति ।

स्कन्दपुराणेऽपि,—

* द्विजभोजनम्,—इति वि॰ पुस्तके पाठः ।

"तिथि-नक्षत्र-नियमे तिथि-भान्ते च पारणम्।

अतोऽन्यथा पारणे तु व्रत-भङ्गमवाप्नुयात्"—इति।

तिथि-भान्तश्च द्विविधः ; उभयान्तः, एकतरान्तश्चेति। दिन-द्वये जयन्तीयोगवत्यां शुद्धाधिकायां परदिने अष्टमी मुहूर्त्त-त्रयमाति-क्रामति। रोहिणी तु पूर्व्वेद्युर्निशीथादर्व्वाग्यदा कदाचित् प्रवृत्ता, तदनु-सारेण परेद्युः समाप्यते। तत्र यदि दिवैव समाप्येत, तदा तामतिक्रम्यैव पारणं कुर्य्यात्, उभयान्तस्य मुख्यत्वात्। यदि रात्रौ समाप्तिस्तदा तत्समाप्तिर्न प्रतीक्षणीया। रात्रिपारणस्य निषिद्धत्वात्। तथा च ब्रह्मवैवर्त्ते,—

"सर्व्वेष्वेवोपवासेषु दिवा पारणमिष्यते।

अन्यथा पुण्यहानिः स्यादृते धारण-पारणम्"—इति।

"अन्यतिथ्यागमो रात्रौ तामसस्तेजसो दिवा।

तामसे पारणं कुर्वंस्तामसीं गतिमश्नुते"—इति।

दिवा पारणं कुर्व्वन्नपि नाष्टमीवेलायां कुर्य्यात्। एकतरान्तस्याप्य-भावात्। अष्टमीमतिवाह्य रोहिण्यां वर्त्तमानायामपि पारणं कुर्य्यात्। अतएव नारदीये,—

"तिथि-नक्षत्र-संयोगे उपवासो यदा भवेत्।

पारणन्तु न कर्त्तव्यं यावन्नैकस्य संक्षयः॥

सांयोगिके व्रते प्राप्ते यत्रैकोऽपि वियुज्यते।

तत्रैव पारणं कुर्य्यादेवं वेदविदो विदुः"—इति।

पूर्व्वेद्युरेव निशीथे जयन्तीयोगवत्यां विद्धाधिकायां पारणदिने तिथिभान्तो बहुधा सम्भाव्यते; अहन्युभयान्त एकतरान्तो वा, रात्रा-

वेकतरान्त उभयान्तोवेति। तेषु चतुर्षु भेदेषु निर्णयः स्मर्य्यते,—

"तिथ्यृक्षयोर्यदा च्छेदो नक्षत्रान्तमथापिवा।

अर्द्धरात्रेऽपिवा कुर्य्यात् पारणञ्च परेऽहनि"—इति।

दिवसे यद्युभयान्तस्तदा पारणम्,—इति मुख्यः कल्पः। नक्षत्रान्तमित्यनेनैकतरान्तत्वं विवक्षितम्। सोऽयमनुकल्पः। यदि रात्रौ निशीथे* उभयान्तएकतरान्तोवा भवति, तदा दिवसे मुख्यानुकल्पयोरुभयोरप्यसम्भवाद्रात्रौ च पारणस्य निषिद्धत्वादर्थादुपवास-प्राप्तौ पारणस्य प्रतिप्रसवः क्रियते, 'अर्द्धरात्रेऽपिवा कुर्य्यात्'—इति। ननु पारणेऽष्टम्यन्तस्य प्रतीक्षणीयत्वेऽपि रोहिण्यन्तोन प्रतीक्षणीयः,

"याः काश्चित्तिथयः प्रोक्ताः पुण्यानक्षत्र-संयुताः।

ऋक्षान्ते पारणं कुर्य्यात् विना श्रवण-रोहिणीम्"—

इति स्मरणात्। मैवम्। 'नक्षत्रन्तु चतुर्गुणम्'—इति प्रत्यवायस्योदाहृतत्वात्। तस्मात्, 'विना श्रवण-रोहिणीम्'—इति वचनं केवलनक्षत्रोपवास-विषयम्, पूर्वोक्तानुकल्प-विषयं वेत्यवगन्तव्यम्। अशक्तस्य तिथि-नक्षत्रयोरनुवर्त्तमानयोरपि प्रातर्द्देवं सम्पूज्य क्रियमाणं पारणं न दुष्यति।

"तिथ्यन्ते वोत्सवान्ते वा व्रती कुर्वीत पारणम्"—

इति स्मरणात्।

इति जयन्तीनिर्णयः।



* निशीथादर्व्वाक,—इति वि० पुस्तके पाठः।

## अथ नवमी निर्णीयते।

सा च विधि-निषेधरूपाभ्यामन्वय-व्यतिरेकाभ्यां पूर्वविद्धैव ग्राह्या। तद्विधिश्च युग्मादिशास्त्रे "वसु-रन्ध्रयोः"—इति पठ्यते। पद्मपुराणेऽपि,—

"अष्टम्या नवमी विद्धा नवम्या चाष्टमी युता।

अर्द्धनारीश्वरप्राया उमामाहेश्वरी तिथिः"—इति।

भविष्यत्पुराणे द्वादशीकल्पेऽपि,—

"नवम्या सह कार्य्या स्यादष्टमी नवमी तथा"—इति।

निषेधस्तु पद्मपुराणेऽभिहितः*,—

"न कार्य्या नवमी तात, दशम्या तु कदाचन"—इति।

सेयं नवमी भविष्यत्पुराणोक्त-दुर्गाव्रतादौ द्रष्टव्या। ननु, कृष्ण-नवम्याः पूर्व-विद्धत्वेऽपि शुक्लनवमी पर-विद्धाऽस्तु,

"शुक्लपक्षे तिथिर्ग्राह्या यस्यामभ्युदितो रविः"—

इति वचनात्। मैवम्। पूर्वोक्तेषु वचनेषु दशमी-विद्धायाः साक्षा-न्निषेधात्। ननु, तस्य निषेधस्य सामान्यरूपत्वात् कृष्णपक्षे सङ्को-चोऽस्त्विति चेत्। न। सङ्कोच-हेतोरभावात्, भवदुदाहृतस्यापि सामान्यरूपत्वात्। तस्मात्पक्षयोरुभयोरपि पूर्वविद्धैव ग्राह्या। राम-नवमी तु,—

"चैत्र-शुक्ला† तु नवमी पुनर्वसु-युता यदि।

सैव मध्याह्न-योगेन महापुण्यतमा भवेत्।

---

* स्कान्दपुराणे दर्शितः,—इति वि० पुस्तके पाठः।

† शुद्धा—इति मु० पुस्तके पाठः।

नवमी चाष्टमी-विद्धा त्याज्या विष्णुपरायणैः ।
उपोषणं नवम्यां वै दशम्यामेव पारणम्*"—

इति वचनादष्टमी-विद्धा सनक्षत्राऽपि नोपोष्या । उत्तरदिने मध्याह्नयोगे तूत्तरैव, उभयत्र तदयोगे तूत्तरैव† इत्याहागस्त्यः,—

"चैत्र-मास-नवम्यान्तु जातोरामः स्वयं हरिः ।
पुनर्वस्वृक्ष-संयुक्ता सा च पूर्वाह्णगामिनी ॥
श्रीरामनवमी प्रोक्ता कोटिसूर्य्यग्रहात्मिका ।
सैव मध्याह्न-योगेन सर्व्व-काम-फल-प्रदा"—इति ।

सर्व्व-वाक्य-पर्य्यालोचनया नक्षत्र-रहिताऽपि मध्याह्नव्यापिनी ग्राह्येति सिद्धम्‡ ।

इति नवमीनिर्णयः ।

---

## अथ दशमी निर्णीयते ।

तस्याश्च तिथ्यन्तरवद्धेयोपादेय-विभागोनास्ति । तिथ्यन्तरे तु काचित् पूर्व-विद्धा ग्राह्या काचिदुत्तर-विद्धा । न तु तथा दशम्यां किञ्चिन्नियामकमस्ति । एतदेवाभिप्रेत्याङ्गिराश्चाह,—

"सम्पूर्णा दशमी ग्राह्या परया पूर्वयाऽथवा§ ।

---

* दशम्यां पारणं भवेत्,—इति मु० पुस्तके पाठः ।

† उभयत्र तदयोगे तूत्तरैव,—इति क० पुस्तके नास्ति ।

‡ उत्तरदिने मध्याह्नयोगे,—इत्यारभ्य, ग्राह्येति सिद्धम्,—इत्यन्तं मु० पुस्तके न दृश्यते ।

§ पिवा,—इति वि० पुस्तके पाठः ।

युक्ता न दूषिता यस्मात् तिथिः सा सर्वतोमुखी"—इति।

यथा सम्पूर्णा दोष-रहिता, तथा विद्धाऽपि। 'प्रतिपत्सम्मुखी कार्य्या'—इत्यादौ तिथेर्मुखं पूज्यमुक्तम्। दशम्यास्तु मूलाग्रयोर्द्वयोरपि मुखत्वात् पूज्यत्वमुभयत्र समानम्।

एवं स्थिते सत्यत्रेदं चिन्त्यते। किं पुरुषेच्छया पूर्वोत्तर-विद्धयोरन्यतरा ग्राह्या, किं वा नियामकं शास्त्रमस्तीति। तत्र, न तावच्छास्त्रं किञ्चित् पश्यामः। प्रत्युत, सर्वतोमुखत्व-कथनात् पूर्वोत्तर-विद्धयोरुभयोः समबलत्वं शास्त्रेण प्रतीयते। अतः 'व्रीहिभिर्य्यजेत यवैर्वा'—इत्यादिवदैच्छिकोविकल्पोऽवगन्तव्यः। न चाष्टदोष-ग्रस्तत्वा-द्विकल्पो न युक्तः,—इति शङ्कनीयम्। गत्यन्तराभावेन दोष-ग्रस्तस्याप्यवश्याश्रयणीयत्वात्। तदुक्तमाचार्य्यैः,—

"एवमेषोऽष्टदोषोऽपि[1] यद्व्रीहि-यव-वाक्ययोः।
विकल्पआश्रितस्तत्र गतिरन्या न विद्यते"—इति।

तस्मादैच्छिकोविकल्पः,—इति प्राप्ते ब्रूमः। अस्त्यत्र वचनं व्यवस्थापकम्। तथा च मार्कण्डेयः,—

"शुक्लपक्षे तिथिर्ग्राह्या यस्यामभ्युदितोरविः।
कृष्णपक्षे तिथिर्ग्राह्या यस्यामस्तमितोरविः"—इति।

---

(१) इच्छया व्रीहावुपादीयमाने प्राप्तयवप्रामाण्यस्य परित्यागः, अप्राप्तयवाप्रामाण्यस्य प्रकल्पनम्, प्रयोगान्तरे त्विच्छया यवे उपादीयमाने परित्यक्तयवप्रामाण्यस्योज्जीवनम्, स्वीकृतयवाप्रामाण्यस्य हानम्,—इति यवे चत्वारो दोषाः। एवं व्रीहावप्युक्तक्रमेण चत्वारः। इत्यष्टौ दोषा इच्छाविकल्पे। तदुक्तम्। "प्रमाणत्वाप्रमाणत्वपरित्यागप्रकल्पनात्। तदुज्जीवनहानाभ्यां द्वयोरित्यष्टदोषता"—इति।

नन्वनेन वचनेन पक्ष-भेदेन विकल्पश्चाश्रितः, तथा सति दोषाष्टकस्य[१] तादवस्थ्यादैच्छिकविकल्पएव कुतोन स्वीक्रियते,—इति चेत्। नैवम्। सति व्यवस्थापके शास्त्रे पुरुषेच्छायाअप्रसरात्। अतएव स्मर्य्यते,—

"उदासीने तु शास्त्रार्थे पुरुषेच्छा नियामिका"—इति।

ननु, पक्ष-भेदेन व्यवस्थाऽनुपपन्ना, स्कन्दपुराणे पूर्व-विद्धायाएव ग्राह्यत्वाभिधानात्,

"दशमी चैव कर्त्तव्या सदुर्गा द्विज-सत्तम"—इति।

सदुर्गा नवमी-मिश्रा। नैवम्। पक्ष-द्वये पूर्व-विद्धा-स्वीकारे 'पूर्वया परयाऽथवा'—इति पर-विद्धा-विधानस्य निरवकाशत्व-प्रसङ्गात्। नवमी-मिश्रत्व-वचनन्तु कृष्णपक्षे चरितार्थम्। ननु, पर-विद्धा-निषेधो ब्रह्मवैवर्त्ते पठ्यते,—

"प्रतिपत् पञ्चमी भूता सावित्री वटपूर्णिमा।
नवमी दशमी चैव नोपोष्या पर-संयुता"—इति।

---

(१) 'संपूर्णादशमीकार्य्या पूर्व्वया परयाथवा'—इति वचने हि विधिद्वयं पर्य्यवस्यति। पूर्व्वया युता कार्य्या,—इति, परया युता कार्य्या,—इति च। विधिद्वयस्य पक्षभेदेन व्यवस्थायां पूर्व्वया युतेत्यस्य कृष्णपक्षे परया युतेत्यस्य च शुक्लपक्षे विषयोवाच्यः। तथा च सति पूर्व्वया युतेत्यस्य विधेः प्राप्तस्यापि प्रामाण्यस्य शुक्लपक्षे परित्यागः, अप्राप्तस्य चाप्रामाण्यस्य कल्पनम्। तथा, कृष्णपक्षे तस्यैव विधेः परित्यक्तप्रामाण्यस्योज्जीवनम्, कल्पिताप्रामाण्यस्य च हानमिति पूर्व्वया युता,—इत्यत्र चत्वारोदोषाः। एवं रीत्या 'परया युता'—इत्यत्रापि चत्वार इत्यष्टौ दोषाव्यवस्थितेऽपि विकल्पे भवन्तीति ध्येयम्।

कूर्मपुराणेऽपि,—

"नन्दा-विद्धा तु या पूर्णा द्वादशी मकरे सिता।

भृगुना नष्टचन्द्रा च एतावै निष्फलाः स्मृताः"—इति।

अत्रैकादश्यानन्दात्वात् दशम्याश्च पूर्णत्वादेकादशी-विद्धा दशमी निष्फला,—इति गम्यते। बाढम्। अयमपि निषेधः पूर्वोक्त-न्यायेन कृष्णपक्ष-विषयतया योजनीयः। तस्मात् पूर्वोत्तर-विद्धयोर्दशम्योः पक्ष-भेदेन व्यवस्था द्रष्टव्या।

इति दशमीनिर्णयः।

## अथैकादशी निर्णीयते।

तत्रैकादश्यामुपवासो दानादिकञ्चेत्युभयं विहितम्। उपवासो-जयन्तीवन्नित्य-काम्य-रूपः। द्वैविध्यञ्च तस्य, द्विविध-प्रमाण-बलादव-सीयते। उपवास-विधि-वाक्येषु नित्यशब्द-सदाशब्दादीनां नित्यत्व-साधनानां स्मरणान्नित्यत्व-सिद्धिः। तानि च साधकानि संग्रहकारेण संगृहीतानि,—

"नित्यं सदा यावदायुर्न कदाचिदतिक्रमेत्—

इत्युक्त्याऽतिक्रमे* दोष-श्रुतेस्त्याग-चोदनात्॥

फलाश्रुतेर्वीप्सया च तन्नित्यमिति कीर्त्तितम्"—इति।

अत्र च नित्यशब्दादीन्यष्टौ नित्यत्व-साधकानि। नित्यशब्दस्तूदा-हृतो गारुड़पुराणे,—

* उपेत्यातिक्रमे,—इति वि॰ पुस्तके पाठः।

"उपोष्यैकादशी नित्यं पक्षयोरुभयोरपि"—इति।

सदाशब्दउक्तः सनत्कुमारसंहितायाम्,—

"एकादशी सदोपोष्या पक्षयोः शुक्ल-कृष्णयोः"—इति।

यावदायुःशब्द उक्तोविष्णुरहस्ये,—

"द्वादशी न प्रमोक्तव्या* यावदायुः सुवृत्तिभिः"—इति।

आग्नेयपुराणे,—

"उपोष्यैकादशी राजन्, यावदायुः सुवृत्तिभिः"—इति।

अतिक्रम-निषेधः कण्वेन दर्शितः,—

"एकादश्यामुपवसेन्न कदाचिदतिक्रमेत्"—इति।

विष्णुनाऽपि,—

"एकादश्यां न भुञ्जीत कदाचिदपि मानवः"—इति।

अकरणे दोषमाह सनत्कुमारः,—

"न करोति यदामूढ़एकादश्यामुपोषणम्।
स नरोनरकं याति रौरवन्तमसाऽऽवृतम्।
एकादश्यां मुनिश्रेष्ठ, योभुङ्क्ते मूढ़चेतनः।
प्रतिमासं स भुङ्क्ते तु किल्बिषं स्यादिविट्समम्॥
निष्कृतिर्मद्यपस्योक्ता धर्मशास्त्रे मनीषिभिः।
एकादश्यन्नकामस्य निष्कृतिः क्वापि नोदिता॥
मद्यपानान्मुनिश्रेष्ठ, पातैव नरकं व्रजेत्।
एकादश्यन्नकामस्तु पितृभिः सह मज्जति"—इति।

---

* एकादशी न मे त्याज्या,—इति वि॰ पुस्तके पाठान्तरम्।

नारदीये,—

"यानि कानि च पापानि ब्रह्महत्या-समानि च।

अन्नमाश्रित्य तिष्ठन्ति सम्प्राप्ते हरिवासरे॥

तानि पापान्युपाश्नाति भुञ्जानोहरिवासरे"—इति।

स्कान्दे,—

"मातृहा पितृहा वाऽपि भ्रातृहा गुरुहा तथा।

एकादश्यान्तु योभुङ्क्ते पक्षयोरुभयोरपि"—इति।

अकरणद्वारसमापनेऽपि दोषउक्तोविष्णुरहस्ये,—

"समादाय विधानेन द्वादशीव्रतमुत्तमम्।

तस्य भङ्गं नरः कृत्वा रौरवं नरकं व्रजेत्॥

परिगृह्य व्रतं सम्यगेकादश्यादिकं नरः।

न समापयते तस्य गतिः पापीयसी भवेत्"—इति।

नारदीयेऽपि,—

"द्वादशीव्रतमादाय व्रतभङ्गं करोति यः।

द्वादशाब्दं व्रतं चीर्णं निष्फलं तस्य जायते"—इति।

अत्याग-चोदना दर्शिता विष्णुरहस्ये,—

"परमापदमापन्नोहर्षे वा समुपस्थिते।

सूतके मृतके चैव न त्यजेद्द्वादशीव्रतम्"—इति।

फलाश्रवणञ्च केषुचिद्वचनेषु विस्पष्टम्। तत्र कात्यायनः,—

"एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि"—इति।

स्कान्देऽपि,—

"उपोष्यैकादशीं सम्यक् पक्षयोरुभयोरपि"—इति।

कूर्मपुराणेऽपि,—

"वदन्तीह पुराणानि भूयोभूयोवरानने।

न भोक्तव्यं न भोक्तव्यं सम्प्राप्ते हरिवासरे"—इति।

वीप्सामाह सनत्कुमारः,—

"पक्षे पक्षे च कर्त्तव्यमेकादश्यामुपोषणम्"—इति।

नारदोऽपि*,—

"नित्यं भक्ति-समायुक्तैर्नरैर्विष्णु-परायणैः।

पक्षे पक्षे च कर्त्तव्यमेकादश्यामुपोषणम्"—इति।

तदेवं नित्यशब्दादिभिर्हेतुभिरुपवासस्य नित्यत्वं सिद्धम्। काम्यत्वञ्च सायुज्यादि-फल-श्रवणादवगम्यते। तदुक्तं विष्णुरहस्ये,—

"यदीच्छेद्विष्णु-सायुज्यं सुतान् सम्पदमात्मनः।

एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि"—इति।

कूर्मपुराणे,—

"यदीच्छेद्विष्णु-सायुज्यं श्रियं सन्ततिमात्मनः।

एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि"—इति।

कात्यायनः,—

"संसारसागरोत्तारमिच्छन् विष्णुपरायणः।

ऐश्वर्य्यं सन्ततिं स्वर्गं मुक्तिं वा यद्यदिच्छति॥

एकादश्यां न भुञ्जीत पक्षयोरुभोरपि"—इति।

स्कन्दपुराणेऽपि,—

---

* नारदीयेऽपि,—इति वि॰ पुस्तके पाठः।

"यदीच्छेद्विपुलान् भोगांश्चन्द्रसूर्यग्रहोपमान्(?) -दुर्लभाम्।
एकादश्यामुपवसेत् पक्षयोरुभयोरपि"—इति।

नारदीयेऽपि,—

"एकादशी-समं किञ्चित् पाप-त्राणं न विद्यते।
स्वर्ग-मोक्ष-प्रदा ह्येषा राज्य-पुत्र-प्रदायिनी॥
सुकलत्र-प्रदा ह्येषा शरीरारोग्यदायिनी"—इति।

तदेवं फल-श्रवणात् काम्यत्वं सिद्धम्। ननु काम्यत्वमनित्यत्वं, असति कामे परित्यक्तुं शक्यत्वात्। तथा सत्येकस्य कर्मणोनित्यत्व-काम्यत्वाभ्यां द्वैरूप्याङ्गीकारे नित्यानित्य-संयोग-विरोधः प्राप्नोति। नायं दोषः। खादिरवत् प्रमाण-द्वयेन द्वैरूप्योपपत्तेः। तथाहि। "खादिरो यूपो भवति"—इति क्रतौ नित्यः खादिरो विहितः। "खादिरं वीर्य्य-कामस्य यूपं कुर्वीत"—इति तस्मिन्नेव क्रतौ काम्यत्वेनानित्यः खादिरो विहितः। तत्र यथा प्रमाण-द्वय-संबन्धादेकस्यापि खादिरस्य द्वैरूप्यमङ्गीकृतं, तद्वदत्रापि द्विविध-प्रमाण-सद्भावादुपवासस्य द्वैरूप्यं किन्न स्यात्।

ननु, विषमो दृष्टान्तः; नित्यः खादिरः क्रत्वर्थः काम्यस्तु पुरुषार्थः, उपवासस्तु नित्योऽपि पुरुषार्थ एव, तस्य खादिरवत् क्रत्वङ्गत्व-बोधक-प्रमाणाभावात्। बाढम्। अस्त्वेवं वैषम्यं, द्वैरूप्य-प्रयोजकन्तु प्रमाण-द्वयमस्त्येव। सूत्रकारेण प्रमाण-द्वयस्यैव द्वैरूप्य-साधकत्वाभ्यनुज्ञानात्। तथा च सूत्रम्। "एकस्य तूभयत्वे संयोग-पृथक्त्वम् (मी० ४अ० ३पा० ५सू०)"—इति। अतः केवल-पुरुषार्थस्याप्युपवासस्य द्वैरूप्यमविरुद्धम्। यदि बुद्ध्यारोहस्य सदृशो दृष्टान्तोऽपेक्षितस्तर्ह्यग्निहोत्रादिर्दृष्टान्तोऽस्तु। न ह्यग्निहोत्रं क्रत्वर्थम्। तस्य स्वयमेव क्रतुत्वात्। तस्य च नित्यत्व-

काम्यत्वे वाक्य-द्वयादवगम्येते। "यावज्जीवमग्निहोत्रं जुहोति"—इति नित्यत्वावगमकं वाक्यम्। "अग्निहोत्रं जुहुयात् स्वर्गकामः"—इति च काम्यत्वावगमकम्। तस्य च क्रत्वर्थत्वाभावेन केवल-पुरुषार्थतैव। अतोऽग्निहोत्रे नित्यत्वं काम्यत्वञ्चेति द्वैरूप्यमस्ति।

तत्र शब्दान्तराभ्यासादि-कर्म-भेद-हेत्वभावेनैकस्यैव कर्मणः प्रयोग-भेदादवगन्तव्यम्। प्रयोग-भेदश्च यावज्जीवाधिकरणे (मी० २अ०४पा० १अ०) निर्णीतः। तस्य चाधिकरणस्य सङ्ग्राहकावेतौ श्लोकौ भवतः,—

"यावज्जीवं जुहोतीति धर्मः कर्मणि पुंसि वा।
कालत्वात् कर्म-धर्मोऽतः काम्यएकः प्रयुज्यताम्॥
न कालो जीवनं तेन निमित्त-प्रविभागतः।
काम्य-प्रयोगोभिन्नः स्याद्यावज्जीव-प्रयोगतः"—इति।

अयमर्थः। "अग्निहोत्रं जुहुयात् स्वर्गकामः"—इति काम्याग्निहोत्रं श्रूयते। तथा वाक्यान्तरं पठ्यते,—"यावज्जीवमग्निहोत्रं जुहोति"—इति। तत्र संशयः। किं यावज्जीवमित्यनेनाधिकारान्तरं बोध्यते, किं वा काम्याग्निहोत्रे गुणविधिरिति। तदर्थमर्थान्तर-चिन्ता,—किं वा यावज्जीवमित्यस्यार्थः; कर्म-धर्मः, उत पुरुष-धर्मः,—इति। यावज्जीव-शब्देन पुरुषायुष-परिमितः कालोऽभिधीयते। काम्येन चाग्निहोत्रेण काल-विशेषश्चाकाङ्क्षितः। तस्य च कालस्यानेन समर्पणादयं कर्म-धर्मः। तस्माद्गुणविधिः। तथा चाग्निहोत्रस्य काम्यस्य प्रयोगएकएव नत्वन्यो-नित्यः,—इति प्राप्ते ब्रूमः,—

यावज्जीवशब्दो न कालस्य वाचकः, किन्तु लक्षकः। वाच्यार्थस्तु प्राणधारणं जीवनम्। तच्च न कर्म-धर्मत्वेन विधातुं शक्यं, पुरुष-धर्मत्वादिति

प्राण-धारणमभिधत्ते, न तु कालम्। प्राण-धारणञ्च पुरुष-धर्मः, कालस्य तदसम्भवात्। तेन स्वर्गकामनेव जीवनमपि किञ्चिन्निमित्तम्। तस्मादधिकारान्तर-चोदना। तथा सति जीवन-निमित्तो नित्यः प्रयोगः। कामना-निमित्तः, कादाचित्कः प्रयोगश्च परस्परं भिद्यते,—इति सिद्धान्तः।

तेनाग्निहोत्र-न्यायेन प्रकृतस्याप्युपवासस्य निमित्त-भेदेन नित्यप्रयोगः काम्य-प्रयोगश्चास्तु। नन्वेकस्य कर्मणः-काल-भेदेन कर्तृ-भेदेन वा विना द्वौ प्रयोगौ न संभवतः। न चात्र काल-भेदः सम्भवति, नित्य-काम्ययोरुपवासयोरुभयोरप्येकादश्यामेव विधानात्। नाप्यत्र कर्तृ-भेदोऽस्ति, यद्यपि काम्यं परित्यज्य केवलं नित्यमनुष्ठातुं शक्यं, तथापि काम्यमनुतिष्ठासुना नित्यस्य परित्यक्तुं अशक्यत्वात्। अतः कर्त्रैक्यात् कालैक्याच नित्य-काम्य-रूपौ द्वौ प्रयोगौ न घटेते। नायं दोषः। विविदिषाऽधिकरण-न्यायेन सकृदेवानुष्ठिते प्रयोग-द्वय-सिद्धेः। तस्य चाधिकरणस्य संग्राहकावेतौ श्लोकौ भवतः,—

"विद्यार्थमाश्रमार्थञ्च द्विः प्रयोगोऽथवा सकृत्।
प्रयोजन-विभेदेन प्रयोगोऽपि विभिद्यते॥
श्राद्धार्थ-भुक्त्या तृप्तिः स्याद्विद्यार्थेनाश्रमस्तथा।
अनित्य-नित्य-संयोगउक्तिभ्यां खादिरे मतः"—इति।

अयमर्थः। "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन"—इति श्रुति-वाक्येन परमात्म-विद्यायां* यज्ञादयो विहिताः। गृहस्थाद्याश्रम-धर्मत्वन्तु यज्ञादीनां सर्व-श्रुति-स्मृतिषु प्रसिद्धम्। तत्र संशयः। किं यज्ञादीनां द्विः प्रयोगः, उत सकृदिति।

* परमात्मविद्योदयाय,—इति वि० पुस्तके पाठः।

तत्र, प्रयोजन-भेदात् प्रयोग-भेदः,—इति पूर्वः पक्षः। निमन्त्रितेन ब्राह्मणेन क्रियमाणस्य भोजनस्य द्वे प्रयोजने; अन्य-कर्तृक-श्राद्ध-निष्पत्तिः, स्व-तृप्तिश्च। न च द्विर्भुज्यते। तद्वत् ब्रह्मविद्याऽर्थमनुष्ठितेन यज्ञादि-कर्मणा प्रयोजन-द्वयं सिध्यति। न च नित्यानित्य-संयोग-विरोधः, खादिरवद्वाक्य-द्वयेन तदुपपत्तेः। तच्च पूर्वमुपपादितम्। तस्मात् सकृदेव प्रयोगः,—इति। एवमत्रापि सकृदेवोपवासं कुर्वतः काम्य-प्रयोगो नित्य-प्रयोगश्चेत्युभयं सिध्यति।

ननु सकृदनुष्ठानेनानेकार्थ-सिद्धिर्द्वेधा भवति; तन्त्रेण वा, प्रसङ्गेन वा। तद्यथा, दर्श-पूर्णमासयोः षण्णां प्रधान-यागानां[१] मध्ये त्रयाणा-न्त्रयाणां सकृत्सकृदनुष्ठितेन प्रयाजाद्यङ्गेनोपकारः सिद्ध्यति। तदिदन्तन्त्रम्। पश्वर्थमनुष्ठितेन प्रयाजादिना पशु-तन्त्र-मध्य-पातिनः पशु-पुरोडाशस्याप्युपकारः सिद्ध्यति। सोऽयं प्रसङ्गः। एवं सति, प्रकृतेऽपि तन्त्र-प्रसङ्गयोः कतरस्योपादानमिति चेत्। प्रसङ्गस्येति ब्रूमः। काम्य-प्रयोगेणैव नित्य-प्रयोगस्यापि सिद्धत्वात्। तथा च स्मृतिः,—

"काम्येऽपि नित्य-सिद्धिः स्यात् प्रसङ्गेनोभयात्मकः"—इति।

तदेवमेकादश्युपवासस्य नित्यत्व-काम्यत्व-लक्षण-द्वैरूप्य-विरोधाभावात् द्वैरूप्यमभ्युपेयमिति स्थितम्।

(१) "आग्नेयोऽष्टाकपालोऽमावस्यायां पौर्णमास्याञ्चाच्युतो भवति उपांशुया-जमन्तरा यजति ताभ्यामग्निषोमीयमेकादशकपालं पौर्णमासे प्राय-च्छदैन्द्रं दध्यमावस्यायामैन्द्रं पयोऽमावस्यायाम्"—इति श्रुत्युक्ता-नामाग्नेयाष्टाकपालैन्द्रदध्यैन्द्रपयोरूपाणां दर्शकर्त्तव्यानां त्रयाणाम्, आग्नेयाष्टाकपालोपांशुयाजाग्निषोमीयैकादशकपालरूपाणां पौर्णमा-सीकर्त्तव्यानां त्रयाणाञ्चेत्यर्थः।

अत्रोपवासाङ्ग-तिथि-निर्णयस्य वेधाधीनत्वात् प्रथमं दशमी-वेधो निरूप्यते। स च वेधस्त्रिविधः; अरुणोदय-वेधः, सूर्य्योदय-वेधः, पञ्चदश-नाडी-वेधश्चेति। तत्रारुणोदय-वेधो भविष्यत्पुराणे दर्शितः,—

"अरुणोदय-काले तु दशमी यदि दृश्यते।
सा विद्धैकादशी तत्र पाप-मूलमुपोषणम्।
अरुणोदय-वेलायां दशमी गन्धोभवेद्यदि।
दुष्टन्तत्तु प्रयत्नेन वर्जनीयं नराधिप"—इति।

गारुड़पुराणेऽपि,—

"दशमी-शेष-संयुक्तो * यदि स्यादरुणोदयः।
नैवोपोष्यं वैष्णवेन तद्दिनैकादशी-व्रतम्"—इति।

अरुणोदयस्य प्रमाणं स्कन्द-नारदाभ्यामुक्तम्,—

"उदयात् प्राक् चतस्रस्तु नाड़िका अरुणोदयः"—इति.

तस्मिन्नरुणोदयवेधावज्ञविधास्ते तु प्रश्नोत्तराभ्यां ब्रह्मवैवर्त्ते दर्शिताः,—

"कीदृशस्तु भवेद्वेधो योगो विप्रेन्द्र, कीदृशः।
योग-वेधौ समाचक्ष्व † याभ्यां दुष्टमुपोषणम्॥
चतस्रो घटिकाः प्रातररुणोदय-निश्चयः।
चतुष्टय-विभागोऽत्र वेधादीनां किलोदितः॥
अरुणोदय-वेधः स्यात् सार्द्धन्तु घटिका-त्रयम्।
अतिवेधो द्विघटिकः प्रभा-सन्दर्शनाद्रवेः॥

---

* दशमीवेधसंयुक्तो,—इति मु॰ पुस्तकपाठः।
† समाचक्ष्व,—इति वि॰ पुस्तकपाठः।

महावेधोऽपि तत्रैव दृश्यतेऽर्को न दृश्यते ।
तुरीयस्तत्र विहितो योगः सूर्य्योदये सति"—इति ।

अयमर्थः। वेधातिवेधमहावेधयोगाश्चत्वारः * उपवासस्य दूषकाः। तत्र रवेः प्रभा-संदर्शनात् पूर्वं सार्द्धं घटिका-त्रयमेकादश्या व्याप्तं ततः प्राचीने घटिकाऽर्द्धे अरुणोदय-संबन्धिनि दशमी-सद्भावे, वेधः,—इत्युच्यते। यदा सूर्य्यस्य दर्शनात् पूर्वं घटिका-द्वयमुपरितनमेकादशी-व्याप्तं पूर्वं तु घटिका-द्वयं दशमी-व्याप्तं, तदानीमतिवेधः,—इत्युच्यते। यदा सूर्य्यस्य दर्शनादर्शन-सन्देह-कालमेकादशी व्याप्नोति ततः प्राक् कृत्स्नोऽप्यरुणोदय-कालो दशमी-व्याप्तः, तदा महावेधः। यदा सूर्य्योदये स्पष्टे सति पश्चादेकादशी प्रवृत्ता ततः प्राच्यामुदय-वेलायां दशमी विद्यते, तदा योगशब्देनाभिधेयो दोषो भवति। स च वेधाद्यपेक्षया तुरीयो भवतीति।

नन्वरुणोदयात् पूर्वमर्द्धरात्रात्परतोऽपि यदि दशमी-कला विद्यते, तदा नोपवासः कर्त्तव्यः। तदभावे तूपवासः कर्त्तव्यः। तथा च स्मृतिः,—

"अर्द्धरात्रात्परा यत्र एकादश्युपलभ्यते ।
तत्रोपवासः कर्त्तव्यो न तु वै दशमी-कला"—इति ।

अतो यथानिर्दिष्टेभ्योऽन्योऽपि कश्चिद्वेधोऽस्तीति चेत्। मैवम्। अर्द्धरात्र-वेधोऽपि यदा वर्ज्यस्तदा किमु वक्तव्यमरुणोदय-वेध इति वक्तु-मर्द्धरात्रवेध उपन्यस्तो न तु वेधाभिप्रायेण। तदेव ब्रह्मवैवर्त्ते शौनकेन † स्पष्टीकृतम्,—

* योगवेधास्त्वत्वारः,—इति मु० पुस्तके पाठः।
† ब्रह्मवैवर्त्तशौनकेन,—इति वि० पुस्तके पाठः।

"अर्द्धरात्रे तु केषाञ्चिद्दशम्या वेधइष्यते।
अरुणोदय-वेलायां नावकाशोविचारणे॥
कपालवेधइत्याङ्कराचार्य्याये हरिप्रियाः।
न तन्मम मतं यस्मात्त्रियामा रात्रिरिष्यते"—इति।

यएते वेधातिवेधमहावेधयोगाः पूर्व्वमभिहितास्तेषु चयाऽरुणोदय-वेधाश्चतुर्थउदयवेधः। तच्चोदयवेधं कण्वोऽप्याह,—

"उदयोपरि विद्धा तु दशम्येकादशी यदा।
दानवेभ्यः प्रीणनार्थं दत्तवान् पाकशासनः"—इति।

स्मृत्यन्तरेऽपि,—

"दशम्याः प्रान्तमादाय यदोदेति दिवाकरः।
तेन स्पृष्टं हरिदिनं दत्तं अम्भासुराय तु"—इति।

पञ्चदशनाड़ी-वेधस्तु स्कन्दपुराणे दर्शितः,—

"नागोद्वादशनाड़ीभिर्दिक् पञ्चदशभिस्तथा।
भूतोऽष्टादशनाड़ीभिर्दूषयत्युत्तरान्तिथिम्"—इति।

तदेवं वेध-त्रयं निरूपितम्। तत्र, पञ्चदशनाड़ी-वेधस्य वेधान्तरस्य च विषय-व्यवस्था निगमे दर्शिता,—

"सर्व्व-प्रकार-वेधोऽयमुपवासस्य दूषकः।
सार्द्ध-सप्त-मुहूर्त्तस्तु वेधोऽयं बाधते व्रतम्"—इति।

सर्व्वप्रकारइत्यत्र प्रकारशब्देन कला-काष्ठाऽऽदयोवेधातिवेधादयोवा गृह्यन्ते। मात्र तिथ्यन्तरवत् त्रिमुहूर्त्तत्वं वेधेऽपेक्षितम्। किन्तु लवे कलार्द्धादिकिमपि पर्य्याप्तम्। तदुक्तं नारदीये,—

"लव-वेधेऽपि विप्रेन्द्र, दशम्येकादशीन्त्यजेत्।

सुरायाबिन्दुना स्पृष्टं गङ्गाम्भइव निर्मलम्"—इति।

स्कन्दपुराणेऽपि,—

"कला-काष्ठाऽऽदि-गत्यैव दृश्यते दशमी विभो।

एकादश्यां न कर्त्तव्यं व्रतं राजन्, कदाचन"—इति।

स्मृत्यन्तरेपि,—

"कलार्द्धेनापि विद्धा स्याद्दशम्येकादशी यदि।

तदाऽप्येकादशीं हित्वा द्वादशीं समुपोषयेत्"—इति।

सोऽयं कला-काष्ठाऽऽदि-वेधोऽरुणोदये सूर्य्योदये च समानः। तत्र, अरुणोदय-वेधोवैष्णव-विषयः। तच्च गारुड़पुराणे विस्पष्टमवगम्यते,—

"दशमी-शेष-संयुक्तो यदि स्यादरुणोदयः।

नैवोपोष्यं वैष्णवेन तद्दिनैकादशीव्रतम्"—इति।

वैखानस-पञ्चरात्रादि-वैष्णवागमोक्त-दीक्षां प्राप्तोवैष्णवः। अतएव स्कन्दपुराणे वैष्णव-स्वरूपमभिहितम्,—

"परामापदमापन्नो हर्षे वा समुपस्थिते।

नैकादशीन्त्यजेद्यस्तु यस्य दीक्षाऽस्ति वैष्णवी॥

समात्मा सर्वजीवेषु निजाचारादविप्लुतः।

विष्णवर्पिताखिलाचारः स हि वैष्णवउच्यते"—इति।

विष्णुपुराणेऽपि,—

"न चलति निज-वर्ण-धर्मतोयः

सम-मतिरात्मसुहृद्विपक्षपक्षे।

न हरति न च हन्ति किञ्चिदुच्चैः

सितमनसन्तमवेहि विष्णुभक्तम्"—इति।

यथोक्त-गुण-सम्पन्नोवैष्णव-दीक्षां प्राप्तोयः, तं प्रति तिथिरेवं निर्णे-तव्या। एकादशी द्विविधा; अरुणोदय-वेधवती, शुद्धा चेति। तत्र, वेधवती सर्वथा त्याज्या। "तद्विमैकादशीव्रतम्"—इति गारुड़पुराणे सामान्येन प्रतिषेधात्। विशेषतस्तु सम्पृक्तादि-भेदेन प्रतिषेधोद्रष्टव्यः। यएते वेधातिवेध-महावेध-योगाख्यादोषाः पूर्वमुक्ताः, तेषु सत्स्वेकादशी सम्पृक्तसन्दिग्ध-संयुक्त-सङ्कीर्ण-नामभिर्व्यवह्रियते। अरुणोदयश्च प्रथम-घटिकायां दशमी-सद्भावोवेधइत्युक्तः। स च द्विविधः, घटिका-प्रारम्भे कृत्स्न-घटिकायाञ्च दशमी-वृत्ति-भेदात्। तत्र, प्रारम्भमात्रे दशमी-युक्तैकादशी सम्पृक्तेत्युच्यते। कृत्स्न-घटिका-वृत्ति-दशमी-युक्तैकादशी * सन्दिग्धा। अरुणोदय-प्रथम मुहूर्त्त-दशमी-व्याप्तिरतिवेधः, तदुपेतै-कादशी † संयुक्तेत्युच्यते। सूर्य्य-मण्डल-दर्शन-सन्देह-वेलायां दशमी-सद्भावोमहावेधः, तद्युक्तैकादशी सङ्कीर्णेत्युच्यते। ताएताः सम्पृक्तादयश्च-तस्रोऽपि त्याज्याः। तथा च गोभिलः,—

"अरुणोदय-वेलायां दशमी यदि सङ्गता।
सम्पृक्तैकादशीं तान्तु मोहिन्यै दत्तवान् प्रभुः"—इति।

गारुड़पुराणे,—

"उदयात् प्राक् त्रिघटिका-व्यापिन्येकादशी यदा।
सन्दिग्धैकादशी नाम वर्ज्ज्यं धर्मकाङ्क्षिभिः॥
उदयात् प्राक् मुहूर्त्तेन व्यापिन्येकादशी यदा।

* कृत्स्नघटिकावर्त्तिनीदशमीसद्भावे वेधयुक्तैकादशी,—इति वि० पुस्तके पाठः।

† उदयात् पूर्व्वं दशमीयुतैकादशी,—इति वि० पुस्तकेपाठः।

संयुक्तैकादशी नाम वर्जयेद्धर्म-दृद्धये ॥
आदित्योदय-वेलायामारभ्य षष्ठिनाड़िका ।
सङ्कीर्णैकादशी नाम त्याज्या धर्मफलेप्सुभिः॥
पुत्र-पौत्र-प्रवृद्ध्यर्थं द्वादश्यामुपवासयेत् ।
तत्र क्रतुशतं पुण्यं त्रयोदश्यान्तु पारणम्"—इति ।

यद्यपि पूर्वत्र वेधवाक्ये 'सार्द्धन्तु घटिकात्रयम्'—इत्युक्तम्, अत्र तु सन्दिग्धैकादशी-वाक्ये 'त्रिघटिका'—इत्युक्तम्*, तथापि नैतावता वैषम्येण विरोधः शङ्कनीयः। शास्त्र-द्वयस्यापि दशमीवेध-त्याग-परत्वात् ।

तदेवं सामान्य-विशेषाभ्यां प्रतिषिद्धत्वादरुणोदय-विद्धैकादशी वैष्णवेन परित्याज्या। यस्तु योग-संज्ञकश्चतुर्थो वेधस्तस्य त्याज्यत्वमर्थात् सिद्धम्। अरुणोदय-वेधोऽपि यदा त्यज्यते, तदा किमु वक्तव्यं सूर्योदय-वेधइति। वचनं त्वत्र कण्वप्रोक्तं पूर्वमेवोदाहृतम् ।

या तु चतुर्विध-वेध-रहिता शुद्धैकादशी, सा द्विविधा; आधिक्येन युक्ता, तद्रहिता च,—इति। आधिक्यञ्च त्रिविधम्; एकादश्याधिक्यं, द्वादश्याधिक्यं, उभयाधिक्यञ्चेति। त्रिष्वप्येतेषु पक्षेष्वरुणोदयमारभ्य प्रवृत्तां शुद्धामप्येकादशीं परित्यज्य परेद्युरुपवासः कर्त्तव्यः। तत्रैकादश्याधिक्ये नारदआह,—

"सम्पूर्णैकादशी यत्र द्वादश्यां वृद्धिगामिनी ।
द्वादश्यां लङ्घनं कार्य्यं त्रयोदश्यान्तु पारणम्"—इति ।

स्मृत्यन्तरेऽपि,—

"एकादशी यदा पूर्णा परतः पुनरेव सा ॥

* अत्र तु,—इत्यारभ्य, इत्युक्तम्,—इत्यन्तं नास्ति मु० पुस्तके ।

पुण्यं क्रतुशतस्योक्तं त्रयोदश्यान्तु पारणम्"—इति।

विष्णुरहस्येऽपि *,—

"एकादशी-कला-प्राप्ता येन द्वादश्युपोषिता।

तुल्यं क्रतुशतस्योक्तं त्रयोदश्यान्तु पारणम्"—इति।

द्वादश्याधिक्ये व्यासश्चाह,—

"एकादशी यदा लुप्ता परतोद्वादशी भवेत्।

उपोष्या द्वादशी तत्र यदीच्छेत्परमाङ्गतिम्"—इति।

उभयाधिक्ये भृगुराह,—

"सम्पूर्णैकादशी यत्र प्रभाते पुनरेव सा।

तत्रोपोष्या द्वितीया तु परतोद्वादशी यदि"—इति।

नारदोऽपि,—

"सम्पूर्णैकादशी यत्र प्रभाते पुनरेव सा।

सर्वैरेवोत्तरा कार्य्या परतोद्वादशी यदि"—इति।

स्मृत्यन्तरेऽपि,—

"एकादशी भवेत्पूर्णा परतोद्वादशी यदि।

एकादशीं परित्यज्य द्वादशीं समुपोषयेत्"—इति।

उभयाधिक्य-रहितायान्तु शुद्धायां न कोऽपि सन्देहोऽस्ति।

इति वैष्णव-दीक्षा-युक्तानामेकादशी निर्णीता।

---

* शिवरहस्ये,—इति वि० पुस्तके पाठः।

# अथ श्रौत-स्मार्त्त-पर्य्यवसितानां पञ्चरात्रादि-दीक्षा-रहितानामेकादशी निर्णीयते।

अरुणोदय-वेधस्य वैष्णव-विषयत्वे व्यवस्थिते सत्युदय-वेधः स्मार्त्तानुष्ठायि-विषयत्वेन परिशिष्यते। अतएव स्मर्य्यते,—

"अतिवेधामहावेधाये वेधास्तिथिषु स्मृताः।
सर्वेऽप्यवेधाविज्ञेयावेधः सूर्य्योदये मतः"—इति।

एवञ्च सूर्य्योदय-वेधमपेक्ष्यैकादशी द्विधा भिद्यते; शुद्धा, विद्धा चेति। तत्र शुद्धायां पूर्ववच्चत्वारोभेदाभवन्ति; एकादश्याधिक्यं, द्वादश्याधिक्यम्, उभयाधिक्यम्, अनुभयाधिक्यञ्चेति। एवं विद्धायामपि चत्वारोभेदा उन्नेयाः। शुद्धायामेकादश्याधिक्ये द्वयोस्तिथ्योरुपवास-योग्यतामाह वृद्धवसिष्ठः,—

"सम्पूर्णैकादशी यत्र प्रभाते पुनरेव सा।
लुप्यते द्वादशी तस्मिन्नुपवासः कथम्भवेत्॥
उपोष्ये द्वे तिथी तत्र विष्णु-प्रीणन-तत्परैः"—इति।

उभयोरधिकारि-भेदेन व्यवस्था स्कन्दपुराणे दर्शिता,—

"प्रथमेऽहनि सम्पूर्णा व्याप्याहोरात्र-संयुता।
द्वादश्याञ्च तथा तात, दृश्यते पुनरेवच॥
पूर्वा कार्य्या गृहस्थैस्तु यतिभिश्चोत्तरा तिथिः*"—इति।

---

* विभो,—इति वि० पुस्तकेपाठः।

एतच्च परेद्युर्द्वादश्यभाव-विषयम्। तथा च स्मृत्यन्तरे,—

"पुनः प्रभात-समये घटिकैका यदा भवेत्।

अत्रोपवासोविहितश्चतुर्थाश्रम-वासिनाम्॥

विधवायाश्च तत्रैव परतोद्वादशी न चेत्"—इति।

गारुड़पुराणेऽपि,—

"पुनः प्रभात-समये घटिकैका यदा भवेत्।

अत्रोपवासोविहितोवनस्थस्य यतेस्तथा॥

विधवायाश्च तत्रैव परतो द्वादशी न चेत्"—इति*।

पुराणान्तरेऽपि,—

"एकादशी यदा पूर्णा परतः पुनरेव सा।

पुण्यं क्रतुशतस्योक्तं त्रयोदश्यान्तु पारणम्"—इति।

एवमेकादश्याधिक्य-पक्षे गृहि-यत्योर्व्यवस्थाऽभिहिता। द्वादश्याधिक्ये पूर्वेद्युरुपवासमाह नारदः,—

"न चेदेकादशी विष्णौ द्वादशी परतः स्थिता।

उपोष्यैकादशी तत्र यदीच्छेत्परमं पदम्"—इति।

स्कान्देऽपि,—

"शुद्धा यदा समा हीना समक्षीणाधिकोत्तरा।

एकादश्यामुपवसेन्न शुद्धां वैष्णवीमपि"—इति।

दशमी-वेध-रहिता शुद्धैकादशी यदा परेद्युरुदयादूर्ध्वं नास्ति

* गारुड़पुराणेऽपि,—इत्यारभ्य, इति,—इत्यन्तं, नास्ति क० वि० पुस्तकयोः।

किन्तूदय-समा* ततोन्यूना वा, द्वयोरपि पक्षयोर्द्वादशी परेद्युरुदये समा न्यूनाऽधिका वा भवति, तत्र सर्वत्र शुद्धैकादशी उपोष्या न त्वविद्धां वैष्णवीं द्वादशीमुपवसेदित्यर्थः। एवञ्च सति, प्रकृते द्वादश्याधिक्येऽपि एकादशीसमन्यूनयोरन्यतरत्वात् प्रथमैवोपोष्येत्युक्तम्भवति। उभयाधिक्ये परेद्युरुपवासो गारुड़पुराणे दर्शितः,—

"सम्पूर्णैकादशी यत्र प्रभाते पुनरेव सा।

तत्रोपोष्या परा पुण्या परतोद्वादशी यदि"—इति।

वराहपुराणेऽपि,—

"एकादशी विष्णुना चेत् द्वादशी परतः स्थिता।

उपोष्या द्वादशी तत्र यदीच्छेत्परमं पदम्"—इति।

स्मृत्यन्तरेऽपि,—

"सम्पूर्णैकादशी यत्र प्रभाते पुनरेव सा।

वैष्णवी चेत् त्रयोदश्यां घटिकैकाऽपि दृश्यते॥

गृहस्थोऽपि परां कुर्य्यात् पूर्वान्नोपवसेत् सदा।

पूर्णाऽप्येकादशी त्याज्या वर्द्धते द्वितयं यदि"—इति।

एवमेकैकाधिक्ये द्वितयाधिक्येऽपि निर्णयोदर्शितः। अनुभयाधिक्ये तु नास्ति सन्देहः। इति शुद्धायाश्चत्वारोभेदाव्यवस्थिताः। अथ विद्धायाश्चत्वारोभेदाव्यवस्थाप्यन्ते। तत्राप्येकादश्याधिक्ये पूर्ववत् गृहि-यत्योर्व्यवस्था द्रष्टव्या। तदाह प्रचेताः,—

"एकादशी विवृद्धा चेच्छुक्ले कृष्णे विशेषतः।

उत्तरान्तु यतिः कुर्य्यात् पूर्वामुपवसेत् गृही"—इति।

* किन्तूदये समासमा,—इति मु॰ पुस्तके पाठः।

नचैतद्वाक्यं शुद्धाधिक्ये चरितार्थमिति शङ्कनीयम्, बाधकाभावेन विद्धाधिक्येऽपि तद्वचनप्रवृत्तेर्निवारयितुमशक्यत्वात्। द्वादश्याधिक्ये परेद्युरुपवासः। तदाह व्यासः,—

"एकादशी यदा लुप्ता परतोद्वादशी भवेत्।
उपोष्या द्वादशी तत्र यदीच्छेत्परमाङ्गतिम्"—इति।

लुप्ता, आदौ दशमीमिश्रत्वात्परतोवृद्ध्यभावाच्च क्षयङ्गतेति यावत्। उभयाधिक्येऽपि परेद्युरुपवासः। तदुक्तं भविष्यत्पुराणे,—

"एकादशीं दिशा * युक्तां वर्द्धमाने विवर्जयेत्।
क्षयमार्ग-स्थिते सोमे कुर्वीत दशमी-युताम्"—इति।

उभयानाधिक्ये तु नैवास्ति सन्देहः, कोट्यन्तराभावात्। न च विद्धत्वादस्ति सन्देहः,—इति वाच्यम्, असति कोट्यन्तरे विद्धायाअप्युपादेयत्वात्। तथा च विष्णुरहस्यम्,—

"एकादशी भवेत्काचित् दशम्या दूषिता तिथिः।
वृद्धिपक्षे भवेद्दोषः क्षयपक्षे तु पुण्यदा"—इति।

इति विद्धाभेदाव्यवस्थापिताः। अत्र, शुद्धा-विद्धयोरुभयोरप्येष निर्णय-संग्रहः। एकादशी-द्वादश्योरुभयोरपि वृद्धौ परेद्युरुपवासः। द्वयोरप्यवृद्धौ पूर्वेद्युः। एकादशीमात्र-वृद्धौ गृहि-यत्योर्व्यवस्था। द्वादशीमात्र-वृद्धौ शुद्धायां सर्वेषां पूर्वेद्युर्विद्धायां परेद्युरिति।

तदेवं शास्त्रार्थे व्यवस्थिते यानि यावन्ति मुनि-वाक्यानि विधायकानि निषेधकानि वा, तानि सर्वाणि यथोक्त-निर्णयाविरोधेन व्यवस्थापनीयानि। तत्र व्यवस्थापन-प्रकारं दर्शयामः। स्कान्दे,—

---

* दशा,- इति वि॰ पुस्तके पाठः।

"प्रतिपत्प्रभृतयः सर्वाउदयादोदयाद्रवेः।

सम्पूर्णाइति विख्याताहरिवासर-वर्जिताः"—इति।

हरिवासरे तु सम्पूर्णत्वं प्रकारान्तरेणोक्तं गारुड़े,—

"उदयात् प्राग्यदा विप्र, मुहूर्त्त-द्वय-संयुता।

सम्पूर्णैकादशी ज्ञेया तत्रैवोपवसेत् गृही"—इति।

भविष्यत्पुराणेऽपि,—

"आदित्योदयवेलायाः प्राङ्मुहूर्त्तद्वयान्विता।

एकादशी तु सम्पूर्णा विद्धाऽन्या परिकल्पिता"—इति।

तदेतद्वचनद्वयमरुणोदयवेधोपजीवनेन प्रवृत्तत्वाद्वैष्णव-विषयम्। दशमीवेध-निन्दकानि तु वचनानि द्विविधान्युपलभ्यन्ते; कानिचिदरुणोदयानुवादेन प्रवृत्तानि, कानिचित्तदननुवादेनेति। तथा भविष्ये,—

"अरुणोदयकाले च दशमी यदि दृश्यते।

तत्र नैकादशी कार्य्या धर्मकामार्थनाशिनी"—इति।

कौर्मः,—

"अरुणोदयवेलायां विद्धा काचिदुपोषिता।

तस्याः पुत्रशतं नष्टं तस्मात्तां परिवर्जयेत्"—इति।

एतादृशानि सर्वाणि वैष्णव-विषयाणि द्रष्टव्यानि। अरुणोदयानुवादमन्तरेण दशमीविद्धा-निन्दकानि च कानिचिद् वचनान्युपलभ्यन्ते। तद्यथा। नारदः,—

"दशम्यनुगता यत्र तिथिरेकादशी भवेत्।

तत्रापत्यविनाशश्च परेत्य नरकं व्रजेत्"—इति।

ब्रह्मवैवर्त्तेऽपि,—

"दशमी-शेषसंयुक्तां यः करोति विमूढधीः।
एकादशी-फलं तस्य न स्याद्‌द्वादशवार्षिकम्"—इति।

विष्णुरहस्ये,—

"दशमी-शेष-संयुक्तामुपोष्यैकादशीञ्च यः।
संवत्सर-कृतेनेह नरोधर्मेण मुच्यते"—इति।

इदृशानि सर्वाणि अरुणोदयवेध-सूर्य्योदयवेध-द्वय-सामान्येन प्रवृत्तत्वाद्वैष्णव-स्मार्त्तोभय-विषयाणि। तत्र, वैष्णव-विषये निरङ्कुश प्रवर्त्तन्ते। स्मार्त्त-विषये तूभयाधिक्ये द्वादश्याधिक्ये च सर्व-पुरुष-विषयाणि द्रष्टव्याणि।

दशमीविद्धाऽभ्यनुज्ञापकानि कानिचिद्वचनान्युपलभ्यन्ते। तद्यथा।

स्कन्दपुराणे,—

"त्रयोदश्यां न लभ्येत द्वादशी यदि किञ्चन।
उपोष्यैकादशी तत्र दशमी-मिश्रिताऽपिच"—इति।

स्मृत्यन्तरेऽपि,—

"उपोष्यैकादशी तत्र द्वादशी न भवेद्यदि।
दशम्या हि विमिश्रैव * एकादश्यत्र धर्मकृत्"—इति।

बृहद्वशिष्ठः,—

"द्वादशी स्वल्पमल्पाऽपि यदि न स्यात्परेऽहनि।
दशमी-मिश्रिता कार्य्या महापातकनाशिनी"—इति।

ऋष्यशृङ्गः,—

"एकादशी न लभ्येत द्वादशी सकला भवेत्।

---

* दशम्यापि हि मिश्रैव,—इति वि॰ पुस्तके पाठः।

उपोष्या दशमी-विद्धा* ऋषिरुद्दालकोऽब्रवीत्”—इति।

हारीतोऽपि,—

“त्रयोदश्यां यदा नष्टा द्वादशी घटिका-द्वयम्।

दशम्येकादशी विद्धा सैवोपोष्या सदा तिथिः”—इति।

एतादृशानि वाक्यानि सर्वाण्यनुभयाधिक्ये सर्व-पुरुष-विषयाणि, एकादश्याधिक्ये तु स्मार्त्त-गृहस्थ-मात्र-विषयाणि द्रष्टव्यानि, न त्वेतानि वैष्णव-विषयाणि। वैष्णव-प्रकरणेषु विद्धाऽभ्यनुज्ञायाश्रदर्शनात्।

सम्पूर्णैकादशी-परित्याग-विषयाणि कानिचिद्वचनान्युपलभ्यन्ते। तद्यथा। स्कन्दपुराणे,—

“एकादशी भवेत्पूर्णा परतोद्वादशी यदि।

तदा ह्येकादशीन्त्यक्का द्वादशीं समुपोषयेत्”—इति।

तथा च कालिकापुराणे,—

“एकादशी यदा पूर्णा परतोद्वादशी भवेत्।

उपोष्या द्वादशी तत्र तिथिवृद्धिः प्रशस्यते”—इति।

गारुड़पुराणे,—

“पूर्णा भवेद्यदा नन्दा भद्रा चैव विवर्द्धते।

तदोपोष्या तु भद्रा स्यात् तिथिवृद्धिः प्रशस्यते”—इति।

ईदृशानि† सर्वाणि वैष्णव-विषयाणि। दिन-त्रय-विषयकाणि कानिचिद्वचनान्युपलभ्यन्ते। नारदः,—

---

* उपोष्यैकादशी विद्धा,—इति मु० पुस्तके पाठः।

† तादृशानि,—इति मु० पुस्तके पाठः।

"यदि दैवात्तु संमिद्ध्येदेकादश्यां दिनत्रयम् * ।
तत्र क्रतुशतं पुण्यं द्वादशीपारणं † भवेत्"—इति ।

कूर्मपुराणेऽपि,—

"त्रिस्पृगेकादशी यत्र तत्र सन्निहितोहरिः ।
तामेवोपवसेत्कामं अकामोविष्णुतत्परः"—इति ।

अत्राद्यन्तयोर्दशमी-द्वादश्योर्मध्ये एकादशीत्येतादृशं दिनत्रयं ‡ यदा प्राप्नोति, तदा परतोद्वादशी-वृद्धिरवृद्धिश्चेत्युभयं सम्भवति । तत्र यद्यवृद्धिस्तदा यथोक्तं दिनत्रयमुपोष्यम् । तदुक्तं स्कन्दपुराणे §,—

"दिनत्रयस्पृते देवि, नोपोष्या दशमी-युता ।
सैवोपोष्या सदा पुण्या परतश्चेत् त्रयोदशी"—इति ।

द्वादशी-वृद्धौ, "एकादशी यदा लुप्ता"—इत्यनेन व्यास-वचनेन परेद्युरुपवासइति पूर्वमेव निर्णीतम् । यदा त्वाद्यन्तयोरेकादशी-त्रयोदश्योर्मध्ये द्वादशीत्येतादृशं दिनत्रयं, तदा नारदेन स्मर्य्यते,—

"एकादशी द्वादशी च रात्रिशेषे त्रयोदशी ।
तत्र क्रतुशतं पुण्यं त्रयोदश्यान्तु पारणम् ¶ ।
एकादशी द्वादशी च रात्रिशेषे त्रयोदशी ।
त्रिस्पृशा नाम सा प्रोक्ता ब्रह्महत्यां व्यपोहति"—इति ।

---

* तिथित्रयं,—इति वि॰ पुस्तके पाठः ।
† द्वादश्यां पारणं,—इति वि॰ पुस्तके पाठः ।
‡ एकादशीत्येतत् दिनत्रयं,—इति मु॰ पुस्तके पाठः ।
§ पुराणान्तरे,—इति वि॰ पुस्तके पाठः ।
¶ नास्त्ययं श्लोको मु॰ पुस्तके ।

तदेतद्वैष्णव-विषयं यति-विषयं वा द्रष्टव्यम्। गृहस्थे तु तन्निषिद्धम् †।

तथा च कूर्मपुराणे,—

"एकादशी द्वादशी च रात्रिशेषे त्रयोदशी।

उपवासं न कुर्वीत पुत्र-पौत्र-समन्वितः"—इति।

पद्मपुराणेऽपि,—

"एकादशी द्वादशी च रात्रिशेषे त्रयोदशी।

त्र्यहस्पृक् तदहोरात्रं नोपोष्यन्तत्सुतार्थिभिः"—इति।

यत्तु ऋष्यशृङ्गेणोक्तम्,—

"अविद्धानि निषिद्धैश्च न लभ्यन्ते दिनानि तु।

मुहूर्त्तैः पञ्चभिर्विद्धा ग्राह्यैवैकादशी तिथिः॥

तदर्द्ध-विद्धान्यन्यानि दिनान्युपवसेद्बुधः।

पूर्वविद्धा न कर्त्तव्या षष्ठ्येकादश्यथाष्टमी॥

एकादशीन्तु कुर्वीत त्रयते द्वादशी यदि"—इति।

अत्र, निषेधोयति-विषयः, विधिर्गृहस्थ-विषयः। वेध-बाहुल्येन कैवल्य-शङ्का माभूदिति पञ्चभिर्मुहूर्त्तैरित्युक्तम्। तदेवं, नानाविध-वचन-व्यवस्थापन-प्रकारोव्युत्पादितः। अनया व्युत्पत्त्या मन्दबुद्धिरपि व्यवस्थापयितुं शक्नोत्येव।

इत्युपवास-तिथिर्निरूपिता।

## अथाधिकारी निरूप्यते।

तत्र नारदः,—

---

* तद्भूतं निषिद्धं,—इति वि॰ पुस्तके पाठः।

"अष्टाब्दादधिकोमर्त्योह्यपूर्णाशीति-हायनः।

भुङ्क्ते योमानवोमोहादेकादश्यां स पापकृत्"—इति।

कात्यायनोऽपि,—

"अष्टवर्षाधिकोमर्त्योह्यशीति-न्यून-वत्सरः।

एकादश्यामुपवसेत् पक्षयोरुभयोरपि"—इति।

गृहस्थस्य तु शुक्लैकादश्यामेव नित्योपवासः। तथा च कूर्मपुराणे,—

"एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि।

वानप्रस्थोयतिश्चैव शुक्लामेव सदा गृही"—इति।

भविष्योत्तरेऽपि,—

"एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि।

ब्रह्मचारी च नारी च शुक्लामेव सदा गृही"—इति।

नारी विधवा, तस्याएव यति-धर्मत्वात्। पतिमत्यास्तूपवासं निषेधति विष्णुः,—

"पत्यौ जीवति या नारी उपोष्य व्रतमाचरेत्।

आयुष्यं हरते भर्त्तुर्नरकञ्चैव गच्छति"—इति।

मनुः,—

"नास्ति स्त्रीणां पृथग्यज्ञोन व्रतं नाप्युपोषणम्।

पतिं शुश्रूषते यत्तु तेन स्वर्गे महीयते*"—इति।

मार्कण्डेयः†,—

"नारी खल्वननुज्ञाता भर्त्रा पित्रा सुतेन वा।

* नास्तीदमर्द्धं मु॰ पुस्तके।

† मार्कण्डेयपुराणे,—इति वि॰ क॰ पुस्तकयोः पाठः।

निष्फलन्तु भवेत्तस्यायत् करोति व्रतादिकम्"—इति।

आदिशब्दादलङ्कार-गन्ध-पुष्प-धूपाञ्जनानामुपसंग्रहः। तदाह मनुः,—

"पुष्पालङ्कारवस्त्राणि गन्धधूपानुलेपनम्"—इति।

पत्युरनुमत्या तु पत्नी व्रतादिष्वधिकारिणी भवति। तदाह कात्यायनः,—

"भार्य्या पत्युर्मतेनैव व्रतादीनाचरेत् सदा"—इति।

शुक्लामेवेत्येवकारः कृष्णैकादश्यामुपवास-निषेध-परः। तथा च कूर्मपुराणे,—

"सङ्क्रान्त्यां कृष्णपक्षे च रवि-शुक्र-दिने तथा।
एकादश्यां न कुर्वीत उपवासञ्च पारणम्"—इति।

गौतमोऽपि,—

"आदित्येऽहनि संक्रान्त्यामसितैकादशीषु च।
व्यतीपाते कृते श्राद्धे पुत्री नोपवसेत् गृही"—इति।

अत्र, पुत्रीति विशेषणं पुत्रवतोदोष-विशेष-प्रदर्शनार्थम्। तथा च पद्मपुराणे,—

"संक्रान्त्यामुपवासेन पारणेन युधिष्ठिर।
एकादश्याञ्च कृष्णायां ज्येष्ठः पुत्रोविनश्यति"—इति।

नारदीयेऽपि,—

"इन्दुक्षयार्कसंक्रान्त्योरेकादश्यां सितेतरे।
उपवासं न कुर्वीत यदीच्छेत् सन्ततिं ध्रुवाम्"—इति।

अत्र, संक्रान्त्यादिषूपवासस्य निषेधः संक्रान्त्यादि-निमित्तकस्य*। तथा च कात्यायनः,—

* नैकादशीनिमित्तकस्य,—इत्यधिकं वि० पुस्तके।

"एकादशीषु कृष्णासु रवि-संक्रमणे तथा।
चन्द्रसूर्य्योपरागे च न कुर्य्यात् पुत्रवान् गृही॥
तत्प्रयुक्तोपवासस्य निषेधोऽयमुदाहृतः।
प्रयुक्त्यन्तरयुक्तस्य न विधिर्न निषेधनम्"—इति।

जैमिनिरपि,—

"तन्निमित्तोपवासस्य निषेधोऽयमुदाहृतः।
नानुषङ्गकृतोग्राह्यो यतो नित्यमुपोषणम्"—इति।

अयमर्थः। एकादश्युपवासस्य नित्यत्वात् संक्रान्त्याद्युपवासस्य च काम्यत्वात् काम्योपवास-निषेधे न नित्योपवास-निषेधः सिध्यतीति। संक्रान्त्यादि-निमित्तकोपवासः संवर्त्तेनोक्तः,—

"अमावास्या द्वादशी च संक्रान्तिश्च विशेषतः।
एताः प्रशस्तास्तिथयो भानुवारस्तथैवच॥
अत्र स्नानं जपोहोमो देवतानाञ्च पूजनम्।
उपवासस्तथा दानमेकैकं पावनं स्मृतम्"—इति।

गृहस्थस्य तु शुक्लायामेव नित्योपवासः,—इत्युक्तम्। नैमित्तिक-काम्योपवासौ तु कृष्णायामपि कर्त्तव्यौ। तत्र, नैमित्तिकः स्मृत्यन्तरे पठ्यते,—

"शयनी-बोधिनी-मध्ये या कृष्णैकादशी भवेत्।
सैवोपोष्या गृहस्थेन नान्या कृष्णा कदाचन"—इति।

काम्यस्तु स्कन्दपुराणे,—

"पितृणां गतिमन्विच्छन् कृष्णायां समुपोषयेत्"—इति।

सनत्कुमारः,—

"भानुवारेण संयुक्ता कृष्णा संक्रान्ति-संयुता।

एकादशी सदोपोष्या सर्वसम्पत्करी तिथिः"—इति।

मत्स्यपुराणेऽपि,—

"एकादश्यान्तु कृष्णायामुपोष्य विधिवन्नरः।

पुत्रानायुः समृद्धिञ्च सायुज्यञ्च स गच्छति*"—इति।

दिनक्षये पुत्रवतो गृहस्थस्योपवासो निषिद्धः। तथा च पितामहः†,—

"एकादश्यां दिनक्षये उपवासं करोति यः।

तस्य पुत्राविनश्यन्ति मघायां पिण्डतो‡ यथा"—इति।

मत्स्यपुराणे,—

"दिनक्षयेऽर्कसंक्रान्तौ ग्रहणे चन्द्रसूर्य्ययोः।

उपवासं न कुर्वीत पुत्र-पौत्र-समन्वितः"—इति।

दिनक्षय-लक्षणं पद्मपुराणे,—

"द्वौ तिथ्यन्तावेकवारे यस्मिन् स स्याद्दिनक्षयः"—इति।

वशिष्ठोऽपि,—

"एकस्मिन् सावने त्वह्नि तिथीनान्त्रितयं यदा।

तदा दिनक्षयः प्रोक्तः तत्र साहस्रिकं फलम्"—इति।

फलमत्रोपवास-व्यतिरिक्त-दानादि-जन्यं द्रष्टव्यं, उपवासस्य निषिद्धत्वात्। ईदृशे विषये किं कर्त्तव्यमित्याकाङ्क्षायां वायुपुराणे पठ्यते,—

"उपवासे निषिद्धे तु भक्ष्यं किञ्चित् प्रकल्पयेत्।

न दुष्यत्युपवासेन उपवास-फलं लभेत्।

---

* सम्गच्छति,—इति वि॰ पुस्तके पाठः।

† पद्मपुराणे,—इति वि॰ पुस्तके पाठः।

‡ पिण्डदो,—इति वि॰ पुस्तके पाठः।

नक्तं हविष्यान्नमनोदनं वा
फलन्तिलाः क्षीरमथाम्बु चाज्यम्।
यत्पञ्चगव्यं यदि चापि वायुः
प्रशस्तमत्रोत्तरमुत्तरञ्च"—इति॥

उपवासासमर्थस्तु एकभक्तादीनि कुर्य्यात्। तथा च स्मृतिः,—

"उपवासे त्वशक्तानामशीतेरूर्द्ध्वजीविनाम्।
एकभक्तादिकं कार्य्यमाह बौधायनो मुनिः"—इति।

मार्कण्डेयपुराणे*,—

"एकभक्तेन नक्तेन तथैवायाचितेन च।
उपवासेन दानेन न निर्द्वादशिको भवेत्"—इति।

कूर्मपुराणेऽपि,—

"एकभक्तेन नक्तेन क्षीणवृद्धातुरः क्षिपेत्।
नातिक्रमेत् द्वादशीन्तु उपवासव्रतेन च"—इति।

स्मृत्यन्तरेऽपि,—

"एकभक्तेन नक्तेन बालवृद्धातुरः क्षिपेत्।
पयोमूलं फलं वापि न निर्द्वादशिको भवेत्"—इति।

भविष्यत्पुराणे,—

"एकादश्यामुपत्रसेन्नक्तं वाऽपि समाचरेत्"—इति।

नित्यकाम्ययोरशक्तास्तु प्रतिनिधिभिर्व्रतं कारयेयुः। तथा च विष्णुरहस्ये,—

---

* मार्कण्डेयोऽपि,—इति वि॰ पुस्तके पाठः।

"असामर्थ्ये शरीरस्य व्रते च समुपस्थिते ।
कारयेद्धर्मपत्नीं वा पुत्रं वा विनयान्वितम्"—इति ।

पैठीनसिः,—

"भार्य्या पत्युर्व्रतं कुर्य्याद्भार्य्यायाश्च पतिर्व्रतम् ।
असामर्थ्ये परस्ताभ्यां व्रतभङ्गो न जायते"—इति ।

स्कन्दपुराणे,—

"पुत्रं वा विनयोपेतं भगिनीं भ्रातरं तथा ।
एषामभावएवान्यं ब्राह्मणं विनियोजयेत्"—इति ॥

अन्यत्रापि,—

"भ्रातरं भगिनीं शिष्यं पुत्रं वा विनियोजयेत् ।
तदभावे तूपवासं कारयेत् ब्राह्मणादिभिः"—इति ।

मृत्यन्तरेऽपि,—

"पितृ-मातृ-पति-भ्रातृ-श्वश्रू-गुर्वादि-भूभुजाम्* ।
उद्दिश्यार्थमुपोषित्वा स्वयञ्च फलभाग्भवेत्"—इति ।

कात्यायनः,—

"पितृ-मातृ-स्वसृ-भ्रातृ-गुर्व्वर्थे च विशेषतः ।
उपवासं प्रकुर्वाणः पुण्यं शतगुणं लभेत् ॥
दक्षिणा नात्र दातव्या† शुश्रूषा विहिता च सा ।
नारी च पतिमुद्दिश्य एकादश्यामुपोषिता ॥

---

* गुर्व्वार्य्यभूभुजाम्,—इति वि॰ पुस्तके पाठः ।
† कर्त्तव्या,—इति पाठान्तरम् ।

पुण्यं शतगुणं* प्राहुर्मुनयः पारदर्शिनः।
उपवासफलं तस्याः पतिः प्राप्नोत्यसंशयम्॥
राज्यस्य† क्षत्रियार्थे च एकादश्यामुपोषितः।
पुरोधाः क्षत्रियस्यार्द्धं‡ फलं प्राप्नोति निश्चितम्॥
पितामहादीनुद्दिश्य§ एकादश्यामुपोषणे।
कृते तु तत्फलं‖ विप्राः, समग्रं फलमाप्नुयुः।
कर्त्ता दशगुणं पुण्यं प्राप्नोत्यत्र न संशयः।
यमुद्दिश्य कृतं सोऽपि सम्पूर्णं फलमाप्नुयात्"—इति।

पुराणान्तरे च,—
राज्यस्यानाधिपार्थे च एकादश्यामुपोषितः।
पुरोधाः क्षत्रियस्यार्द्धं फलं प्राप्नोति निश्चितम्"—इति¶।

प्रतिनिधौ च कश्चित् विशेषः स्मर्य्यते,—
"काम्ये प्रतिनिधिर्नास्ति नित्ये नैमित्तिके च सः।
काम्येऽप्युपक्रमादूर्ध्वं केचित् प्रतिनिधिं विदुः"—इति।

अयमर्थः। नित्यं नैमित्तिकञ्च प्रतिनिधिनाऽप्युपक्रम्य कारयेत्। काम्यन्तु स्वसामर्थ्यं परीक्ष्य स्वयमेवोपक्रम्य कुर्य्यात्। असामर्थ्ये उपक्रमा-

* क्रतुशतं,—इति वि॰ पुस्तके पाठः।
† राज्यस्य,—इति मु॰ पुस्तके पाठः।
‡ पुरोधाः क्षत्रियः सार्द्धं,—इति वि॰ पुस्तके पाठः।
§ मातामहादीनुद्दिश्य,—इति वि॰ पुस्तके पाठः।
‖ कृते ते तु फलं,—इति वि॰ पुस्तके पाठः।
¶ पुराणान्तरे च,—इत्यारभ्य, इति,—इत्यन्तं नास्ति मु॰ पुस्तके।

कुर्य्यं प्रतिनिधिनाऽपि तत्कारयेत्। उपवासाकरणे प्रायश्चित्तमुच्यते —

"अष्टम्याञ्च चतुर्दश्यां दिवा भुक्त्वैन्दवञ्चरेत्।
एकादश्यां दिवा रात्रौ नक्तं चैव तु पर्वणि"—इति।

मत्स्यान्तरे,—

"अर्कें पर्वद्वये रात्रौ चतुर्दश्यष्टमी दिवा।
एकादश्यामहोरात्रं भुक्त्वा चान्द्रायणं चरेत्"।

## अथ काम्योपवास-क्रमः।

तत्राङ्गिराः,—

"सायमाद्यन्तयोरह्नोः सायं प्रातश्च मध्यमे।
उपवास-फलं प्रेप्सुर्जह्याद्भक्त-चतुष्टयम्"—इति।

देवलः,—

"दशम्यामेकभक्तस्तु मांस-मैथुन-वर्जितः।
एकादशीमुपवसेत् पक्षयोरुभयोरपि॥
देवतास्तस्य तुष्यन्ति कामिकन्तस्य सिद्ध्यति"—इति।

बृहस्पतिरपि,—

"दिवा निद्रां परान्नञ्च पुनर्भोजन-मैथुने।
क्षौद्रं कांस्यामिषन्तैलं द्वादश्यामष्ट वर्जयेत्"—इति।

कूर्मपुराणे,—

"कांस्यं मांसं मसूरांश्च चणकान् कोरदूषकान्[१]।
शाकं मधु परान्नञ्च त्यजेदुपवसन् स्त्रियम्"—इति।

स्मृत्यन्तरेऽपि,—

(१) कोरदूषको धान्यप्रभेदः सुश्रुतादौ उल्लिखितः।

"शाकं मांसं मसूरांश्च पुनर्भोजन-मैथुने।
द्यूतमत्यम्बुपानञ्च दशम्यां वैष्णवस्त्यजेत्"—इति।

विष्णुधर्मे,—

"असम्भाष्यान् हि सम्भाष्य तुलसीतसिकादलम्।
आमलक्याः फलं वाऽपि पारणे प्राश्य शुद्ध्यति॥
असकृज्जलपानञ्च दिवा स्वापञ्च मैथुनम्।
ताम्बूलचर्वणं मांसं वर्जयेत् व्रतवासरे"—इति।

वसिष्ठः,—

"उपवासे तथा श्राद्धे न खादेद्दन्तधावनम्।
दन्तानां काष्ठसंयोगोहन्ति सप्त कुलानि च"—इति।

दन्तधावने प्रायश्चित्तं विष्णुरहस्ये,—

"श्राद्धोपवास-दिवसे खादित्वा दन्तधावनम्।
गायत्र्याः शतसम्पूतमम्बु प्राश्य विशुध्यति"—इति।

हारीतः,—"पतित-पाखण्डि* नास्तिक-सम्भाषणमनृताश्लीलादिक-मुपवासादिषु वर्जयेत्"—इति। कूर्मपुराणे,—

"बहिर्ग्रामान्त्यजान् सूतिं पतितञ्च रजस्वलाम्।
न स्पृशेन्नाभिभाषेत नेक्षेत व्रतवासरे"—इति।

विष्णुरहस्ये,—

"स्मृत्यालोकनगन्धादि खादनं परिकीर्त्तनम्।
अन्नस्य वर्जयेत् सर्वं ग्रासानाञ्चाभिकाङ्क्षणम्॥

---

* पाषण्ड—इति क॰ वि॰ पुस्तकयोः पाठः।

गात्राभ्यङ्गं शिरोभ्यङ्गं ताम्बूलञ्चानुलेपनम् ।
व्रतस्थो वर्ज्जयेत् सर्वं यच्चान्यच्च निराकृतम्"—इति ।

ब्रह्माण्डपुराणेऽपि*,—

"कांस्यं मांसं सुरां क्षौद्रं लोभं वितथ-भाषणम् ।
व्यायामञ्च प्रवासञ्च दिवास्वप्नं तथाऽञ्जनम् ॥
तिलपिष्टं मसूरांश्च द्वादशैतानि वैष्णवः ।
द्वादश्यां वर्ज्जयेन्नित्यं सर्वपापैः प्रमुच्यते"—इति ।

एकादश्यां श्राद्धं कृत्वाऽपि न भोक्तव्यम् । तदाह कात्यायनः,—

"उपवासो यदा नित्यः श्राद्धं नैमित्तिकं भवेत् ।
उपवासं तदा कुर्य्यादाघ्राय पितृसेवितम्"—इति ।

तथा,—

"मातापित्रोः क्षये प्राप्ते भवेदेकादशी यदा ।
अभ्यर्च्य पितृ-देवांश्चाजिघ्रेत पितृ-सेवितम्—इति † ।

यत्तु वचनम्,—

"श्राद्धं कृत्वा तु यो विप्रो न भुङ्क्ते पितृ-सेवितम् ।
हविर्द्देवा न गृह्णन्ति कव्यञ्च पितरस्तथा"—इति ।

तदेकादशी-व्यतिरिक्त-विषयम् । आघ्राणेनापि भोजन-कार्य्यं सिद्ध्यति तत्र भोजन-कार्य्ये विधानात् ।

---

* ब्रह्मपुराणे,—इति वि॰ पुस्तके पाठः ।

† तथा,—इत्यादि, इति,—इत्यन्तं नास्ति मु॰ पुस्तके

## अथमिह व्रतानुष्ठान-क्रमः।

दशम्यां एकभक्तं कृत्वाऽनन्तरं दन्तधावनं कुर्य्यात्। तथा च

"दशम्यामेकभुक्‌भूत्वा खादयेत् दन्तधावनम्"—इति।

अनन्तरं दशम्यां रात्रौ नियम-ग्रहणं कुर्य्यात्। तदुक्तं ब्रह्मवैवर्त्ते,—

"प्राप्ते हरिदिने सम्यग्विधाय नियमं निशि।

दशम्यामुपवासस्य प्रकुर्य्यात् वैष्णवं व्रतम्"—इति।

नियमोनारदीये स्मर्य्यते,—

"अक्षारलवणाः सर्वे हविष्यान्न-निषेविणः।

अवनी-तल्प-शयनाः प्रिया-सङ्ग-विवर्जिताः"—इति।

ततः प्रातरुत्थायैकादश्यां वाह्याभ्यन्तरशुद्धिं विदध्यात्। तत्प्रकारश्च,—

"शरीरमन्तःकरणोपघातं

वाचश्च विष्णुर्भगवानशेषम्।

शमन्नयत्वस्तु ममेह शर्म

पायादनन्तो हृदि सन्निविष्टः॥

अन्तःशुद्धिं बहिः शुद्धिं शुद्धाधर्ममयोऽच्युतः।

स करोतु ममैतस्मिन् शुचिरेवास्मि सर्वदा॥

वाह्योपघातानमघो वोढुं च भगवानजः।

शमन्नयत्वनन्तात्मा विष्णुश्चेतसि संस्थितः"—इति।

अनन्तरं प्रातः सङ्कल्पं कुर्य्यात्। तदुक्तं वाराहपुराणे,—

"गृहीत्वौदुम्बरं पात्रं वारिपूर्णमुदङ्मुखः।

उपवासन्तु गृह्णीयात् यद्वा वार्य्येव धारयेत्"—इति।

चौदुम्बरं ताम्रपात्रम्। सङ्कल्पमाह विष्णुः,—

"एकादश्यां निराहारः स्थित्वाऽहमपरेऽहनि।

भोक्ष्यामि पुण्डरीकाक्ष, शरणं मे भवाच्युत॥

इत्युच्चार्य्य ततो विद्वान् पुष्पाञ्जलिमथार्पयेत्"—इति।

अनन्तरं तत्पात्र-गतञ्जलं पिबेत्। तदाह कात्यायनः,—

"अष्टाक्षरेण मन्त्रेण त्रिर्जप्तेनाभिमन्त्रितम्।

उपवास-फलप्रेप्सुः पिबेत्पात्र-गतञ्जलम्"—इति।

विद्धैकादश्युपवासे रात्रौ सङ्कल्पः। तथा च नारदीये,—

"विद्धोपवासे सकलं दिनन्त्यक्त्वा समाहितः।

रात्रौ सम्पूजयेत् विष्णुं सङ्कल्पञ्च तदाऽऽचरेत्"—इति।

मध्यरात्रादुपरि दशमी-युक्ता चेदेकादशी, तस्यां मध्याह्नस्योपरि सङ्कल्पः। तथा च स्मृतिः,—

"दशम्याः सङ्गदोषेण मध्यरात्रात् परेण तु।

वर्जयेच्चतुरो यामान् सङ्कल्पार्चनयोः सदा*"—इति।

एकादश्यां देवस्योपरि पुष्पमण्डपं कारयेत्। तदुक्तं ब्रह्मपुराणे,—

"एकादश्यां शुभे† पक्षे निराहारः समाहितः।

नानापुष्पैर्मुनिश्रेष्ठ, विचित्रं पुष्पमण्डपम्॥

कृत्वा चावरणं पश्चात् जागरङ्कारयेन्निशि"—इति।

तस्मिन्मण्डपे देवमर्चयेत्। तदुक्तं ब्रह्मपुराणे,—

---

* तदा,—इति वि॰ पुस्तके पाठः।

† सिते,—इति वि॰ पुस्तके पाठः।

"एकादश्यां शुभे पक्षे निराहारः समाहितः।
स्नात्वा सम्यग्विधानेन सोपवासोजितेन्द्रियः॥
सम्पूज्य विधिवद्विष्णुं श्रद्धया सुसमाहितः।
पुष्पैर्गन्धैस्तथाधूपैर्द्दीपैर्नैवेद्यकैः परैः॥
उपचारैर्बहुविधैर्जपहोमैः प्रदक्षिणैः।
स्तोत्रैर्नानाविधैर्दिव्यैर्गीतवाद्यैर्मनोहरैः॥
दण्डवत् प्रणिपातैश्च जयशब्दैस्तथोत्तमैः।
एवं सम्पूज्य विधिवद्रात्रौ कृत्वा प्रजागरम्॥
याति विष्णोः परं स्थानं नरोनास्त्यत्र संशयः"—इति।

द्वादश्यां कर्त्तव्यमाह कात्यायनः,—

"प्रातः स्नात्वा हरिं पूज्य उपवासं समर्पयेत्।
अज्ञानतिमिरान्धस्य व्रतेनानेन केशव॥
प्रसाद-सुमुखोनाथ,* ज्ञान-दृष्टि-प्रदोभव।
मन्त्रं अर्पित्वा हरये निवेद्योपोषणं व्रती॥
द्वादश्यां पारणं कुर्य्यात् वर्जयित्वा श्रुपोदकीम्"—इति।

सूतकादौ तु दानार्चन-रहितम् उपवासमात्रं कुर्य्यात्। तदुक्तं कूर्म-पुराणे,—

"काम्योपवासे प्रक्रान्ते त्वन्तरा मृत-सूतके।
तत्र काम्यव्रतं कुर्य्यात् दानार्चन-विवर्जितम्"—इति।

वाराहपुराणे,—

"सूतके च नरः स्नात्वा प्रणम्य मनसा हरिम्।

---

* प्रसाद सुमुखोनाथ,—इति क॰ वि॰ पुस्तकयोः पाठः।

एकादश्यां न भुञ्जीत व्रतमेवं न लुप्यते ॥

मृतकेऽपि न भुञ्जीत एकादश्यां सदा नरः ।

द्वादश्यान्तु समश्नीयात् स्नात्वा विष्णुं प्रणम्य च"—इति ।

तत्र परित्यक्तं देवार्चनादिकं सूतकान्ते कुर्य्यात् । तदुक्तं मत्स्यपुराणे,—

"सूतकान्ते नरः स्नात्वा पूजयित्वा जनार्दनम् ।

दानं दत्वा विधानेन व्रतस्य फलमश्नुते"—इति ।

स्त्रीणां रजोदर्शनेऽपि न व्रतत्यागः, किन्तु देवार्चनादि-रहितं सूतकादाविवोपवासमात्रं कार्य्यम् । तदाह पौलस्त्यः,—

"एकादश्यां न भुञ्जीत नारी दृष्टे रजस्यपि"—इति ।

भविष्यत्पुराणेऽपि,—

"सम्प्रवृत्तेऽपि रजसि न त्याज्यं द्वादशीव्रतम्"—इति ।

मत्स्यव्रतेऽपि,—

"प्रारब्ध-दीर्घ-तपसां नारीणां यद्रजोभवेत् ।

न तत्रापि व्रतस्य स्यादुपरोधः कदाचन"—इति ।

शुद्ध्यनन्तरं देवतार्चनादिकं कुर्य्यात् । तथा च स्मृतिः,—

"स्नात्वा भर्तुश्चतुर्थेऽह्नि शुद्धा स्यात्परिचारणे ।

पञ्चमेऽहनि शुद्धा स्यात् दैवे पित्र्ये च कर्मणि"—इति ।

नित्योपवासप्रकारो* विष्णुरहस्येऽभिहितः,—

"अथ नित्योपवासी चेत् सायं प्रातर्भुजिक्रियाम् ।

वर्जयेन्मतिमान् विप्रः सम्प्राप्ते हरिवासरे"—इति ।

ब्रह्मवैवर्त्तेऽपि,—

---

* नित्योपवासो,—इति मु॰ पुस्तके पाठः ।

"इति विज्ञाय कुर्वीतावश्यमेकादशीव्रतम्।
विशेष-नियमासक्तोऽहोरात्रं भुक्ति-वर्जितः॥
निग्रहीतेन्द्रियः श्रद्धा-सहायो विष्णु-तत्परः।
उपोष्यैकादशीं पापान्मुच्यते नात्र संशयः"—इति।

शक्तौ सत्यां नियमानाचरेत्। तथा च कात्यायनः,—

"शक्तिमांस्तु पुनः कुर्यान्नियमं सविशेषणम्"—इति।

यदा द्वादश्यां श्रवणनक्षत्रं भवेत्तदा शुद्धैकादशीमपि परित्यज्य द्वादश्यामेवोपवसेत्। तथाच नारदीये,—

"शुक्ला वा यदि वा कृष्णा द्वादशी श्रवणान्विता।
तयोरेवोपवासस्तु त्रयोदश्यान्तु पारणम्"—इति।

तथा,—

"एकादश्यामविद्धायां, सम्प्राप्ते श्रवणे तदा।
उपोष्या द्वादशी शुद्धा सर्वपापक्षयावहा"—इति।

यदा त्रयोदश्यां द्वादश्याः कलाद्वयमप्युदये सम्भवति, तदा द्वादशीकाल एव पारणं कार्य्यम्[†]। तदुक्तं नारदीये,—

"भवेद्यत्र त्रयोदश्यां द्वादश्यास्तु कलाद्वयम्।
द्वादश द्वादशीर्हन्ति त्रयोदश्यान्तु पारणम्॥
कलाद्वयं त्रयं वाऽपि द्वादशीं न त्वतिक्रमेत्।
पारणे मरणे नृणां तिथिस्तात्कालिकी स्मृता"—इति।

ननु द्वादश्यतिक्रमेऽपि नास्ति दोषः, "सा तिथिः सकला ज्ञेया"—इति वचनेन शाकल्याभिधानादिति चेत्। नैवम्। साकल्यस्य स्नानादि-

† न तु त्रयोदश्याम्,—इत्यधिकं वि० पुस्तके।

विषयत्वात्। वाक्यशेषे, "स्नान-दान-जपादिषु"—इत्यभिधानात्। पारणे तु न साकल्यवचनं प्रवर्त्तते, "तिथिस्तात्कालिकी स्मृता"—इति वचनात्।

द्वादशी-काले यदा पारणं, तदा ततः प्रागेव सर्वाः क्रियाः कर्त्तव्याः। तदुक्तं नारदीये,—

"अल्पायामथ विप्रेन्द्र, द्वादश्यामरुणोदये।
स्नानार्चन-क्रियाः कार्य्या दानहोमादि-संयुताः॥
एतस्मात् कारणात् विप्रः प्रत्यूषे स्नानमाचरेत्।
पितृ-तर्पण-संयुक्तं स्वल्पां दृष्ट्वा च द्वादशीम्॥
महाहानि-करी ह्येषा द्वादशी लङ्घिता नृणाम्।
करोति धर्महरणं अस्नातेव सरस्वती"—इति।

गारुड़पुराणेऽपि,—

"यदा स्वल्पा द्वादशी स्यादपकर्षो भुजेर्भवेत्।
प्रातर्माध्याह्निकस्यापि तत्र स्यादपकर्षणम्"—इति।

स्कन्दपुराणेऽपि,—

"यदा भवेदतीवाल्पा द्वादशी पारणादिने।
उषःकाले द्वयं कुर्य्यात् प्रातर्माध्याह्निकं तदा"—इति।

तत्र पारणासम्भवे अद्भिः पारणं कुर्य्यात्। तदाह कात्यायनः,—

"सन्ध्याऽऽदिकं भवेन्नित्यं पारणन्तु निमित्ततः।
अद्भिस्तु पारयित्वाऽथ नैत्यिकान्ते भुजिर्भवेत्"—इति।

देवलोऽपि,—

"सङ्कटे विषमे प्राप्ते द्वादश्यां पारयेत्कथम्।

अद्भिस्तु पारणं कुर्य्यात् पुनर्भुक्तं न दोषकृत्"—इति।

यदा कलयाऽपि द्वादशी नास्ति, तदा त्रयोदश्यामपि पारणं कुर्य्यात्।
तदुक्तं नारदीये,—

"त्रयोदश्यान्तु शुद्धायां पारणं पृथिवी-फलम्।
शतयज्ञाधिकं वाऽपि नरः प्राप्नोत्यसंशयम्"—इति।

पारणञ्च नैवेद्य-तुलसी-मिश्रितं कुर्य्यात्। तदुक्तं स्कन्दपुराणे,—

"कृत्वा चैवोपवासन्तु योऽश्नाति द्वादशी-दिने।
नैवेद्यं तुलसी-मिश्रं हत्या-कोटि-विनाशनम्"—इति।

## अथैकादशी-महिमा।

तत्र वशिष्ठः,—

"एकादशी-समुत्थेन वह्निना पातकेन्धनम्।
भस्मतां याति राजेन्द्र अपि जन्म-शतोद्भवम्॥
नेदृशं पावनं किञ्चिन्नराणां भुवि विद्यते।
यादृशं पद्मनाभस्य दिनं पातक-हानि दम्॥
तावत्पापानि देहेऽस्मिंस्तिष्ठन्ति मनुजाधिप।
यावन्नोपवसेज्जन्तुः पद्मनाभ-दिनं शुभम्॥
अश्वमेध-सहस्राणि वाजपेय-शतानि च।
एकादश्युपवासस्य कलां नार्हन्ति षोडशीम्॥
एकादशेन्द्रियैः पापं यत्कृतं भवति प्रभो।
एकादश्युपवासेन तत्सर्वं विलयं व्रजेत्॥
एकादशी-समं किञ्चित् पाप-त्राणं न विद्यते।

स्वर्ग-मोक्ष-प्रदा ह्येषा राज्य-पुत्र-प्रदायिनी ॥
सुकलत्र-प्रदा ह्येषा शरीरारोग्य-दायिनी ।
न गङ्गा न गया भूप, न काशी न च पुष्करम् ॥
न चापि कौरवं क्षेत्रं न रेवा * न च देविका † ।
यमुना चन्द्रभागा च तुल्या भूप, हरेर्दिनात् ॥
अनायासेन राजेन्द्र, प्राप्यते वैष्णवं पदम् ।
चिन्तामणि-समा ह्येषा ह्यथवाऽपि निधेः समा ॥
माङ्गल्य-पादप-प्रख्या देवदेवोपमा ‡ तथा"—इति ।

अस्यामेकादश्यां यान्युपवास-प्रतिनिधिरूपाणि एकभक्त-नक्ता-याचितादीनि § तेषां प्रतिपदुक्तन्यायेनोपवास-तिथावनुष्ठानम् । यानि तु स्वतन्त्राण्येकभक्त-नक्तादीनि, तेषां पूर्वोक्त-न्यायेन मध्याह्नादि-व्यापि-तिथि-ग्रहण-प्राप्तौ दशमी-विद्धा प्रतिषिध्यते द्वादशीकल्पे,—

"पूर्णा-विद्धां दिनार्द्धेन नन्दां पूर्णामपि त्यजेत् ।
यदीच्छेदात्म-सन्तानं नियमेषु चतुर्ष्वपि ॥
नोपोषितञ्च नक्तञ्च नैकभक्तमयाचितम् ।
नन्दायां पूर्ण-विद्धायां कुर्यादैश्वर्य-मोहितः ॥
एकादशी युता शस्ता द्वादश्या समुपोषणे ।
नक्ते चायाचिते नित्यमेकभक्ते तथाऽनघ ॥

* देवा,—इति वि॰ पुस्तके पाठः ।
† [illegible]देविका,—इति मु॰ पुस्तके पाठः ।
‡ [illegible]ख्यपादपप्रख्या वेदवादोपमा,—इति वि॰ पुस्तके पाठः ।
§ नक्तायाचितदानानि,—इति मु॰ पुस्तके पाठः ।

नक्तं वाऽयाचितं तात, नैकभक्तमथाहरेत्।

दशमी-सहितं दानमनर्थं हरिवासरे"—इति ॥

दिनार्द्धेन सार्द्ध-सप्त-मुहूर्त्तैरित्यर्थः। एतदेवाभिप्रेत्य "दिक्पञ्चदश-भिस्तथा"—इत्युदाहृतम्। तथा,—

"सार्द्ध-सप्त-मुहूर्त्तैस्तु वेधोऽयं बाधते व्रतम्"—इति च।

इतोन्यूनवेधे तु तिथ्यन्तरवन्मध्याह्नादि-व्याप्तिर्ग्रहीतव्या ॥

॥ इत्येकादशी-निर्णयः ॥

---

## अथ द्वादशी निर्णीयते।

सा च युग्मादि-शास्त्रेण पूर्व-विद्धा ग्राह्या। स्कन्दपुराणेऽपि,—

"द्वादशी च प्रकर्त्तव्या एकादश्या युता विभो।

सदा कार्या च विद्वद्भिर्विष्णुभक्तैश्च मानवैः"—इति ॥

उत्तर-विद्धां प्रतिषेधति वृद्धवसिष्ठः,—

"द्वितीया पञ्चमी वेधाद्दशमी च त्रयोदशी ॥

चतुर्द्दशी चोपवासे हन्युः पूर्वोत्तरे तिथी"—इति।

नन्वेवं सत्येकादश्युपवासाद्द्वादश्युपवासः सत्युभयमेकस्मिन्दिने प्राप्नोति। सत्यं, तथापि चोभयस्यान्योन्यं विरोधाभावात्तन्त्रेणानुष्ठानं भविष्यति। नन्वेकं व्रतमसमाप्य व्रतान्तरमनुष्ठातुमशक्यम्,

"असमाप्ते व्रते पूर्वे नैव कुर्याद्व्रतान्तरम्"—

इति शास्त्रात्। मैवम्, इदं हि शास्त्रमेक-व्रतस्य मध्ये व्रतान्तरोपक्रमं निषेधति, प्रकृते तु व्रत-द्वयस्यापि सहैवोपक्रम इति तन्त्रेणानुष्ठानं भवि-

ष्यति। नन्वस्त्वेवं खण्डतिथौ, संपूर्णतिथौ त्वेकादशी-द्वादश्युपवासौ द्वौ नैरन्तर्येण प्राप्नुतः। तत्र पारणमन्तरेण प्रथमोपवासस्यासमाप्तत्वात् द्वितीयोपवास-प्रक्रमो न सम्भवतीति चेत्। मैवम्, अद्भिः पारणं कृत्वा द्वितीयोपवासस्य प्रक्रमयितुं शक्यत्वात्। तादृशन्तु पारणमशितानशितो भयात्मकम्। तत्राशितरूपत्वात् पूर्वोपवासं परिसमापयति, अनशित-रूपत्वेनोत्तरोपवासं न विहन्ति। एतच्च द्व्यात्मकत्वं दर्शपूर्णमास-प्रकरणे याजमान * ब्राह्मणे श्रूयते। "यदनश्नन्नुपवसेत्चोधुकः स्याद्यदश्नीयात् रुद्रोऽस्य पशूनभिमन्येत यदपोऽश्नाति तन्नैवाशितं नैवानशितं न चोधुकोभवति नास्य रुद्रः पशूनभिमन्यते"—इति। तस्मादुदक-पारणेनोपवास-द्वय-निर्वाहः। एतच्च सर्व-तिथि-साधारणम्। प्रकृते त्वेकादशी-द्वादश्योर्दैवतैक्यादुदकपारणमन्तरेणापि न कश्चिद्दोषः। अतएव स्मर्यते,—

"एकादशीमुपोष्यैव द्वादशीं समुपोषयेत्।
न तत्र विधि-लोपः स्यादुभयोर्दैवतं हरिः"—इति॥

उपवास-द्वयाशक्तौ केवलद्वादश्युपवासेनोभयोः फलं सिद्ध्यति। तथा च स्मृतिः,—

"एवमेकादशीं † भुक्त्वा द्वादशीं समुपोषयेत्।
पूर्वोपवासजं पुण्यं सर्वं प्राप्नोत्यसंशयम्"—इति॥

द्वादश्यान्तु काम्योपवासोमार्कण्डेयेन दर्शितः,—

---

* यजमान,—इति वि० पुस्तके पाठः॥
† एकामेकादशीं,—इति मु० पुस्तके पाठः।

"द्वादश्यामुपवासेन सिद्धार्थो भूप, सर्वशः॥
चक्रवर्त्तित्वमतुलं सम्प्राप्नोत्यतुलां श्रियम्"—इति।

॥ इति द्वादशीनिर्णयः॥

---

## ॥ अथ त्रयोदशी निर्णीयते॥

सा च शुक्ल-कृष्ण-पक्ष-भेदेन व्यवतिष्ठते। तत्र शुक्ल-त्रयोदशी पूर्व-विद्धा ग्राह्या। तदुक्तं ब्रह्मवैवर्त्ते,—

"त्रयोदशी प्रकर्त्तव्या द्वादशी-सहिता मुने।
भूत-विद्धा न कर्त्तव्या दर्शः पूर्णा कदाचन॥
वर्जयित्वा मुनिश्रेष्ठ, सावित्री-व्रतमुत्तमम् *"—इति।

यद्यप्यत्र शुक्लपक्षशब्दो नास्ति, तथापि कृष्णत्रयोदश्याः पर-विद्धायाः† वाचनिकत्वात्पूर्व-विद्धतायाः शुक्लपक्ष-विषयत्वं पर्य्यवस्यते। सायङ्काल-त्रिमुहूर्त्तमात्र-व्यापित्वेन पूर्वविद्धतायां प्राप्तायां प्रतिपदद्ववापराह्ण‡ संबन्धोऽपेक्षितः,—इति द्रष्टव्यम्। तदुक्तं स्कन्दपुराणे,—

"त्रयोदशी प्रकर्तव्या या भवेदापराह्णिकी"—इति।

कृष्णत्रयोदश्याः पर-विद्धत्वमुक्तं निगमे,—

"षष्ठ्यष्टमी अमावास्या कृष्णपक्षे त्रयोदशी।
एताः पर-युताः पूज्याः पराः पूर्व-युतास्तथा"—इति॥

---

* नास्तीदमर्द्धं वि० पुस्तके।

† पर-विद्धतायाः,—इति वि० पुस्तके पाठः।

‡ प्रतिपदद्वास्याप्यपराह्ण,—इति वि० पुस्तके पाठः।

यत्तु वृहद्वशिष्ठवचनम्,—

"द्वितीया पञ्चमी वेधाद्दशमी च त्रयोदशी।

चतुर्दशी चोपवासे हन्युः पूर्वोत्तरे तिथी"—इति॥

तच्छुक्लपक्ष-विषयम्। यदा तु कृष्णपक्षे पर-विद्धा न लभ्यते, तदा पूर्व-विद्धा ग्राह्या। तदाह वसिष्ठः,—

"एकादशी तृतीया च षष्ठी चैव त्रयोदशी।

पूर्व-विद्धाऽपि कर्त्तव्या यदि न स्यात्परेऽहनि"—इति॥

अनङ्गत्रयोदशी च पूर्वविद्धा। तदाह संवर्त्तः,—

"कृष्णाष्टमी बृहत्तपा सावित्री वटपैतृकी।

अनङ्गत्रयोदशी रम्भा उपोष्याः पूर्व-संयुताः"—इति॥

अनङ्गत्रयोदशी भविष्यत्पुराणे दर्शिता। "मार्गशीर्षेऽमले पक्षे"—इत्युपक्रम्य व्रतं विधाय,

"अनङ्गेन कृता ह्येषा तेनानङ्गत्रयोदशी"—

इत्युपसंहारात्। नन्वमले पक्षे,—इत्यनेन शुक्लपक्षएव तद्व्रतं विहितम्, तथा च, त्रयोदशी प्रकर्त्तव्या द्वादशी सहिता,—इत्यनेन सामान्यशास्त्रेणैवानङ्गत्रयोदश्याः पूर्व-विद्धत्वं प्राप्तम्। बाढं, तदेवानेन विशेषशास्त्रेण विस्पष्टीक्रियते॥

॥ इति त्रयोदशीनिर्णयः॥

---

## ॥ अथ चतुर्दशी निर्णीयते॥

अत्रापि शुक्ल-कृष्ण-पक्ष-भेदेन व्यवस्था भवति। तत्र, युग्म-शास्त्रेण

शुक्लचतुर्दशी पर-विद्धा ग्राह्या। तथा व्यासोऽपि,—

"शुक्ला चतुर्द्दशी ग्राह्या पर-विद्धा सदा व्रते"—इति।

पूर्वविद्धा-प्रतिषेधउत्तरविद्धा-विधिश्चेत्युभयं भविष्यत्पुराणे पठ्यते,—

"सदा कार्या त्रयोदश्या न तु दृष्टा चतुर्दशी।

पौर्णमासी-युता सा स्याच्चतुर्द्दश्या च पूर्णिमा"—इति।

नारदीयेऽपि,—

"तृतीयैकादशी षष्ठी शुक्लपक्षे चतुर्द्दशी।

पूर्वविद्धा न कर्त्तव्या कर्त्तव्या पर-संयुता"—इति॥

यत्तु भाद्रपद-शुक्लचर्द्दश्यामनन्तव्रतं भविष्योत्तरेऽभिहितम्, तत्र पूर्व-विद्धा पर-विद्धा वा मध्याह्न-व्यापिनी ग्राह्येति केचिदाहुः। लिङ्गञ्च तत्र प्रमाणत्वेनोदाहरन्ति,—

"मध्याह्ने भोज्यवेलायां समुत्तीर्य सरित्तटे।

ददर्श शीला सा स्त्रीणां समूहं रक्तवाससम्॥

चतुर्द्दश्यामर्चयन्तं भक्त्या देवं पृथक् पृथक्"—इति।

अत्र, मध्याह्ने भोज्यवेलायाम्,—इत्यनेन मध्याह्नस्य कर्म-कालत्वं प्रतीयते। अतस्तद्व्यापिनी तिथिर्ग्राह्या। नैतत्सारम्। यथा विनायक-व्रते, "मध्याह्ने पूजयेन्नृप"—इति मध्याह्नः कर्म-कालत्वेन विहितः, नात्र तथा विधिरस्ति। उदाहृतन्तु लिङ्गमर्थवाद-गतत्वान्न स्वातन्त्र्येण कस्यचिदर्थस्य प्रमापकं, किन्तु सति प्रमाणान्तरे तस्योपोद्बलकं भवति। नचात्र प्रमाणान्तरं पश्यामः। अतोन मध्याह्नः कर्मकालः। तथा सति "दैवे ह्यौदयिकी ग्राह्या"—इति वचनेन युग्मशास्त्रादिभिश्चोदय-व्यापिनी ग्राह्या। सा च तिथ्यन्तरवत्त्रिमुहूर्त्तेति मुख्यः कल्पः, द्विमुहू-

र्त्तेत्यनुकल्पः। एवं च सति शिष्टाचारोऽप्यनुगृहीतोभवति। चैत्र-श्रावण-चतुर्द्दश्यौ शुक्लपक्षे अपि रात्रि-योगिन्यौ ग्राह्ये। तथाच बौधायनः,—

"मधोः श्रावणमासस्य शुक्ला या तु चतुर्द्दशी।
सा रात्रि-व्यापिनी ग्राह्या परा पूर्वाह्ण-गामिनी"—इति॥

परा मासान्तर-वर्त्तिनी शुक्लचतुर्द्दशी। कृष्णचतुर्द्दशी तु पूर्व-विद्धैव ग्राह्या। तथा चापस्तम्बः,—

"कृष्णपक्षेऽष्टमी चैव कृष्णपक्षे चतुर्द्दशी।
पूर्व-विद्धा तु कर्त्तव्या पर-विद्धा न कर्हिचित्"—इति॥

अपराह्ण-व्यापित्वे तु शुक्लचतुर्द्दश्यपि पूर्व-विद्धा ग्राह्या। तथा स्कन्द पुराणे,—

"चतुर्द्दशी च कर्त्तव्या त्रयोदश्या युता विभो।
मम भक्तैर्महाबाहो, भवेद्या चापराह्णिकी॥
दर्श-विद्धा न कर्त्तव्या राका-विद्धा कदाचन"—इति।

अत्र, मम भक्तैरितीश्वरोक्ति-लिङ्गाच्छिव-चतुर्द्दशी-विषयत्वं द्रष्टव्यम्। तदेवं व्रतान्तरेषु चतुर्द्दशी निर्णीता॥

## ॥ अथ शिवरात्रि-व्रतं निर्णीयते ॥

तत्रेदञ्चिन्त्यते। किमयं शिवरात्रिशब्दोरूढः, किं वा यौगिकः, उत लाक्षणिकः, अथ वा योगरूढः? इति। किं तावत् प्राप्तम्? रूढः,—इति। कुतः? तिथि-विशेषे शिवरात्रिशब्दस्य संज्ञारूपेण स्मरणात्। तथा च नागरखण्डे,—

"माघमासस्य शेषे या प्रथमा फाल्गुनस्य च।
कृष्णे चतुर्द्दशी सा तु शिवरात्रिः प्रकीर्त्तिता"—इति॥

कामिके,—

"माघमासेऽसिते पक्षे विद्यते या चतुर्द्दशी।
तद्रात्रिः शिवरात्रिः स्यात्सर्व-पुण्य-शुभावहा"—इति॥

यद्यप्यत्र, शिवस्य रात्रिः शिवरात्रिरित्यवयवार्थः प्रतीयते, तथापि योगात् रूढेर्बलवत्त्वाद्योगोऽत्र न ग्राह्यः। प्राबल्यञ्चाश्वकर्णादिशब्देष्ववगम्यते। अश्वस्य कर्णः,—इत्यवयवार्थ-प्रतीतावपि तमुपेक्ष्य रूढ्या वृक्षविशेष-वाचित्व-स्वीकारात्।

ननु, काकदन्त-परीक्षा-समानोऽयं विचारः; यद्ययं शिवरात्रिशब्दो रूढः यदि वा यौगिकः, उभयथाऽप्यनुष्ठाने विशेषाभावात्। मैवम्। अस्त्यत्र महान्विशेषः, यौगिकत्वे शिव-संबन्धि-व्रत-जातं सर्वं यस्यां यस्यां रात्रावनुष्ठीयते, सा सर्वा शिवरात्रिः स्यात्। माघमासादि-पदञ्च तदानीमुपलक्षणं भवेत्। रूढि-पक्षे तु माघमासादेर्विशेषणत्वात् तद्विशिष्टायाएकस्याएव तिथेः शिवरात्रित्वम्। अतः कर्त्तव्यएव विचारः।

तत्र, अहीन-न्यायेन रूढिमेवाद्रियामहे। तस्य च न्यायस्य सङ्ग्राहकावेतौ श्लोकौ भवतः,—

"अहीनस्य द्वादशाहं प्रकृतौ विकृतावुत।
न हीनइति योगेन प्रकृतौ तद्धि कल्प्यताम्॥
शीघ्र-धी-हेतुतारूढेरहीने विकृताविदम्।
उत्कृष्यतां द्वादशत्वं साक्षात् प्राकृत-कर्मणः"—इति॥

अयमर्थः। ज्योतिष्टोमे श्रूयते। "तिस्रएव साह्नस्योपसदो द्वादशा-

हीनस्य यज्ञस्य सवीर्यत्वाय"—इति। अङ्गा सह वर्त्तते,—इति साङ्ग-एक-दिन-निष्पाद्योज्योतिष्टोमः। तस्य प्राचीनेषु दिनेष्वङ्गत्वेनानुष्ठेया-होमाउपसच्छब्द-वाच्याः। तास्तिस्रउपसदोविधाय पुनरहीन-शब्द-वाच्यस्य कर्मणोद्वादशोपसदोविधीयन्ते।

तत्र संशयः। किमिदन्द्वादशोपसत्त्वन्द्विरात्राद्यहीन-प्रकृति-भूते साङ्ग-शब्द-वाच्ये प्रकृते ज्योतिष्टोमे निविशते, आहोस्विदहीन-शब्द-वाच्ये विकृतिरूपे द्विरात्रादावुत्कृष्यते? इति। तदर्थमिदं चिन्त्यते,—अहीन-शब्दोयौगिकोरूढोवा? इति। तत्र, न हीनः,—इति व्युत्पत्तेर्विस्पष्टं प्रतिभासाद्यौगिकएवायम्। तदर्थश्च प्रकृतावुपपन्नः। साङ्ग-प्रधानस्य सर्वस्य साक्षाद्वाचक-शब्दैरेवोपदिष्टत्वेन हीनत्वाभावात्, विकृतौ तु विशेषएव वाचक-शब्दैरुपदिश्यते, इतरत्सर्वमतिदेशात्प्राप्यते। अतः, उक्ति-सङ्कोचात् विकृतेर्हीनत्वम्। एवञ्च सति, अहीनशब्दस्य ज्योतिष्टोमे प्रवृत्ति-सम्भवात् प्रकरणानुग्रहाच्च तत्रैव द्वादशत्वं निविशते। न च पूर्ववाक्य-विहितेन त्रित्वेन बाधः शङ्कनीयः, वाक्ययोः समान-बलत्वेन व्रीहि-यववद्विकल्पोपपत्तेः। तस्मात्, ज्योतिष्टोम एव द्वादशत्व-विधिरिति प्राप्ते ब्रूमः,—

विकृतिरूपे द्विरात्रादाविदं द्वादशत्वं विधीयते। कुतः? अहीन-शब्दस्य श्रौत-प्रयोग-बाहुल्येन तत्रैव रूढत्वात्। रूढिश्च शीघ्रबुद्धि-हेतुत्वेन योगाद्बलीयसी। योगे त्ववयवार्थं प्रथमतोनिश्चित्य पश्चात्समुदायार्थोनिश्चेतव्यः,—इति विलम्बः। न चात्र प्रकरण-विरोधः शङ्कनीयः, बलीयसा वाक्येन प्रकरणस्य बाधितत्वात्। तस्मात्, इदं द्वादशत्वं प्रकृत-ज्योतिष्टोमादुत्कृष्य विकृतिषु द्विरात्रादिषु निवेशनीयम्—इति।

अत्र यथा रूढोऽहीन-शब्दस्तथा शिवरात्रि-शब्दोऽपि रूढः,—इति प्रथमः पक्षः। अपरस्त्वाह। यौगिकएवायं शिवरात्रि-शब्दः। कुतः? शिव-संबन्धमुपजीव्य तच्छब्दस्य प्रवृत्तत्वात्। तथा च स्कन्दपुराणे,—

"माघस्य कृष्णपक्षे या तिथिश्चैव चतुर्दशी।
शिवरात्रिस्तु सा ख्याता सर्व-पाप-निसूदनी॥
तस्य रात्रिः समाख्याता शिवरात्रिः शिव-प्रिया।
तस्यां सर्वेषु लिङ्गेषु सदा संक्रमते हरः॥
यानि कानि च लिङ्गानि चराणि स्थावराणि च।
तेषु संक्रमते देवि, तस्यां रात्रौ यतोहरः।
शिवरात्रिस्ततः प्रोक्ता तेन सा हर-वल्लभा"—इति॥

शिवरहस्ये,—

"तत्प्रभृत्येव देवर्षे, माघ-कृष्ण-चतुर्दशी।
शिवरात्रिः समाख्याता प्रियेयं त्रिपुर-द्विषः"—इति॥

अवन्तिखण्डे,—

"माघ-फाल्गुनयोर्मध्ये असिता या चतुर्दशी।
शिवरात्रिस्तु सा ख्याता सर्व-पाप-निसूदनी"—इति॥

तस्मात्, शिव-संबन्धिनी रात्रिः शिवरात्रिः,—इति यौगिकोऽर्थः प्रोक्षणी-न्यायेन ग्रहीतव्यः। तस्य च न्यायस्य संग्राहकावेतौ श्लोकौ —

"संस्कार-जाति-योगेषु कं ब्रूते प्रोक्षणीरिति।
संस्कारं सार्वभौमत्वाज्जातिमुद्दिशनोक्षितः॥
अन्योन्याश्रयतोनाद्योन जातिः कल्प्य-शक्तितः।
यौगिकः क्लृप्त-शक्तित्वात् कृप्तिर्याकरणे स्थिता"॥

अयमर्थः। दर्शपूर्णमासांगतया श्रूयते,—"प्रोक्षणीरासादयति"—इति। तत्र संशयः,—किमयं प्रोक्षणी-शब्दोऽभिमन्त्रणासादनाद्युदक-संस्कारं ब्रूते, किं वा जलावान्तर-जाति-विशेषम्, आहोस्वित् प्रोक्ष्यन्ते पात्राण्याभिः,—इति योगम्? तत्र, संस्कारं ब्रूते,—इति तावत्प्राप्तम्। कुतः? सार्वभौमत्वात्। सर्वेषु हि संस्कार-विधि-वाक्यादि-प्रदेशेषु प्रोक्षणी-शब्दः श्रूयते,—"प्रोक्षणीरासादयेध्माबर्हिरुपसादय",—इति प्रैष-वाक्ये प्रयोगः। "प्रोक्षणीरासादयति"—इति विधि-वाक्ये। एवमभिमन्त्रणादि-वाक्यान्यप्युदाहरणीयानि। तस्मात्, संस्कारं ब्रूते,—इत्येकः पक्षः। जातिं ब्रूते,—इति पक्षान्तरम्। लोके हि जल-क्रीडासु, "प्रोक्षणीभिरुद्वेजिताः स्मः"—इत्युदक-जातौ प्रयोगादृश्यते।

तत्र, न तावत्संस्कारं ब्रूते,—इत्याद्यः पक्षउपपद्यते। कुतः? अन्योन्याश्रयत्वात्। नापि जातिं ब्रूते,—इति द्वितीयः पक्षोयुक्तः। उदक-जातौ प्रोक्षणी-शब्द-शक्तेर्व्यवहारे पूर्वमक्लृप्तत्वेनातः परं शक्तेः कल्पनीयत्व-प्रसङ्गात्। न च योगेऽपि शक्तिः कल्पनीया, व्याकरणेनैव क्लृप्तत्वात्। व्याकरणे हि "उक्ष सेचने"—इत्यस्माद्धातोः करणे ल्युट्-प्रत्ययेन शब्दो व्युत्पादितः। तथा सति, प्रकर्षेणोक्ष्यते अनेन,—इति योगेन सेचन-साधनमुदकादिकं सर्वं प्रोक्षण-शब्द-वाच्यं सम्पद्यते। प्रकृते तु स्त्री-शब्द-वाच्यानामपां सेचन-साधनत्वात्तद्वचनस्य प्रोक्षण-शब्दस्य ङीप्-प्रत्ययान्तत्वेन प्रोक्षणीरिति द्वितीया-बहुवचनान्तः शब्दोनिष्पद्यते।

ननु, अहीनाधिकरणे रूढेः प्राबल्यमुक्तम्, प्रोक्षण्यधिकरणे च योगस्य प्राबल्यमुच्यते, अतः परस्पर-विरोधः। मैवम्। लब्धात्मिका हि रूढिर्योगमपहरति,—इति। न च प्रोक्षणी-शब्दे रूढिर्लभ्यते,

वृद्ध-व्यवहारेण जातात्रव्युत्पादितत्वात्। अहीन-शब्दोऽपि द्विरात्रादिषु न वृद्धैर्व्युत्पादितः,—इति चेत्। न, व्याकरणे व्युत्पादितत्वात्। "अह्नः खः क्रतौ"—इत्यनेन वाररुचेन वार्तिकेनाहन्-शब्दात् ख-प्रत्ययमुत्पाद्य तस्येनादेशं कृत्वा क्रतु-विषयतया व्युत्पादितोऽहीन-शब्दः।

ननु, एवं सति घट्ट-कुटी-प्रभात-न्यायस्तव प्रसज्येत, यतोऽहीन-शब्दे योगं परिहर्तुकामेन भवता व्याकरणमुपजीव्य योगे पर्यवसानं कृतम्। नायं दोषः। पूर्वपक्षिणोऽभिमते समास-लक्षणे योगे पर्य्यवसान-स्यानभिधानात्। न च, नञ्-समासोऽपि व्याकरणेषु व्युत्पादितः,—इति शङ्कनीयम्, नञ्-समास-स्वीकारे सति "अयज्ञोवाएषः"—इत्यादा-विवाहीन-शब्दस्याद्युदात्तत्व-प्रसङ्गात्। मध्योदात्तोह्ययं शब्दश्चाम्नायते। तस्मात्, पक्ष-द्वये योग-साम्येऽपि समासरूप-योगं पूर्वपक्ष्यभिमतं निरा-कृत्य श्रौत-रूढिः सिद्धान्तिना समाश्रिता। तामेव रूढिं प्रकटयितुं वररुचिना वार्त्तिकं कृतम्। अतः सत्यपि प्रकृति-प्रत्यय-विभागे यौगिकत्वं न शङ्कितुं शक्यते। यथा गोत्व-जातौ रूढस्यापि गो-शब्दस्यौणादिक-सूत्रेषु "गमेर्डो"—इति प्रकृति-प्रत्यय-विभागं कृत्वा गच्छतीति गौ-रिति व्युत्पत्तिः प्रदर्शिता, तद्वदत्राप्यवगन्तव्यम्। प्रोक्षणी-शब्दे तु न रूढिज्ञापनाय किञ्चित् सूत्रं स्वतन्त्रं विहितमस्ति। किं तर्हि, सर्व-धातु-साधारणेनावयवार्थ-व्युत्पादकेन ल्युट्-प्रत्ययेन व्युत्पादितत्वात् यौगिक-एवायं प्रोक्षणी-शब्दः। तस्मात्, प्रोक्षणी-शब्दवच्छिवरात्रि-शब्दो यौ-गिकः,—इति द्वितीयः पक्षः।

अन्ये तु पुनर्मन्यन्ते। लाक्षणिकोऽयं शिवरात्रि-शब्दः, तिथि-वाचकेन तेन शब्देन तत्तिथौ क्रियमाणस्य व्रतविशेषस्य लक्ष्यमाणत्वात्। अत-एवेशानसंहितायामुक्तम्,—

"शिवरात्रि-व्रतं नाम सर्व-पाप-प्रणाशनम् ।
आ-चाण्डाल-मनुष्याणां भुक्ति-मुक्ति-प्रदायकम् ॥
अर्द्धरात्रादधश्चोर्ध्वं युक्ता यत्र चतुर्दशी ।
तत्तिथावेव कुर्वीत शिवरात्रि-व्रतं व्रती ॥
शिवरात्रि-व्रतं कार्य्यं भूतान्वित-महानिशि ।
शिवरात्रि व्रतं देव, करिष्ये शिव-सन्निधौ ॥
निर्विघ्नं कुरु मे देव, भक्त-ग्राह्यमहेश्वर"—इति ।

नारदीयसंहितायाम्,—

"अर्द्धरात्र-युता यत्र माघ-कृष्ण-चतुर्दशी ।
शिवरात्रि-व्रतं तत्र कुर्य्याज्जागरणं तथा"—इति ।

पद्मपुराणेऽपि,—

"अर्द्धरात्रादधश्चोर्ध्वं यदि युक्ता चतुर्दशी ।
तत्तिथावेव कुर्वीत शिवरात्रि-व्रतं व्रती"—इति ॥

स्कन्दपुराणे,—

"शिवरात्रि-व्रतं देव, कथयस्व महेश्वर"—इति ।

न च, काल-वाचकस्य शब्दस्य लाक्षकत्वमदृष्टपरमिति शङ्कनीयम्, काल-वाचकाभ्याममावास्या-पौर्णमासी-शब्दाभ्यां याग-त्रयरूपयोरिष्टो-स्तत्काल-संबन्धिन्योरुपलक्षितत्वात् । अतएव श्रूयते,—"यएवं विद्वान् पौर्णमासीं यजते यएवं विद्वानमावास्यां यजते"—इति । स्मृतिष्वपि सर्वत्र तिथि-वाचकैः शब्दैस्तत्संबन्धिनोव्रत-विशेषालक्ष्यन्ते । स्कन्दपुराणे,

"जन्माष्टमी नैव कृता कदाचित्
कल्पायुतं पच्यते रौरवेषु"—इति ।

व्ययप्रसङ्गोऽपि,—

"एकादशीं तु कुर्वीत चीयते द्वादशी यदा"—इति।

एवमन्यत्राप्युदाहार्य्यम्। तस्मात्, लाचणिकोऽयं शिवरात्रि-शब्दः,— इति तृतीयः पचः।

अथ सिद्धान्तं ब्रूमः। योगरूढएवायं शिवरात्रि-शब्दः। योगो-द्वितीय-पचोपन्यासेन दर्शितः, रूढिश्च प्रथमोपन्यासेन। तत्रैकस्य स्वीकारे सत्यन्य-विषयं शास्त्रं, तदनुग्राहकउदाहृतोन्यायश्च बाध्येत। न च, यौगिकत्वे सति शिव-व्रतोपेतेषु जयोदश्यादि-तिथ्यन्तरेषु शिवरात्रित्वं प्रसज्येत,—इति वाच्यम्, तस्यातिप्रसङ्गस्य रूढ्या निवारणात्। यथा, पङ्कज-शब्दे 'पङ्काज्जायते'—इति योगं स्वीकृत्य भेकादिष्वतिप्रसङ्गो-रूढि-स्वीकारेण निवार्य्यते, तद्वदत्रापि योगरूढतायां न कोऽप्यति प्रसङ्गः। न च मुख्ये सम्भवति लचणाऽऽश्रयणमुचितम्।

अथोच्येत, लचणायाअभावे व्रत-विषयत्वं न स्यात्,—इति। तन्न, बहुव्रीहि-स्वीकारे योगेनैव तत्सिद्धेः। शिवस्य प्रिया रात्रिर्यस्मिन् व्रतेऽङ्गत्वेन विहिता, तद्व्रतं शिवरात्र्याख्यम्। तस्मात्, निर्मन्थ्य-न्याय-नात्र योगरूढः शिवरात्रि-शब्दः। तस्य च न्यायस्य संग्राहकः श्लोकः,—

"निर्मन्थ्योयौगिकोयोगरूढोवा योग-भामनात्—
यौगिकोऽचिर-जातेऽग्नौ नियतैर्योगरूढि-भाक्" ॥

अस्यायमर्थः। इष्टका-चयने श्रूयते,—"निर्मन्थ्येनेष्टकाः पचन्ति"—इति। तत्र संशयः: किमयं निर्मन्थ्य-नशब्दोयौगिकः, किं वा योगरूढः? इति। निःशेषेण मथ्यते,—इति योगस्य प्रतीयमानत्वात् पोचणी-न्यायेन यौगिकः,—इति पूर्वः पचः। अत्र द्वावग्नी विद्येते चिर-निर्मथितोऽचिर-

निर्मथितश्च। चयनं प्रक्रम्योखां निर्माय तस्यामुखायां कञ्चित्कालं धारणाय योऽग्निर्निर्मथ्यते, सोऽचिर-निर्मथितः। तेनेष्टकाः पच्यन्ते, तस्यैव प्रत्यासन्नत्वात्। तथा च, मथनस्याग्नि-द्वितय-साधारण्येऽप्यचिर-निर्मथितमग्निं नियन्तुं रूढिराश्रयणीया। यथा वा, "नावनीतं घृतम्"—इत्यत्र नवनीत-जन्यत्व-योगस्य चिराचिरयोरुभयोः साधारण्येऽपि नूतनएव घृते नावनीत-शब्दोलोके प्रसिद्धे र्नियम्यते। तद्वदत्राप्यवगन्तव्यम्। तथा च सति, प्रतीयमान-योगस्यापरित्यक्तत्वात् नियत्यै रूढि स्वीकाराच्च योगरूढोऽयं निर्मन्थ्यः,—इति राद्धान्तः।

अनेनैव न्यायेन शिवरात्रि-शब्देऽपि योगरूढिराश्रीयते। तत्र, शिवस्य रात्रिः शिवरात्रिः,—इति तत्पुरुष-समासेन योगेन प्रवर्त्तमानः शब्दोरूढ्या माघ-कृष्ण-चतुर्दशीरूपे काल-विशेषे नियम्यते। शिवस्य रात्रिर्यस्मिन् व्रते,—इति बहुव्रीहि-समासेन प्रवृत्तः शब्दोरूढ्या-व्रत-विशेषे नियम्यते।

तच्च शिवरात्रि-व्रतमेकादशी-जयन्ती-व्रतवत् संयोग-पृथक्त्व-न्यायेन नित्यं काम्यं चेत्युभयविधम्। तत्र, नित्यत्वमकरणप्रत्यवाय-वीप्सा-नित्य-निश्चल-शब्दैरवगन्तव्यम्। तत्राकरणे प्रत्यवायः स्कन्दपुराणे पठ्यते,—

"परात्परतरं नास्ति शिवरात्रिः परात्परम्।
न पूजयति भक्त्येशं रुद्रं त्रिभुवनेश्वरम्॥
जन्तुर्जन्म-सहस्रेषु भ्रमते नात्र संशयः"—इति।

वीप्साऽपि तत्र पठिता,—

"वर्षे वर्षे महादेवि, नरोनारी पतिव्रता।
शिवरात्रौ महादेवं कामं भक्त्या प्रपूजयेत्"—इति।

नित्य-निमुल-प्रश्नौ च तत्रैव,—

"माघ-कृष्ण-चतुर्दश्यां यः शिवं शंसित-व्रतः* ।

मुमुक्षुः पूजयेन्नित्यं स लभेदीप्सितं फलम्"—इति ॥

"अर्णवोयदि वा शुष्येत् क्षीयते हिमवानपि ।

मेरु-मन्दर-लङ्काश्च श्रीशैलोविन्ध्यएवच ॥

चलन्त्येते कदाचिद्वै निश्चलं हि शिव-व्रतम्"—इति च ॥

काम्यत्वञ्च फल-श्रवणादवगन्तव्यम्। तत्र स्कन्दपुराणे,—

"शिवञ्च पूजयित्वा योजागर्त्ति च चतुर्दशीम् ।

मातुः पयोधर-रसं न पिवेत् स कदाचन ॥

यदीच्छेदाञ्छितान् भोगान् दिवि देव-मनोरमान्† ।

आगमोक्त-विधिं कृत्वा प्राप्नोति परमं पदम् ॥

मम भक्तस्ततो देवि, शिवरात्रिमुपोषकः ।

गणत्वमक्षयं दिव्यं अक्षयं‡ शिव-शासनम् ॥

सर्वान्भुक्त्वा महाभोगान् मृतोभूयोन जायते§"—इति ॥

काम्य-व्रतस्येशानसंहितायां वर्ष-सङ्ख्या पठ्यते,—

"एवमेतद्व्रतं कुर्य्यात् प्रतिसंवत्सरं व्रती ।

द्वादशाब्दिकमेतत्स्याच्चतुर्विंशाब्दिकन्तु वा ॥

सर्वान् कामानवाप्नोति प्रेत्य चेह च मानवः"—इति ॥

---

* संयतेन्द्रियः,—इति वि° पुस्तके पाठः।

† यदीच्छेद नयान् भोगान् दिवि देवि मनोरथान्,—इति वि° पुस्तके पाठः।

‡ अक्षय्यं,—इति वि° पुस्तके पाठः।

§ मृतोमुक्तः प्रजायते,—इति वि° पुस्तके पाठः।

नित्य-काम्य-रूपस्यास्य व्रतस्य सर्वाधिकारिकत्वमीशानसंहितायामुक्तम्,—

"शिवरात्रि-व्रतं नाम सर्व-पाप-प्रणाशनम्।
आचण्डाल-मनुष्याणां भुक्ति-मुक्ति-प्रदायकम्"—इति।

अधिकारि-नियमाः स्कन्दपुराणे दर्शिताः,—

"माघमासे तु कृष्णा या फाल्गुनादौ चतुर्दशी।
सा च पुण्या तिथिर्ज्ञेया सर्व-पातक-नाशिनी॥
अहिंसा सत्यमक्रोधोब्रह्मचर्य्यं दया क्षमा।
शान्तात्मा क्रोध-हीनश्च तपस्वी ह्यनसूयकः॥
तस्मै देयमिदं देवि, गुरु-पादानुगोयदि॥
अन्यथा योददातीदं स तदा नरकं व्रजेत्"—इति॥

उक्ताधिकारिणोऽनुष्ठेयं व्रत-स्वरूपं त्रिविधम्; उपवासो जागरणं पूजा च। तदुक्तं नागरखण्डे,—

"उपवास-प्रभावेन बलादपि च जागरात्।
शिवरात्रिस्तथा तस्य लिङ्गस्यापि च पूजया॥
अक्षयान् लभते भोगान् शिव-सायुज्यमाप्नुयात्"—इति॥

ब्रह्मखण्डे,*—

"स्वयञ्च लिङ्गमभ्यर्च्य सोपवासः सजागरः।
अजानन्नपि निष्पापोनिषादोगणतां गतः"—इति॥

अत्रेदं चिन्त्यते। किमेता उपवास-जागर-पूजाः व्रतस्य स्वरूपे

* सत्यखण्डे,—इति वि० पुस्तके पाठः।

च्छया* विकल्प्यन्ते, उत समुच्चीयन्ते†,—इति। तत्र, विकल्प्यन्ते,—ते तावत्प्राप्तम्। कुतः? एकैकस्यैवेतर-निरपेक्षतया विधानात्। तथा, स्कन्दपुराणे केवलोपवास-विधिः पठ्यते,—

"अखण्डित-व्रतोयोहि शिवरात्रिमुपोषयेत्।
सर्वान् कामानवाप्नोति शिवेन सह मोदते"—इति॥

तथा, केवल-जागरणं पठ्यते,—

"कश्चित्पुण्य-विशेषेण व्रत-हीनोऽपि यः पुमान्।
जागरं कुरुते तत्र स रुद्र-समतां व्रजेत्"—इति॥

तथा, केवल-पूजा पठ्यते,—

"यः पूजयति भक्त्येशमनेक-फलतां व्रजेत्"—इति।

तस्मात्, उपवासादयस्त्रयोऽपि विकल्प्यन्ते। यदि, जागरखण्ड-सत्र‡-खण्डयोः समुच्चय-विधिरस्तीत्युच्यते; तर्हि, प्रत्येकं वा समुदायोवा यथेष्टमनुष्ठीयताम्,—इति प्राप्ते ब्रूमः। वैश्वानरविद्योपासन-न्यायेन समुदायएवात्रानुष्ठेयः। तस्य च न्यायस्य संग्राहकावेतौ श्लोकौ भवतः,—

"वैश्वानरमुपासीऽत्र प्रत्येक-समुदायतः।
विकल्पः, समुदायोवा नियतोऽत्रविधाद्विधः॥
विकल्पः,—इति चेन्मैवं समुदाय-प्रशंसितः।
अवयुत्यानुवादेन प्रत्येकोक्त्युपपत्तितः"—इति॥

अयमर्थः। छन्दोगैराम्नायते, "वैश्वानरमुपास्ते"—इति। विद्युक्तोक्ता-

* स्वेच्छया,—इति नास्ति वि० क० पुस्तकयोः।

† समुच्चितास्एव,—इति मु० पुस्तके पाठः।

‡ सत्र,—इति वि० पुस्तके पाठः।

दिव्यवाय्वाकाशोदकपृथिवी-रूपैः षड्भिरवयवैरुपेतोऽवयवी सर्वात्मको-विराट्पुरुषोवैश्वानर-शब्द-वाच्यः। तत्र संशयः; किं विद्युल्लोकाद्यवयवा अवयवी च प्रत्येकं विकल्पेनोपास्यः, उतावयव्येव नियमेनोपास्यः,—इति।

विकल्पः,—इति तावत्प्राप्तम्। कुतः? द्विविधस्य विधेः श्रूयमाणत्वात्। प्राचीनशालसत्ययज्ञेन्द्रद्युम्नजनवुडिलोद्दालक-नामभिः षड्भिर्महर्षिभिः क्रमेण विद्युल्लोकादयः षड़वयवाः प्रत्येकमुपासिताः। तद्वृत्तान्त-कथन-परेषु वाक्येषु षलामवयवानां प्रत्येकमुपास्ति-विधयोनियमाश्च, फलसहिताउपलभ्यन्ते। पुनश्चान्ते षड्भ्यस्तेभ्योमहर्षिभ्योऽश्वपतीराजा समुदायोपास्तिमवोचत। अतोद्विविध-विधि-बलेन यथेच्छं विकल्पः,—इति प्राप्ते ब्रूमः,—

समुदायएवात्र नियमेनोपासितव्यः। कुतः? प्रशस्तत्वात्*। अवयवोपास्ति-वाक्यान्यवयुत्यानुवाद-रूपत्वेनाप्युपपद्यन्ते। तस्मात्, समुदायएवोपास्यः,—इति राद्धान्तः।

अनेन न्यायेन प्रकृतेऽप्युपवासादीनां त्रयाणां समुदायस्यैव व्रतरूपत्वम्। ननु, क्वचिदुपवासादि-त्रयं विधाय पुनः पक्षान्तर-रूपेणोपवास-व्यतिरिक्तं द्वयं पठ्यते,

"अथवा शिवरात्रिं च पूजा-जागरणैर्नयेत्"—इति।

नायं दोषः। अथवेत्यनुकल्पोपक्रमेणाशक्त-विषयत्वोपपत्तेः। अत्र व्रते विहितानां त्रयाणां परस्परमङ्गाङ्गिभाव-बोधक-प्रमाणाभावादङ्गि-

* प्रस्तुतत्वात्,—इति मु॰ पुस्तके पाठः।

यादि-षड्यागवत्प्रत्येकं काल-संवन्ध-विधानात् फल-संवन्धाच* सम-प्राधान्यं द्रष्टव्यम्। अस्यैवोपोद्वलकं लिङ्गमभिधीयते। लुब्धकस्य भद्राश्व-जन्म प्राप्नवतोदुर्वाससा सह संवादे पठ्यते,—

"कृष्णपक्षे चतुर्द्दश्यां न किञ्चिन्मृगमाप्नवान्।
अन्नेपि प्राणयात्रार्थं† क्षुधा सम्पीडितोऽवसत्"॥

इत्युपक्रम्य,—

"धनुः कोट्या हतान्येव विल्व-पत्राणि मानद।
पतितानि महाराज, शम्भोः शिरसि भूतले॥
तत्रैव तस्थौ राजेन्द्र, सर्वरात्रमतन्द्रितः।
रात्रिशेषं स्थितोव्याधः लम्बदृष्टिरधोमुखः‡॥
प्रभाते विमले जाते दृष्ट्वा तत्रैव शङ्करम्।
विल्व-पत्रैर्नरश्रेष्ठ, कन्द-मूलैश्च पारितः"—इति॥

एतस्मिन् यथोक्त-तिथिं निर्णेतुं इदं विचार्यते। किं व्रतान्तरेष्विवात्राप्युदयास्तमय-वेधश्चादर्त्तव्यः, किं वा प्रदोष-वेधः, आहोस्वित् निशीथः वेधः,—इति। तत्र, पूर्वद्युरुदये त्रयोदशी-वेधः परेद्युरस्तमये दर्श-वेधः,—इत्युदयास्तमय-वेधोयुक्तः, तस्य व्रतान्तरेषु क्लृप्तत्वात्, क्लृप्तस्य च कल्प्याद्बलीयस्त्वात्। मैवम्। सामान्यादिशेषस्य बलीयस्त्वात्,—सामान्यरूपोह्युदयास्तमय-वेधः, सर्व्व-तिथिषु सर्व्व-व्रतेषु समानप्रवृत्तेःसमत्वात्§, विशेषरूपौ प्रदोष-निशीथ-वेधौ, कृष्णचतुर्द्दशी-लक्षणे

* फलविधानाच,—इति मु॰ पुस्तके पाठः।
† प्राणरक्षार्थं,—इति मु॰ पुस्तके पाठः।
‡ लम्बदृष्टिरनामिषः,—इति मु॰ पुस्तके पाठः।
§ समानत्वात्,—इति मु॰ पुस्तके पाठः।

तिथि-विशेषे शिवरात्याख्यं व्रत-विशेषमुपजीव्य प्रशस्तत्वात्। एतदेवा-भिप्रेत्य ईशानसंहितायामुक्तम्,—

"उदयेऽन्विताः क्वचिद्ग्राह्याः क्वचिदस्तमयेऽन्विताः।

प्रतिभिस्तिथयोयस्मात् वर्जयित्वा व्रतन्त्विदम्"—इति॥

अस्मिंस्तु व्रते प्रदोष-वेधोवायुपुराणे दर्शितः,—

"त्रयोदश्यस्तगे सूर्ये च तस्वेव नाडिषु।

भूत-विद्धा तु या तत्र शिवरात्रि-व्रतं चरेत्"—इति॥

स्मृत्यन्तरेऽपि,—

"प्रदोष-व्यापिनी ग्राह्या शिवरात्रि-चतुर्द्दशी।

रात्रौ जागरणं यस्मात्तस्मात्तां समुपोषयेत्"—इति॥

कामिके,—

"आदित्यास्तमये काले अस्ति चेद्या चतुर्द्दशी।

तद्रात्रिः शिवरात्रिः स्यात् सा भवेदुत्तमोत्तमा"—इति॥

निशीथ-वेधोनारदीयसंहितायां दर्शितः,—

"अर्द्ध-रात्रयुता यत्र माघ-कृष्णचतुर्द्दशी।

शिवरात्रि-व्रतं तत्र सोऽश्वमेध-फलं लभेत्"—इति॥

स्मृत्यन्तरेऽपि,—

"भवेद्यत्र त्रयोदश्यां भूत-व्याप्ता महानिशा।

शिवरात्रि-व्रतं तत्र कुर्याज्जागरणं तथा"—इति॥

ईशानसंहितायाम्,—

"माघ-कृष्णचतुर्द्दश्यामादिदेवोमहानिशि।

शिवलिङ्गतयोद्भूतः कोटि-सूर्य-सम-प्रभः॥

तत्काल-व्यापिनी ग्राह्या शिवरात्रि-व्रते तिथिः।
अर्द्धरात्रादधश्चोर्ध्वं युक्ता यत्र चतुर्द्दशी॥
तत्तिथावेव कुर्वीत शिवरात्रि-व्रतं व्रती।
अर्द्धरात्रादधश्चोर्ध्वं* नास्ति† यत्र चतुर्द्दशी॥
नैव तत्र व्रतं कुर्यादायुरैश्वर्य-हानिदम्।
व्याप्यार्द्धरात्रं यस्यान्तु लभ्यते सा‡ चतुर्द्दशी।
तस्यामेव व्रतं कार्यं मत्प्रसादार्थिभिर्नरैः॥
पूर्व्वेद्युर्वा परेद्युर्वा महानिशि चतुर्द्दशी।
व्याप्ता सा दृश्यते यस्यां तस्यां कुर्याद्व्रतं नरः॥
लिङ्गाविर्भाव-काले तु व्याप्ता ग्राह्या चतुर्द्दशी।
तदूर्ध्वाधोऽन्विता भूता सा कार्या व्रतिभिः सदा॥
मम प्रियकरी ह्येषा माघ-कृष्णचतुर्द्दशी।
महानिशाऽन्विता या तु तत्र कुर्यादिदं व्रतम्"—इति॥

एवं सति, पूर्व्वेद्युरेव वा परेद्युरेव वा यत्र प्रदोष-निशीथोभय-व्याप्ति-स्तत्र व्रतमाचरणीयम्। पूर्व्वेद्युरेवोभय-व्याप्तौ स्कन्दपुराणे पठ्यते,—

"त्रयोदशी यदा देवि, दिनभुक्ति-प्रमाणतः।
जागरे शिवरात्रिस्यान्निशि पूर्णा चतुर्द्दशी"—इति॥

दिनभुक्तिरस्तमयः। परेद्युरेवोभय-व्याप्तौ कामिके पठ्यते,—

"निशा-द्वये चतुर्द्दश्यां पूर्वा त्याज्या परा शुभा"—इति।

---

* नार्द्धरात्रादधश्चोर्द्ध्वं,—इति मु॰ पुस्तके पाठः।

† युक्ता,—इति मु॰ पुस्तके पाठः।

‡ या,—इति मु॰ पुस्तके पाठः।

दिन-द्वयेऽप्युभय-व्याप्तिस्तु न सम्भाव्यते, याम-द्वय-वृद्धेरभावात्। दिन-द्वयेऽप्युभय-व्याप्त्यभावोऽपि न सम्भाव्यते, याम-द्वय-क्षयस्याभावात्। एकैकस्मिन् दिने एकैक-व्याप्तौ तु कथमितिचेत्। उच्यते। सा ह्येवं प्रसज्यते; पूर्वेद्युर्निशीथ-व्याप्तिः परेद्युः प्रदोष-व्याप्तिः,—इति। तत्रैक-व्याप्तेर्दिन-द्वये समानत्वेऽपि जया-योगस्य प्रशस्तत्वाद् दर्श-योगस्य निन्दितत्वाच्च पूर्वेद्युरेवोपवासः। जया-योग-प्राशस्त्यं चानेक-वचनैरादृतत्वादवगम्यते। तथाच स्कन्दपुराणे पठ्यते,—

"कृष्णाष्टमी स्कन्दषष्ठी शिवरात्रि-चतुर्द्दशी।
एताः पूर्व-युताः कार्यास्तिथ्यन्ते पारणं भवेत्॥
जन्माष्टमी रोहिणी च शिवरात्रिस्तथैवच।
पूर्व-विद्धैव कर्त्तव्या तिथि-भान्ते च पारणम्॥
श्रावणी दुर्गनवमी तथा दूर्वाष्टमी च या।
पूर्व-विद्धा तु कर्त्तव्या शिवरात्रिर्बलेर्द्दिनम्"—इति॥

"जयन्ती शिवरात्रिश्च कार्ये भद्रा-जयाऽन्विते"—इतिच।

नागरखण्डे,—

"माघ-फाल्गुनयोर्मध्ये असिता या चतुर्द्दशी।
अनङ्गेन समायुक्ता कर्त्तव्या सा सदा तिथिः"—इति॥

पद्मपुराणे,—

"अर्द्धरात्रात् पुरस्ताच्चेज्जया-योगोयदा भवेत्।
पूर्व-विद्धैव कर्त्तव्या शिवरात्रिः शिव-प्रियैः"—इति॥

ब्रह्मवैवर्त्ते,—

"रुद्र-व्रतेषु सर्वेषु कर्त्तव्या सम्मुखी तिथिः।

अन्येषु व्रत-कल्पेषु पर-युक्तामुपावसेत्"—इति ॥

दश-योग-निन्दा च स्कन्दपुराणे दर्शिता,—

"महतामपि पापानां दृष्टा वै निःकृतिः पुरा।
न दृष्टा कुर्वतां पुंसां कुहू-युक्तां तिथिं शिवाम्"—इति ॥

अन्यान्यपि यानि कानिचिद्दर्श-योग-निन्दा-वचनानि तत्र तत्र स्मर्यन्ते, तानि सर्वाण्यस्मिन्विषये योजनीयानि। यदा पूर्वेद्युर्निशीथादूर्ध्वं प्रवृत्ता चतुर्दशी परेद्युः क्षय-वशान्निशीथादर्वागेव समाप्ता, तदा पूर्वेद्युः प्रदोष-निशीथ-व्याप्त्योरुभयोरप्यसम्भवात्परेद्युः प्रदोष-व्याप्तेरेकस्याः सद्भावाच्च पर-विद्धैव ग्राह्या। एतदेवाभिप्रेत्य स्मर्यते,—

"माघासिते भूत-दिनं कदाचि—
दुपैति योगं यदि पञ्चदश्या।
जया-प्रयुक्तां न तु जातु कुर्या—
च्छिवस्य रात्रिं प्रियकृच्छिवस्य"—इति।

यदा पूर्वेद्युः प्रदोषादूर्ध्वं प्रवृत्ता चतुर्दशी परेद्युः क्षय-वशात् प्रदोषादर्वागेव समाप्ता, तदा परेद्युर्व्याप्ति-द्वयाभावात् पूर्वेद्युर्निशीथ-व्याप्तेः सद्भावाज्जया-योगाच्च पूर्वेद्युरेवोपवासः।

अत्रायं विवेकः सम्पन्नः। दिन-द्वये निशीथ-व्याप्तौ तदव्याप्तौ च प्रदोषव्याप्तिर्नियामिका। तथा, दिन-द्वयेऽपि प्रदोष-व्याप्तौ तदव्याप्तौ च निशीथ-व्याप्तिर्नियामिका। एकैकस्मिन् दिने एकैक-व्याप्तौ जया-योगो नियामकः,—इति।

अस्य शिवरात्रि-व्रतस्याहोरात्र-साध्यत्वेनाहनि रात्रौ च संबन्धे साधारणे सति अहर्वेधमुपेक्ष्य प्रदोष-निशीथयोरेव कुतः शास्त्राणां पक्ष-

पातः,— इति चेत्। रात्रेरत्र प्रधानत्वादिति ब्रूमः। तत्-प्राधान्ये चोपपत्तिः स्कन्दपुराणे पठ्यते,—

"निशि भ्रमन्ति भूतानि शक्तयः शूलभृद्यतः।
अतस्तस्यां त्रयोदश्यां सत्यान्तत्-पूजनं भवेत्"—इति॥

तस्यां त्रयोदश्यामिति व्यधिकरणे सप्तम्यौ। तथाचायमर्थः सम्पद्यते, त्रयोदशी-निशीथे तस्यां चतुर्द्दश्यां विद्यमानायां शिव-पूजनं भवेत्,—इति।

नागरखण्डेऽपि,—

"माघमासस्य कृष्णायां चतुर्द्दश्यां सुरेश्वर।
अहं यास्यामि भूपृष्ठे रात्रौ नैव दिवा कलौ॥
लिङ्गेषु च समस्तेषु चरेषु स्थावरेषु च।
संक्रमिष्याम्यसन्दिग्धं वर्षपाप-विशुद्धये॥
रात्रौ तस्यां हि मे पूजां यः करिष्यति मानवः।
मन्त्रैरेतैः सुरश्रेष्ठ, विपापः स भविष्यति"—इति॥

सा च शिवरात्रि-चतुर्द्दशी त्रिधा भवति; एकतिथ्यात्मिका, तिथि-द्वयात्मिका, तिथि-त्रयात्मिका च,—इति। तत्र सूर्य्योदयमारभ्य प्रवृत्ता परदिनोदयपर्य्यन्तैकतिथ्यात्मिका। सा वेध-दोषाभावात् प्रशस्ता।* तिथि-द्वयात्मकत्वञ्च द्वेधा भवति; जया-योगेन, दर्श-योगेन च। तत्र* योग-द्वयमेकैकस्मिन् विषये प्रशस्तम्। स च विषय-विशेषः पूर्व्वमेवोदाहृतः। तिथि-त्रयात्मकत्वन्त्वतिप्रशस्तम्। एतदेवाभिप्रेत्य पुराणे पठ्यते,—

* तच,—इति वि० पुस्तके पाठः।

"त्रयोदशी-कलाऽप्येका मध्ये चैव चतुर्दशी।
अन्ते चैव सिनीवाली त्रिस्पृश्यां शिवमर्चयेत्"—इति॥

यथा त्रिस्पृशी प्रशस्ता, तथा वार-विशेषेण योग-विशेषेण च प्रशस्ता भवति। तथा च स्कन्दपुराणे पठ्यते,—

"माघ-कृष्ण-चतुर्दश्यां रवि-वारो यदा भवेत्।
भौमोवाऽथ भवेद्देवि, कर्त्तव्यं व्रतमुत्तमम्॥
शिव-योगस्य योगे वै तद्भवेदुत्तमोत्तमम्।
शिवरात्रि-व्रतन्त्वेतत्तद्भवेदुत्तमोत्तमम्"—इति॥

ननु, यदा पूर्व-विद्धायामुपवासस्तदा परेद्युः किन्तिथ्यन्ते पारणं भवति किं वा तिथि-मध्ये? शास्त्रन्तु पक्ष-द्वयेऽपि समानम्। तत्र, तिथ्यन्त-पारण-वचनानि पूर्वमुदाहृतानि। तिथि-मध्य-पारण-वचनन्तु स्कन्दपुराणे पठ्यते,—

"उपोषणं चतुर्दश्यां चतुर्दश्यान्तु पारणम्।
कृतैः सुकृत-लक्षैश्च लभ्यते वाऽथवा न वा॥
ब्रह्मा स्वयं चतुर्वक्त्रैः पञ्चवक्त्रैस्तथाऽप्यहम्।
सिक्थे सिक्थे फलं तस्य शक्तोवक्तुं न पार्वति॥
ब्रह्माण्डोदर-मध्ये तु यानि तीर्थानि सन्ति वै।
संस्थितानि भवन्तीह भूतायां पारणे कृते॥
तिथीनामेव सर्वासामुपवास-व्रतादिषु।
तिथ्यन्ते पारणं कुर्य्याद्विना शिव-चतुर्दशीम्"—इति॥

बाढम्। अस्ति हि द्विविधं शास्त्रम्, तस्य च द्विविधस्य शास्त्रस्य प्रतिपत्प्रकरणोक्त-न्यायेन व्यवस्था द्रष्टव्या। यदा याम-त्रयादर्वागेव

चतुर्दशी परिसमाप्यते, तदा तिथ्यन्ते पारणम्। यदा तु चतुर्दशी याम-त्रयमतिक्रामति, तदा चतुर्दशी-मध्ये पूर्वाह्णे पारणं कुर्य्यात्।

इति चतुर्दशी-निर्णयः।

## अथ पञ्चदशी निर्णीयते॥

सा द्विविधा; पौर्णमास्यमावास्या च। तत्र, पौर्णमास्यां परस्पर-विरुद्धानि वाक्यान्युपलभ्यन्ते। तत्र, पर-विद्धायाग्राह्यत्वं पुराणे पठ्यते,—

"भूत-विद्धा न कर्त्तव्या कर्त्तव्या प्रतिपद्युता।
पौर्णमासी व्रतारम्भे मनुजैः फलकाङ्क्षिभिः"—इति* ॥

विष्णुधर्मोत्तरे,—

"एकादश्यष्टमी षष्ठी पौर्णमासी चतुर्दशी।
अमावास्या तृतीया च उपोष्याः स्युः पराऽन्विताः"—इति।

पद्मपुराणे,—

पूर्व-विद्धा तु कर्त्तव्या सप्तमी व्रतिभिर्नरैः।
पौर्णमास्यामहीपाल, परायानियमाङ्गता†"—इति॥

पर-विद्धा-निषेधः पूर्व-विद्धा-विधिश्च ब्रह्मपुराणे,—

* 'पुराणे पठ्यते'—इत्यादि, 'इति'—इत्यन्तं नास्ति मु० पुस्तके।

† मुद्रितपुस्तके वचनमिदं, नोपोष्यं तिथिपञ्चकमित्यनन्तरं पठितम्। तत्र च, 'पौर्णमासी महीपाल'—इति तृतीयचरणे पाठः।

"षष्ठ्येकादश्यमावास्या पूर्व-विद्धा तथाऽष्टमी।
पूर्णिमा पर-विद्धा च नोपोष्यन्तिथि-पञ्चकम्"—इति।

पूर्व-विद्धा-ग्राह्यत्वञ्च युग्मवाक्ये "चतुर्दश्या च पूर्णिमा"—इति। एवं परस्पर-विरोधे सति या व्यवस्था, सा ब्रह्मवैवर्त्ते दर्शिता,—

"पूर्व-विद्धा न कर्त्तव्या अमावास्या च पूर्णिमा।
वर्जयित्वा मुनिश्रेष्ठ, सावित्री-व्रतमुत्तमम्"—इति॥

सावित्री राज-कन्या, तया चीर्णं व्रतं सावित्री-व्रतम्। तच्च भविष्योत्तरपुराणे दर्शितम्,—

"कथयामि कुल-स्त्रीणां महिम्नावर्द्धनं परम्।
यथा चीर्णं व्रतं पूर्वं सावित्र्या राज-कन्यया"—इति॥

एतच्च पौर्णमास्याममावास्यायां च विहितम्। तस्मिन् व्रते पूर्वविद्धा ग्राह्या, व्रतान्तरे पूर्व-विद्धा न कर्त्तव्या, किं तु पर-विद्धैव कर्त्तव्येति परस्पर-विरुद्धस्य शास्त्र-द्वयस्य व्यवस्था। यदा तु चतुर्दश्यष्टादश-नाड़िका भवति, तदा सावित्रीव्रतमपि तत्र परित्याज्यम्।

"भूतोऽष्टादशनाडीभिर्दूषयत्युत्तरान्तिथिम्"—इति स्मृतेः।

योऽयं पौर्णमासी-निर्णयः, सएवामावास्यायामप्यवगन्तव्यः। तत्रापि सावित्री-व्रतं पूर्व-दिने कर्त्तव्यं व्रतान्तराण्युत्तरदिने। अस्याश्च व्यवस्थायां ब्रह्मवैवर्त्त-वचनं पूर्वमुदाहृतम्। स्कन्दपुराणेऽपि,—

"भूत-विद्धा सिनीवाली न तु तत्र व्रतञ्चरेत्।
वर्जयित्वा तु सावित्री-व्रतं तु शिखिवाहन"—इति॥

एवं च सति, युग्म-शास्त्रं सावित्रीव्रत-व्यतिरिक्तेषु व्रतेषु द्रष्टव्यम्।
प्रचेता अपि,—

"नाग-विद्धा तु या षष्ठी सप्तम्या च युताऽष्टमी ।
दशम्येकादशी विद्धा त्रयोदश्या चतुर्दशी ॥
भूत-विद्धाऽप्यमावास्या न ग्राह्या मुनि-पुङ्गवैः ।
उत्तरोत्तर-विद्धास्ताः कर्त्तव्याः काठकी श्रुतिः—इति ॥

पद्मपुराणेऽपि,—

"षष्ठ्यष्टमी तथा दर्शः कृष्णपक्षे त्रयोदशी ।
एताः पर-युताः कार्य्याः पराः पूर्व्वेण संयुताः"—इति ॥

यत्तु नारदीयपुराणे,—

"दर्शं च पौर्णमासञ्च पितुः सांवत्सरं दिनम् ।
पूर्व्व-विद्धमकुर्वाणो नरकं प्रतिपद्यते"—इति ॥

तत्सावित्रीव्रत-विषयं श्राद्ध-विषयं वा । अमावास्यायामिव पौर्णमास्यामपि श्राद्धं विहितम् । तथा च पितामहः,—

"अमावास्या-व्यतीपात-पौर्णमास्यष्टकासु च ।
विद्वान् श्राद्धमकुर्वाणः प्रायश्चित्तीयते हि सः"—इति ॥

अमावास्या-श्राद्धस्य च पार्वणरूपत्वमपराह्णस्य तत्कर्म-कालत्वं कुतपस्य प्रारम्भ-कालत्वमित्येतत्त्रितयं प्रतिपत्करणे प्रत्याब्दिक-निर्णये प्रपञ्चितम् । तथा सति, अपराह्णस्य कर्म-कालत्वात् पूर्व्वेद्युरेव वा परेद्युरेव वाऽपराह्ण-व्यापिन्यमावास्या ग्रहीतव्या । तत्रापराह्णव्यापिन्याः पूर्व-तिथेर्ग्राह्यतामाह हारीतः,—

"यस्यां सन्ध्या-गतः सोमो मृणालमिव दृश्यते ।
अपराह्णे तु या तस्यां पिण्डानां करणं ध्रुवम्"—इति ॥

यत्तु कार्ष्णाजिनिनोक्तम्,—

"भूत-विद्धाममावास्यां मोहादज्ञानतोऽपिवा।
श्राद्ध-कर्मणि ये कुर्युस्तेषामायुः प्रहीयते"—इति॥

तदपराह्ण-व्याप्त्यभाव-विषयं द्रष्टव्यम्। अपराह्ण-व्यापिन्याउत्तर-तिथेर्ग्राह्यतामाह हारीतः,—

"अपराह्णः पितॄणान्तु या ऽपराह्णानुयायिनी।
सा ग्राह्या पितृ-कार्य्ये तु न पूर्वाऽस्तानुयायिनी"—इति॥

उभयत्रापराह्ण-व्यापित्वं द्वेधा भिद्यते; एकदेशेन, कार्त्स्न्येन चेति। एकदेश-व्याप्तिश्च द्वेधा भिद्यते; वैषम्येण, साम्येन चेति। तत्र, वैषम्येणैकदेशव्याप्तौ महत्त्वेन निर्णेतव्यम्। तथा च स्मृतिः,—

"अपराह्ण-द्वय-व्यापिन्यमावास्या यदा भवेत्।
तत्राल्पत्व-महत्त्वाभ्यां निर्णयः पितृ-कर्मणि"—इति॥

महत्येव ग्राह्येत्यभिप्रायः। स च शिवराघव-संवादे स्पष्टमभिहितः,—

"अल्पाऽपराह्णे त्याज्याऽसा* ग्राह्या स्याद्याऽधिका भवेत्"—इति॥

साम्येनैकदेश-व्याप्तौ खर्वादि-शास्त्रेण निर्णयः। साम्येनोभयत्रैकदेश-व्याप्तिश्च तत्तिथि-गतेर्वृद्धि-क्षय-साम्यैस्त्रेधा भिद्यते। तथा हि। पूर्व्वेद्युरपराह्णस्य द्वितीय-घटिकामारभ्य परेद्युरपराह्णस्य पञ्च-घटिका-पर्य्यन्तं यदा तिथिर्वर्त्तते, तदा पूर्वापराह्णस्य प्रथम-घटिकां द्वितीयापरा्ह्णस्य चरम-घटिकां विहाय शिष्टासु पञ्चसु वर्त्तमानत्वात्साम्येनैकदेश-व्याप्तिर्भवति। तिथिश्च तदा, घटिका-चतुष्टयेन वर्द्धते। यदा च पूर्वापराह्णस्य चरमघटिकायामुत्तरापराह्णस्य च प्रथम-घटिकायान्तिथिर्वर्त्तते, तदा-

---

* त्याज्या सा,—इति वि॰ पुस्तके पाठः।

ऽपि साम्येनैकदेश-व्याप्तिर्भवति। घटिका-चतुष्टयेन तदा तिथिः क्षीयते। यदा पूर्व्वापराह्णस्य चरम-घटिका-त्रये द्वितीयापराह्णस्य च प्रथम-घटिका-त्रये तिथिर्वर्त्तते, तदा साम्येनैकदेश-व्याप्तिस्तदवस्था। तिथिस्तु न वर्द्धते नापि क्षीयते किन्तु समैव। ईदृशे विषये खर्व-दर्प-वाक्यान्निर्णयः। तत्र खर्वादिवाक्यं सर्व-तिथि-साधारण्येन प्रवृत्तत्वादमावास्यायामपि प्रवर्त्तते। तथा, अमावास्यायामेव* विशेषेण शिवराघव-संवादे सप्तर्षिर्यादर्शितः,—

"अमावास्या तु या हि स्यादपराह्ण-द्वयेऽपि सा।

क्षये पूर्व्वा, परा वृद्धौ, साम्येऽपि च परा स्मृता"—इति॥

स्मृत्यन्तरेऽपि,—

"तिथि-क्षये सिनीवाली तिथि-वृद्धौ कुहूर्मता।

साम्येऽपि च कुहूर्ज्ञेया वेद-वेदाङ्ग-वेदिभिः"—इति॥

चतुर्दशी-मिश्रा सिनीवाली, प्रतिपन्मिश्रा कुहूः। तथा च व्यासः,—

"दृष्ट-चन्द्रा सिनीवाली नष्ट-चन्द्रा कुहूर्मता"—इति।

कार्त्स्न्येनोभयत्रापराह्ण-व्याप्तावपि तिथि-वृद्धित्वात् कुहूरेव ग्राह्या। यदा दिन-द्वयेऽप्यपराह्णं न स्पृशति, तदा साग्न्यनग्निक-भेदेन व्यवस्था द्रष्टव्या।

तदाह जावालिः,—

"अपराह्ण-द्वयाव्यापी यदि दर्शस्तिथि-क्षये।

आहिताग्नेः सिनीवाली निरग्न्यादेः कुहूर्मता"—इति॥

आदि-शब्दात् स्त्री-शूद्रयोरपि ग्रहणम्। तदाह लौगाक्षिः,—

* अमावास्यायामपि,—इति वि॰ पुस्तके पाठः।

"सिनीवाली द्विजैः कार्य्या साग्निकैः पितृ-कर्मणि।
स्त्रीभिः शूद्रैः कुहूः कार्य्या तथाचानग्निकैर्द्विजैः"—इति॥

एवं शास्त्रार्थे व्यवस्थिते सति, यानि बहुविधानि वाक्यानि, तानि सर्वाणि प्रोक्तेष्वमावास्या-भेदेष्वन्यतम-विषयत्वेन यथायोगं योजनीयानि। तथाहि। तत्र, तावद्बौधायनश्चाह,—

"मध्याह्नात्परतोयत्र चतुर्दश्यनुवर्त्तते।
सिनीवाली तु सा ज्ञेया पितृ-कार्य्ये तु निष्फला"—इति॥

बृहस्पतिरपि,—

"मध्याह्नाद् या त्वमावास्या परस्मात् संप्रवर्त्तते।
भूत-विद्धा तु सा ज्ञेया न सा पञ्चदशी भवेत्"—इति।

अत्र, मध्याह्नादूर्ध्वमपराह्णमतिक्रम्य परस्मादमावास्या प्रवर्त्तते,—इति व्याख्येयम्। तदेतद्वचन-द्वयं परेद्युरेवापराह्ण-व्याप्तौ योजनीयम्। यत्तु कात्यायनवचनम्,—

"पिण्डान्वाहार्य्यकं श्राद्धं क्षीणे राजनि शस्यते।
वासरस्य तृतीयेंऽशे नातिसन्ध्या-समीपतः"—इति॥

पिण्डानां पिण्डपितृयज्ञाङ्गभूतानामनु पश्चादाह्रियते क्रियते,—इति 'पिण्डान्वाहार्य्यकं श्राद्धमामावास्यं, तत् क्षीणे राजनीन्दौ कर्त्तव्यम्'। 'वासरस्य तृतीयेंऽशे' इत्यनेनेषत्न्यूनोऽपराह्णः सायाह्न-सहितोऽभिधीयते। 'नातिसन्ध्यासमीपतः'—इति सायाह्नस्य प्रतिषेधं सत्यपराह्णः कर्मकालत्वेन परिशिष्यते। तथा च, कर्म-काल-व्यापिनी तिथिर्ग्राह्येत्यर्थकम्। सर्वेऽनुचयस्य चतुर्दश्यष्टमे प्रहरे प्रारम्भः, अमावास्यायाः सप्तमे प्रहरे समाप्तिः। तदेतदुभयं कात्यायन एवाह,—

"अष्टमेंऽशे चतुर्द्दश्याः क्षीणोभवति चन्द्रमाः ।
अमावास्याऽष्टमांशे च पुनः किल भवेदणुः"—इति ।

यत्तु जावालिनोक्तम्,—

"प्रतिपत्सप्यमावास्या पूर्वाह्ण-व्यापिनी यदि ।
भूत-विद्धैव सा कार्य्या पित्र्ये कर्मणि सर्वदा"—इति ॥

अत्र, 'पूर्वाह्ण-व्यापिनी'—इति विशेष-कथनादपराह्ण-व्यापित्वं नास्तीत्यवगम्यते। तादृशी च द्विविधा; पूर्वेद्युरपराह्ण-व्यापिनी, तद्रहिता च। आद्यपक्षे सर्वैरपि भूतविद्धैव कार्य्या। द्वितीयपक्षे साग्निकैरेव भूत-विद्धा कार्य्या। यत्तु हारीतेनोक्तम्,—

"पूर्वाह्णे चेदमावास्या अपराह्णे न चेत्तु सा ।
प्रतिपद्यपि कर्त्तव्यं श्राद्धं श्राद्धविदोविदुः"—इति ॥

तद्दिवस-द्वयेऽप्यपराह्ण-व्यापित्वाभावे सति निरग्निक-विषयम्। यदपि हारीतेनोक्तम्,—

"भूत-विद्धाऽप्यमावास्या प्रतिपन्मिश्रिताऽपि वा ।
पित्र्ये कर्मणि विद्वद्भिर्ग्राह्या कुतपकालिकी"—इति ।

तदेकोद्दिष्ट-विषयम्। एकोद्दिष्टस्य कुतप-प्राधान्यं प्रतिपत्प्रकरणे प्रपञ्चितम्। यद्वा। प्रतिपन्मिश्रायामप्यपराह्ण-व्यापित्वाभावे निरग्नि-कैरपि हेयत्वाशङ्कायां ग्राह्यत्वे कुतप-व्याप्तिरनुकल्पत्वेनाभिधीयते। अपराह्ण-व्याप्तिः पार्वणे मुख्यकल्पः, कुतप-व्याप्तिरनुकल्पः। तथा च, मुख्यासम्भवेऽनुकल्पस्योपादेयत्वान्निरग्निकैः प्रतिपन्मिश्रिता ग्रहीतुं शक्यते। भूत-विद्धायान्तु, कुतप-कालिकत्वे सत्यापराह्णिकत्वमर्थ-सि-द्धम्। तथा सति, मुख्यानुकल्पयोरुभयोरपि सद्भावात्कुतपस्य प्रारम्भ-

कालसाच प्रात्याह्निक-प्रकरणोदाहृत-देवलादि* वचनानुसारेण कर्म्मो-पक्रमोपसंहारो† व्याप्तिर्दर्शिता भवति। तथाच दृष्टान्तेनोपन्यस्यते। यथा, कुतप-व्यापिनी भूत-विद्धोपादेया; तथा, प्रतिपद्विद्धाऽपि कुतप-व्याप्त्योपादेया भवति। तत्र बौधायनश्चाह,—

"घटिकैकाऽप्यमावास्या प्रतिपत्सु न चेत्तदा।
भूत-विद्धैव सा ग्राह्या दैवे पित्र्ये च कर्मणि"—इति॥

प्रतिपत्सु घटिकैकाऽपि कर्म-काल-संबन्धिनी यदि न स्यादित्यर्थः। तदेतद्वचनं पूर्वेद्युरेवापराह्ण-व्याप्तौ द्रष्टव्यम्। अस्मिन्नेव विषये जाबालि-राह,—

"प्रतिपत्स्वप्यमावास्या पूर्वाह्ण-व्यापिनी यदि।
भूत-विद्धैव सा ग्राह्या पित्र्ये कर्मणि सर्वदा"—इति॥

यत्तु हारीतवचनम्,—

"कन्या-मकर-मीनेषु तुलायां मिथुने तथा।
भूत-विद्धैव सर्वेषां पूज्या भवति यत्नतः"—इति॥

तद्व्रत-विषयम्। तथा च जाबालिः,—

"तुलायां मिथुने मीने कन्यायां मकरेऽप्यमा।
भूत-विद्धा व्रते ग्राह्या शेषेषु प्रतिपद्युता"—इति॥

इति पञ्चदशीनिर्णयः।

---

* देवलादि,—इति मु० पुस्तके पाठः।
† उपक्रमोपसंहारकाल,—इति मु० पुस्तके पाठः।

## अथेष्टिकालो निर्णीयते।

ननेष्टिः प्रतिपदि कर्त्तव्यतया पूर्व-प्रकरणएव कुतोऽयं नाभिहितः,—इति शङ्कनीयम्। पर्व-चतुर्थांशस्यापि प्रतिपदइवेष्टि-कालत्वात्। पर्व-प्रतिपत्सन्धि-सापेक्षत्वाच्च। अतः, पर्व-निर्णयानन्तरमस्य निर्णयस्याव-सरः,—इतीदानीं निर्णीयते। अत्रेदञ्चिन्त्यते। किं पर्व-प्रतिपदोः सन्धि-रिष्टिकालः, किं वा, सन्धेरुभौ पार्श्वौ? इति। तदर्थं प्रथमं सन्धि-स्वरूपं निरूपणीयम्। तन्निरूपणञ्च पर्व-भेदाधीनम्। अतः, पर्व-भेदोनि-रूप्यते। पर्व च द्विविधं, पौर्णमास्यमावास्या चेति।

ननु, प्रतिपदमारभ्य चतुर्द्दश्यन्तानान्तिथीनां शुक्ल-कृष्ण-पक्षयो-र्नास्ति नाम-भेदः, पञ्चदश्यान्तु किमर्थोऽयं नाम-भेदः,—इति चेत्। तयोर्विशेष-स्वभाव-ज्ञापनयेति ब्रूमः। प्रथम-द्वितीयादीनां चन्द्रकलानां मध्ये यत्सङ्ख्याका कला वर्द्धते, तत्सङ्ख्याका शुक्लपक्षे तिथिः व्यवह्रियते। कृष्ण-पक्षेऽपि क्षीयमाणायास्तस्याः कलायानाम्ना तत्तिथि-व्यवहारः। तेन न्यायेनान्त्य-तिथेरपि पक्ष-द्वये पञ्चदशीत्येव व्यवहारः। तत्र, शुक्लादौ पञ्चदश्यां चन्द्र-मण्डलं स्व-कलाभिः सर्वात्मना पूर्य्यते। सेयं मण्डल-परिपूर्त्तिः पूर्णिमेत्यनेन नाम्ना ज्ञाप्यते। तदुक्तं ब्रह्माण्ड-मत्स्यपुराणयोः,—

"कला-क्षये व्यतिक्रान्ते दिवा पूर्णौ परस्परम्।
चन्द्रादित्यौ पराह्णे तु पूर्णत्वात्पूर्णिमा स्मृता"—इति॥

पश्चात् परोभागः पराह्णः, सूर्य्यास्तमयकालः,—इत्यर्थः। तत्र, यथा

दित्य: सम्पूर्ण-मण्डल: सह समेति, तथोत्तरस्मिन् चन्द्र: सम्पूर्ण-मण्डल: उदेतीति दृष्टान्त-दार्ष्टान्तिक-भावं विवक्षित्वा उभयोरादित्य-चन्द्रयो-रुपन्यास:। यथा, मण्डल-पूर्णत्व-विवक्षया पूर्णिमाशब्द: प्रयुज्यते, तथा, मास-पूर्णत्व-विवक्षया-पौर्णमासीशब्द: प्रयुज्यते। तदुक्तं भविष्योत्तरे,—

"पौर्णमासी महाराज, सोमस्य दयिता तिथि:।
पूर्णोमासोभवेद्यस्मात्पौर्णमासी तत: स्मृता"—इति॥

पूर्णिमाऽमावास्ययोर्विकल्पेन मासान्तत्वं मास-प्रस्तावे दर्शितम्। अमावास्येत्यनेन नाम्ना बहवोऽर्था: कथ्यन्ते। तत्रामाशब्दस्य चत्वारोऽर्था:; सहभाव:, कन्या, सूर्य-रश्मि:, चन्द्र-कला चेति। वसुशब्दस्य च चत्वारोऽर्था:। इन्द्रश्चन्द्र: पितृविशेष: निवासश्चेति। तत्र, सहभाव-वाचिनममाशब्दमिन्द्र-वाचिनं वसुशब्दञ्चोररीकृत्य निर्वचनमेवं प्रवर्त्तते। अमा वसुरस्यामित्यमावास्येति।

अयमर्थ:। वृत्र-वधानन्तरं प्रोषितेन्द्र-समागमे सन्तुष्टादेवा: परस्पर-मवोचन्। अमाऽस्माभि: सहायमिन्द्रोऽभिवसतीति। अतस्तस्य दिनस्या-मावास्यात्वमिति। सोऽयमर्थ: शतपथ-ब्राह्मणे दर्शपूर्णमास-प्रकरणे श्रूयते। "ते देवाअब्रुवन् अमा वै नोऽद्य वसुर्वसति योन: प्रावात्सीत्"—इति। तैत्तिरीयब्राह्मणेऽपि विस्पष्टमयमेवार्थ: श्रूयते। "इन्द्रोवृत्रं हत्वा परं परावतमगच्छदपराधमिति मन्यमानस्तन्देवा: प्रैषमैच्छन्"—इत्या-रभ्य पठ्यते। "सोऽमावास्यां प्रत्यागच्छत्तं देवाअभिसमगच्छन्तामा वै नोऽद्य वसुर्वसतीतीन्द्रोहि देवानां वसु तदमावास्यायाअमावास्या-त्वम्"—इति। परं परावतम् अत्यन्तदूरदेशमित्यर्थ:। अपराधश्चो-द्यमकाचम्।

यदा, वसुशब्दश्चन्द्रवाची, तदाऽयमाशब्दस्य वाच्यं सहभावमेवो-ररीकृत्यैवं निर्वक्तव्यम्। पश्वोषधीभिः सह चन्द्रोवसत्यस्यां रात्रावित्य-मावास्या। अयमर्थः शतपथ-ब्राह्मणे श्रूयते। "एष वै सोमोराजा-देवानामन्नं यच्चन्द्रमाः, सयत्रैषएतां रात्रिं न पुरस्तान्न पश्चाद्दृश्ये तदिमं लोकमागच्छति। स इह पश्वोषधीरनुप्रविशति स वै देवानां वस्वन्नं ह्येषां तद्यदेष एतां रात्रिमिहामा वसति तस्मादमावास्या नाम"—इति। तथा, बृहदारण्यकेऽपि, चन्द्रं प्रकृत्य पठ्यते। "सोऽमा-वास्यां रात्रिमेतया षोडश्या कलया सर्वमिदं प्राणभृदनुप्रविश्य ततः प्रातर्जायते"—इति।

अमा-वसु-शब्दौ यदा कन्या-पितृ-वाचिनौ, तदानीमेवं निर्वक्तव्यम्। अमां वसुर्नैच्छदस्यां रात्रावित्यमावास्या। अमाशब्दाभिधेया काचि-त्कन्या तस्यां रात्रौ वसुनामानं पितरं वव्रे। स च पिता धर्म-लोपा-द्भीतः सन् तां कन्यां नैच्छत्। सोऽयमितिहासः पद्मपुराणेऽवगन्तव्यः।

अमा-वसु-शब्दौ यदा सूर्य्यरश्मि-निवासवाचिनौ, तदा तदनुसारेण निर्वचनं स्कान्दे नागरखण्डे पठ्यते,—

"अमा नाम रवेरश्मिः सहस्र-प्रमुखः स्मृतः।
यस्य वै* तेजसा सूर्य्यः प्रोक्तस्त्रैलोक्य-दीपकः॥
तस्मिन् वसति येनेन्दुरमावास्या ततः स्मृता"—इति॥

ब्रह्माण्डपुराणेऽपि,—

"अमा नाम रवेरश्मिश्चन्द्र-लोके प्रतिष्ठिता।

* यस्यावै,—इति वि॰ पुस्तके पाठः।

यस्मात्सोमोवसेत्तस्याममावास्या ततः स्मृता"—इति ॥

अमा-वसु-शब्दयोः सहभाव-निवास-वाचित्वमाश्रित्य मत्स्य-वायु-ब्रह्माण्डपुराणेषु निर्वचनं कृतम्,—

"अमा वसेतामृक्षे तु यदा चन्द्र-दिवाकरौ।

एषा पञ्चदशी रात्रिरमावास्या ततः स्मृता"—इति ॥

अमाशब्दस्य चन्द्र-कला-वाचित्वं स्कान्दे दर्शितम्,—

"अमा षोडश-भागेन देवि-प्रोक्ता महाकला"—इति ॥

तां कलामुपजीव्य निर्वचनं भगवतीपुराणे दर्शितम्,—

"कलाऽवशेषो निःक्रान्तः प्रविष्टः सूर्य्य-मण्डलम्।

अमायां विशते यस्मादमावास्या ततः स्मृता"—इति॥

अमावास्या-शब्द-पर्यायोदर्श-शब्दोऽपि द्विधा निरुच्यते। सूर्याचन्द्रमसौ परस्परं पश्यतोऽत्रेति दर्शः। तदुक्तं मत्स्यपुराणे*,—

"आश्रित्यताममावास्यां पश्यतः सुसमागतौ।

अन्योन्यं चन्द्र-सूर्य्यौ तौ यदा तद्दर्शउच्यते"—इति ॥

न दृश्यते चन्द्रोऽत्रेति द्वितीयं निर्वचनम्। यद्यपि तदानीमदर्शइति वक्तव्यं, तथापि विपरीत-लक्षणया दर्शः,—इत्युच्यते। तदेतच्छब्दाचार्य्यैः कृतम्। "शूरे कातरशब्दवत्"—इति। चन्द्रादर्शनञ्च शतपथ-वाक्येन पूर्वमुदाहृतम्। "स यत्रैष एतां रात्रिं न पुरस्तान्न पश्चाद् ददृशे"—इति। अदर्शने च कारणं सूर्याचन्द्रमसोरत्यन्त-सन्निकर्षः। सति च तस्मिन् सन्निकर्षे, महता सौरेण तेजसा चान्द्रतेजोऽभिभूयते। अतएव,

* मत्स्यवायुपुराणयोः—इति वि॰ पुस्तके पाठः।

लक्षणा,—इति ब्रूमः। यथा गङ्गायां घोषः,—इत्यत्र गङ्गाशब्दः प्रवाहेऽ-नुपपन्नस्तत्समीपं तीरं लक्षयति, तथा सन्धिशब्दोऽपि पार्श्व-द्वयं लक्षयतु। अतएव श्रुत्यन्तरम्। "सन्धिमभितोयजेत"—इति। बौधायनोऽपि,—

"सूक्ष्मत्वात् सन्धि-कालस्य सन्धेर्विषयउच्यते।

सामीप्यं विषयं प्राहुः पूर्वेणाथपरेण वा"—इति॥

अत्र, पूर्वापर-शब्दाभ्यां सन्धेः प्राचीनं पर्व-दिनं पराचीनं प्रतिपद्दि-नञ्चाभिधीयते। तत्र, पूर्वस्मिन् पर्व-दिने याग-प्रारम्भः, उत्तरस्मिन् प्रति-पद्दिने याग-समाप्तिः। अन्वाधानमिध्माबर्हिः-सम्पादनमग्नि-परिग्रहउप-स्तरणमित्येवमादिः प्रयोगः प्रारम्भः। स पूर्वेद्युरनुष्ठेयः। तथा च तैत्ति-रीय-ब्राह्मणे श्रूयते। "पूर्वेद्युरिध्माबर्हिः करोति, यज्ञमेवारभ्य गृहीत्वो-पवसति"—इति। शतपथ-ब्राह्मणेऽपि। "पूर्वेद्युरग्निं गृह्णाति उत्तर-महर्यजति"—इति।

तत्राग्नि-ग्रहणं नामाध्वर्युणा आहवनीय-गार्हपत्य-दक्षिणाग्निषु, 'ममाग्ने वर्चः'—इत्यादिभिर्ऋग्भिः समिदाधान-लक्षणेऽन्वाधाने क्रिय-माणे पार्श्ववर्त्तिना यजमानेन "अग्निं गृह्णामि',—इत्यादीनां मन्त्राणां पठनम्। तदिदं पर्वदिने क्रियते। प्रतिपद्दिने तु "कर्मणेवान्देवेभ्यः"—इत्यादिभिरध्वर्युर्हस्तप्रक्षालन-तण्डुलनिर्वाप-पुरोडाशप्रदानादिलक्षणं प्रयोगं करोति। तदिदं यजनम्। एतदेवाभिप्रेत्य गोभिलआह,—"पञ्चान्ताउपवस्तव्याः पञ्चादयोऽभियष्टव्याः"—इति॥ अत्रोपवासशब्दे-नान्युपस्तरणादर्विवक्षितः। तस्मिन् क्रियमाणे यजमानसमीपे देव-तानां निवासात्। तदेतत्तैत्तिरीय-ब्राह्मणे दर्शितम्। "उपास्मिन् श्वोयक्ष्यमाणे देवतावसन्ति यएवं विद्वानग्निमुपस्तृणाति"—इति।

उपवासशब्दाभिधेयस्य पर्वदिने कर्त्तव्यस्यान्वाधानादेः पर्वणि चतुरंशवति आद्यास्त्रयोंऽशाविहितः कालः । न तु चतुर्थांशः । यागस्य तु पर्व-चतुर्थांशः प्रतिपदंशास्त्रयस्य विहितः कालः । न तुप्रतिपदश्चतुर्थांशः । तदेतदाह लौगाक्षिः,—

"त्रीनंशानौपवसस्य यागस्य चतुरोविदुः ।
द्वावंशावुत्सृजेदन्त्यौ यागे च व्रत-कर्मणि"—इति ॥

तमेतं दशकालं यज्ञपार्श्वोऽप्याह,—

"पञ्चदशस्याः परः पादः पश्चादेः प्रथमास्त्रयः ।
कालः पार्वण-यागे स्यादयान्ये तु न विद्यते"—इति ॥

शङ्खशातातपोऽपि,—

"पर्वणोयश्चतुर्थांशश्चाद्याः प्रतिपदस्त्रयः ।
यागकालः स विज्ञेयः प्रातरुक्तोमनीषिभिः"—इति ॥

अत्र, "प्रातर्"—इति विशेषणात् सूर्य्योदयस्योपरि मुहूर्त्त-त्रयं, याग-कालइत्युक्तं भवति । प्रतिपदश्चतुर्थांशं निषेधति कात्यायनः,—

"न यष्टव्यं चतुर्थांशे यागैः प्रतिपदः क्वचित् ।
रक्षांसि तद्विलुम्पन्ति श्रुतिरेषा सनातनी"—इति ॥

तदेवं पर्वण्यन्वाधानादिकं प्रतिपदि चेष्टिरिति सन्धि-पार्श्वयोः प्रारम्भ-परिसमाप्ती व्यवस्थिते । यदा पर्व-प्रतिपदावुदयमारभ्य पूर्ण-तिथी भवतः, तदा न सन्देहएव । यदा तु खण्ड-तिथी, तदा तु निर्णयोऽभिधीयते । तत्र गोभिलः,—

"आवर्त्तने यदा सन्धिः पर्व-प्रतिपदोर्भवेत् ।
तदहर्यागइष्येत परतश्चेत् परेऽहनि॥

पर्व-प्रतिपदोः सन्धिरर्वागावर्त्तनाद्यदि ॥

तस्मिन्नहनि यष्टव्यं पूर्वेद्युस्तदुपक्रमः।

आवर्त्तनात्परः सन्धिर्यदि तस्मिन्नुपक्रमः।

परेद्युरिष्टिरित्येष पर्व-द्वय-विनिश्चयः"—इति॥

आवर्त्तनमह्नोमध्य-भागः। लौगाक्षिरपि,—

"पूर्वाह्णे वाऽथ मध्याह्ने यदि पर्व समाप्यते।

उपोष्य तत्र पूर्वेद्युस्तदहर्यागइष्यते॥

अपराह्णेऽथवा रात्रौ यदि पर्व समाप्यते।

उपोष्य तस्मिन्नहनि श्वोभूते यागइष्यते"—इति॥

एषु वचनेषु मध्याह्नादि-शब्दायौगिकाः, न तु पञ्चधा विभागमाश्रित्य प्रवृत्ताः। तथा सति "अह्नोमध्यं मध्याह्नः"—इति व्युत्पत्तेरावर्त्तनं मध्याह्न-शब्देनाभिधीयते। अतएव, गोभिलेनावर्त्तनशब्दः प्रयुक्तः। शातातपेनापि मध्यमशब्दः प्रयुक्तः,—

"पूर्वाह्णे मध्यमे वाऽपि यदि पर्व समाप्यते।

तदोपवासः पूर्वेद्युस्तदहर्यागइष्यते"—इति॥

अह्नः पूर्वोभागः पूर्वाह्णः। अह्नोऽपरोभागोऽपराह्णः। अतस्ताभ्यां शब्दाभ्यामावर्त्तनात् पूर्वोत्तर-भागावभिधीयेते। वाजसनेयिनान्तु विशेष-माह भाष्यार्थ-संग्रहकारः,—

"मध्यन्दिनात् स्यादहनीह यस्मिन्

प्राक् पर्वणः सन्धिरियं तृतीया।

सा खर्विका वाजसनेयिमत्या

तस्यामुपोष्याऽथ परेद्युरिष्टिः"—इति॥

आवर्तनादूर्ध्वमस्तमयादर्वाग्यदा सन्धिर्भवति, तदाऽहःसन्धिमती तिथिः प्रथमा। रात्रौ सन्धिश्चेत् सा तिथिर्द्वितीया। ते उभे अपेक्ष्य पूर्व्वाह्णे सन्धिमती पर्वतिथिस्तृतीया भवति। तस्यां तृतीयायां तिथौ पर्वकालस्याल्पत्वात् सा खर्विकेत्युच्यते। शाखान्तराध्यायिनामीदृशे विषये पूर्वेद्युरन्वाधानादिकं सन्धितिथाविष्टिः। वाजसनेयिनां तु सन्धितिथावन्वाधानमुत्तरतिथाविष्टिः। एवं सति, वाजसनेयिनां न क्वापि सन्धिदिनात् पूर्वेद्युरन्वाधानादिकमस्ति। सोऽयं विशेषः।

आवर्त्तने ततः पुरा वा यदि सन्धिर्भवति, तदा वाजसनेयि-व्यतिरिक्तानां पर्वचतुर्थांशे इष्टिः प्राप्नोति। तत्र विशेषमाह गार्ग्यः,—

"प्रतिपद्यप्रविष्टायां यदि चेष्टिः समाप्यते।

पुनः प्रणीय तत्त्वेष्टिः कर्त्तव्या यागवित्तमैः" इति॥

पर्वणश्चतुर्थोऽंशः प्रतिपदस्त्रयोऽंशाश्च याग-कालत्वेन विहिताः। तत्र, पर्व-चतुर्थांशस्य विषयउदाहृतः। प्रतिपदंशानां विषयउदाह्रियते। उषःकाले सन्धौ, प्रतिपदः प्रथमांशोयाग-कालः। निशीथे सन्धौ, द्वितीयोऽंशः। रात्रि-प्रारम्भे सन्धौ, तृतीयांशः।

ननु, अनेन न्यायेनापराह्णे सन्धौ प्रतिपच्चतुर्थांशस्य प्रयोग-कालत्वं प्राप्नोति। तच्च प्रतिषिद्धं, "न यष्टव्यं चतुर्थेऽंशे"—इति श्रुतेः। अतस्तादृशे विषये यागएव लुप्येत,—इति चेत्। नैवम्। वृद्धशातातपेन, प्रतिप्रसवाभिधानात्,—

"सन्धिर्यद्यपराह्णे स्याद्यागं प्रातः परेऽहनि।

कुर्वाणः प्रतिपद्भागे चतुर्थ्येऽपि न दुष्यति"—इति॥

एवं तर्हि, प्रतिषेधोनिर्विषयः स्यादिति चेत्। नैवम्। सद्यस्काल-

विषये चरितार्थत्वात्। तच्च विषयं दर्शयति कात्यायनः,—

"सन्धिश्चेत् संगवादूर्ध्वं प्राक् चेदावर्त्तनाद्रवेः।

सा पौर्णमासी विज्ञेया सद्यस्काल-विधौ तिथिः—इति ॥

भाष्यार्थसंग्रहकारोऽपि,—

"अन्वाहितिस्तास्तरणोपवासाः

पूर्वेद्युरेते खलु पौर्णमास्याम्।

आवर्त्तनात् प्राग्यदि पर्व-सन्धिः

सद्यस्तु* यागः क्रियते समस्तः"—इति ॥

आपस्तम्बोऽपि। "पौर्णमास्यामन्वाधानपरिस्तरणोपवासाः सद्योवा सद्यस्कालायां सर्वं क्रियते"—इति। सङ्गवावर्त्तनयोर्मध्ये पौर्णमासी-प्रतिपदोः सन्धौ सति, पूर्वोदाहृतैर्वचनैः सन्धि-दिनात् पूर्वेद्युरन्वाधाना-दिकं प्राप्तम्। तच्च सद्यस्काल-वाक्यैः सन्धि-दिने उत्कृष्यते।

ननु, ईदृशे विषये सन्धि-दिनात्परदिने यागउत्कृष्यताम्। तथा सत्य-पराह्णादि-सन्धिष्विवान्वाधान यागयोर्दिनभेदोभविष्यति। अस्ति चात्र दृष्टान्तः, वाजसनेयिनामीदृशे विषयेऽन्वाधानोत्कर्षे सति यागस्या-प्युत्कृष्टत्वात्। नैवम्। अन्वय-व्यतिरेक-रूपाभ्यां विधि-निषेधाभ्यामस्याः शङ्कायानिवारितत्वात्। तत्र, सद्यस्काल-विधयोऽन्वयरूपाः। प्रति-पच्चतुर्थांश-प्रतिषेधाव्यतिरेकरूपाः। एवञ्च सति, प्रतिषेध-वाक्यं साव-काशं भवति।

अमावास्यायां विशेषमाह शङ्खशातातपः,—

"द्वितीया चि-मुहूर्त्ता चेत् प्रतिपद्याऽऽपराह्णिकी।

---

* तदेव,—इति मु॰ पुस्तके पाठः।

अन्वाधानं चतुर्दश्यां परतः सोम-दर्शनात्"—इति॥

सोऽयं विशेषोगाश्वलायनापस्तम्ब-विषयः। किं तु बौधायन-मता-नुसारि-विषयः। अतएव बौधायनः,—

"द्वितीया त्रि-मुहूर्त्ता चेत् प्रतिपद्याऽऽपराह्णिकी।
अन्वाधानं चतुर्दश्यां परतः सोम-दर्शनात्॥
चतुर्दशी चतुर्यामा अमावास्या न दृश्यते।
श्वोभूते प्रतिपच्चेत्स्यात् पूर्वां तत्रैव कारयेत्॥
चतुर्दशी च सम्पूर्णा द्वितीया क्षय-कारिणी।
तत्रेष्टिरमायां स्याद्भूते कव्यादिकी क्रिया"—इति।

एतेषां वचनानामयमर्थः। अह्नि चतुर्दशी सम्पूर्णा, अस्तमयादर्वाग-मावास्या स्वल्पा। ततएवापराह्ण-व्याप्त्यभावाच्छ्राद्धायान्वाधानाय वा पूर्वोक्तरीत्या यद्यपि निमित्तभावं न भजते, तथापि प्रतिपदि द्वितीयायां सत्यां चन्द्रस्य दृश्यमानत्वात्तद्दर्शने चेष्टेर्निषिद्धत्वात् प्रतिपद्-युतायाममावास्यायामिष्टिः, स्वल्पामावास्योपेतायां चतुर्दश्यां श्राद्धा-न्वाधानादिकं कर्त्तव्यम्,—इति। एतदेवाभिप्रेत्य सूत्रकारे,—

"आदित्येऽस्तमिते चन्द्रः प्रतीच्यामुदियाद्यदि*।
प्रतिपद्यतिपत्तिः स्यात् पञ्चदश्यां यजेत्तदा"—इति॥

लघुवसिष्ठोऽपि,—

"इन्दौ निरुप्ते पयसि पुरस्तादुदिते विधिः।
यदि गुप्तं कृते तस्मिन् पश्चादपि हि तद्भवेत्"—इति॥

* यदा,—इति मु॰ पुस्तके पाठः।

अयमर्थः। यदा सम्पूर्ण-चतुर्दश्यामविचारेणामावास्या-बुद्धिं कृत्वा उन्याधानादिकं कृत्वा हविर्निर्वापं करोति, कृते तस्मिन्नुषःकाले पूर्वस्यान्दिशि चन्द्रमाउदेति, तदा न दर्श-कर्म भवितुमर्हति। दर्शकालस्याप्राप्तत्वात्। किन्तु कालापराधं निमित्तीकृत्य दर्श-देवताअपनीय दात्रादिगुण-विशिष्टान्यग्न्यादि-देवतान्तराण्युद्दिश्य हविः-प्रक्षेपोविहितः। तदेतत्तैतिरीय-ब्राह्मणे श्रूयते। "यस्य हविर्निरुप्तं पुरस्ताच्चन्द्रमा-अभ्युदेति तण्डुलान् विभजेद् ये मध्यमाः स्युस्तानग्नये दात्रे पुरोडाश-मष्टाकपालं कुर्य्याद्ये स्थविष्ठास्तानिन्द्राय प्रदात्रे दधंश्चरुं ये क्षोदिष्ठा-स्तान् विष्णवे शिविपिष्टाय शृते चरुं"—इति। सोऽयं दृष्टान्तः। हविषि निरुप्ते सति तत ऊर्ध्वं पूर्वस्यान्दिशीन्दावुदिते सति दर्श-कर्म-विधेर्यद्वैगुण्यमुक्तरीत्या व्यवस्थितम्, तदेव वैगुण्यं होमदिने पश्चिमदिशि चन्द्रोदये भवति—इति। एतदेव बौधायन-मतमुपोद्बलयति श्रुतिः। "यस्मिन्नहनि पुरस्तात्पश्चात् सोमोन दृश्यते तदहर्यजेत"—इति। अयमर्थः। सिनीवाल्यां पुरस्ताच्चन्द्र-दर्शनं भवति, द्वितीया-युक्तायां प्रतिपदि पश्चाच्चन्द्रोदृश्यते, तयोरुभयोर्मध्य-वर्त्तिन्यां कुह्वां द्विविधमपि चन्द्र-दर्शनं नास्ति, अतस्तस्मिन्दिने यष्टव्यम्,—इति। चन्द्र-दर्शनोपेतायां शुक्ल-प्रतिपदि यागानुष्ठाने प्रायश्चित्तमाह कात्यायनः,—

"यजनीयेऽह्नि सोमस्तेद्वारुण्यां दिशि दृश्यते।
तत्र व्याहृतिभिर्हुत्वा दण्डं दद्याद्द्विजातये"—इति॥

चन्द्र-दर्शन-राहित्यमेवाभिप्रेत्य बौधायन-कारिकासु पठ्यते,—

"इष्टेरलं प्रतिपदादिभवास्तु नाड्यः
सप्ताष्ट वा यत्र भवन्ति तस्मात्।

क्षीणासु नाडीषु दिनस्य पूर्वः

कल्पोऽथ वृद्धौ च भवेद्द्वितीयः"—इति।

अयमर्थः। अमावास्या-तिथेः संबन्धिनीषु नाडीषु क्षीणासु सतीषु तस्मिन्दिने अस्तमयात् पूर्वं प्रतिपत्-संबन्धिन्योनाड्यः सप्ताष्ट वा यदि भवन्ति, तदा तद्दिनमिष्टेरलं योग्यम्। सोऽयमेकः पक्षः। अमावास्या प्रतिपदौ यदा वर्द्धेते, तदा द्वितीयः कल्पोभवेत्; अमावास्यायामन्वाधाय सोम-दर्शन-रहिते प्रतिपद्दिने यागः कर्त्तव्यः,—इति। स्मृत्यन्तरेऽपि,—

"अर्वागस्तमयाद् यत्र द्वितीया तु प्रदृश्यते।

तत्र यागं न कुर्वीत श्रोदेवास्तु पराङ्मुखाः"—इति॥

बौधायन-मतानुसारिणामन्वाधानवद्दर्श-श्राद्धमपि स्वल्पामावास्योपेतायां चतुर्द्दश्यां कर्त्तव्यम्। तथा च बौधायनेनोक्तम्,—

"यदा चतुर्दशीयामन्तुरीयमनुपूरयेत्।

अमावास्या क्षीयमाणा तदैव श्राद्धमाचरेत्॥

चतुर्द्दश्यां चतुर्यामे अमा यत्र न दृश्यते।

श्वोभूते प्रतिपद् यत्र भूते कव्यादिकौ क्रिया"—इति॥

चतुर्थ यामे अमावास्या सम्पूर्णा न दृश्यते, किन्त्ववमाने स्वल्पा; सा च परदिने क्षीयते, तदानीं चतुर्दश्यां श्राद्धमाचरेत्।

ननु, चन्द्र-दर्शनोपेतायां प्रतिपदि इष्टिः समाम्नाता। तथा च शतपथ-ब्राह्मणम्। "यदहः पश्चाच्चन्द्रमाअभ्युदेति तदहर्यजन्निमाँल्लोकानभ्युदेति"—इति। तैत्तिरीयब्राह्मणमपि। "एषा वै सुमनानामेष्टिर्यमभि यजमानं पश्चाच्चन्द्रमाअभ्युदेत्यस्मिन्नेवास्मै लोके सर्द्धु-

भवति"—इति। अयमर्थः। येयमिष्टिश्चन्द्र-दर्शनोपेते दिने क्रियते, सेयमिष्टिः सुमनःशब्द-वाच्या, तादृशीमिष्टिं कृतवन्तं यं यजमान-मभिलक्ष्य तस्मिन्नेव दिने पश्चाच्चन्द्रमाउदेति, तस्मै यजमानायास्मिन् लोके समृद्धिर्भवतीति। बाढ़म्। तदेतच्छ्रुति-द्वयं बौधायन-मतानु-सारि-व्यतिरिक्त-विषयम्। एतदेवाभिप्रेत्य प्रतिपच्चतुर्थांशे यागउदाहृतः।

ननु, बौधायन-व्यतिरिक्तानामपि चन्द्र-दर्शन-योग्यं द्वितीया-युतं प्रतिपद्दिनमिष्टौ निषिद्धम्। तथा च स्मृतिः,—

"पर्वणोऽंशे चतुर्थे तु कार्य्या नेष्टिर्द्विजोत्तमैः* ।
द्वितीया-सहितं यस्मात् दूषयन्त्याश्वलायनाः"—इति॥

तदेतदावर्त्तन-तत्पूर्वकालयोः सन्धौ सति द्रष्टव्यम्। अपराह्णादि-सन्धिषु पर्व्वचतुर्थस्येष्टावप्राप्तत्वात्। तदेवं प्रकृतिरूपायादृष्टेः कालो-निरूपितः। विकृतेस्तु कालोनिरूप्यते। तत्र कात्यायनः,—

"आवर्त्तनात् प्राग्यदि पर्वसन्धिः
कृत्वा तु तस्मिन् प्रकृतिं विकृत्याः।
तत्रैव यागः परतोयदि स्यात्
तस्मिन् विकृत्याः प्रकृतेः परेद्युः"—इति॥

आवर्त्तने ततः पुरा वा पर्वसन्धौ तस्मिन् सन्धि-दिने प्रथमं† प्रकृति-यागं कृत्वा पश्चाद्विकृतिसंबन्धी यागः कर्त्तव्यः। यद्यावर्त्तनात्परतः सन्धिः, तदा केवल-विकृति-यागः सन्धिदिने कर्त्तव्यः, प्रकृतियागस्तु सन्धिदि-

---

* कर्त्तव्येष्टिर्द्विजोत्तमैः,—इति मु॰ पुस्तके पाठः।
† प्रथमं,—इति नास्ति मु॰ पुस्तके।

नात्परेद्युरनुष्ठेयइत्यर्थः। आवर्त्तने, ततः पूर्वकाले, परकाले वा सन्धि-रित्येतेषु त्रिष्वपि पक्षेषु सन्धिदिनएव विकृतेरनुष्ठानम्। प्रकृतेस्तु पूर्वोक्तरीत्या सन्धिदिने परेद्युश्चानुष्ठानं व्यवतिष्ठते। इष्टीनां सर्वासां दर्शपूर्णमासौ प्रकृतिः। "ऐन्द्राग्नमेकादशकपालं निर्वपेत् प्रजाकामः"—इत्यादयः काण्डान्तर-पठिताः काम्येष्टयोविकृतयः। तत्र, "प्रकृतिवद्वि-कृतिः कर्त्तव्या"—इति न्यायेन विकृतीनामपि सन्धिदिनात् परेद्युः कदाचिदनुष्ठानं प्राप्तं, तदेतदुदाहृतेन वचनेन निवार्य्यते।

इष्टि-विकृति-न्यायः पशुविकृति-सोमविकृत्योरपि द्रष्टव्यः। पशूनां सर्वेषामग्नीषोमीयः पशुः प्रकृतिः। "वायव्यं श्वेतमालभेत भूति कामः"—इत्यादयः काण्डान्तर-पठिताः काम्यपशवोविकृतयः। सोम-यागानां सर्वेषामग्निष्टोमः प्रकृतिः। उक्थ्यषोड़श्यतिरात्रादयः विकृतयः। त्रिविधानामिष्टि-पशु-सोम-विकृतीनां पर्व्वैव कालः। तदेतदापस्तम्ब-आह। "यदीष्ट्या यदि पशुना यदि सोमेन यजेत, सोऽमावास्यायां* पौर्णमास्यां वा यजेत"—इति॥ अत्रापि पूर्ववत् प्रतिपदि कदाचि-दिष्टि-प्राप्तौ तद्व्यावृत्तये पुनः कालोविधीयते। तस्माद्विकृतीनां पर्व्वैव कालः,—इति स्थितम्।

ननु, प्रकृतेर्यथोक्त-कालात्कालान्तरं क्वचित् स्मर्य्यते,—

"षोड़शेऽहन्यभीष्टेष्टिर्मध्या पञ्चदशेऽहनि।

चतुर्दशे जघन्येष्टिः पापा मन्नदशेऽहनि"—इति॥

अयमर्थः। पूर्वं प्रतिपद्दिनमारभ्य गणनायामागामि प्रतिपद्दिनं षोड़शं

* अमावास्यायां,—इति वि॰ पुस्तके पाठः।

भवति। तत्रेष्टिरभीष्टोत्तमा। ततः पूर्वस्मिन् पञ्चदशे दिने मध्यमा। ततः पूर्वस्मिन् चतुर्दशेऽहनि जघन्या। तदेवं काल-त्रयं विहितम्। उत्तम-कालात् षोड़शदिनादूर्ध्ववर्त्तिनि सप्तदशे दिने प्रतिषिद्धा। बाढ़म्। तत्रोत्तम-मध्यम-पक्षौ शास्त्रीयौ। तिथीनां वृद्धिक्षयाभावे सत्युत्तमः पक्षः प्राप्नोति। एकस्मिन् दिने क्षीणे सति मध्यमः पक्षः प्रप्नोति। जघन्य-पक्षस्तु न शास्त्रीयः। दिन-द्वय-क्षयाभावात्। अतोजघन्य-शब्दोनिषेध-विवक्षया प्रयुक्तः, न तु पक्षान्तर-विवक्षया*।

ननु, तिथि-वृद्ध्याविष्टेः सप्तदशी तिथिः कदाचिद्भवति, तत्कथं, "पापा सप्तदशेऽहनि"—इति प्रतिषेधः। नायं दोषः। अल्प-तिथि-वृद्धौ यदा षोड़शदिने अमावास्या दशघटिका सप्तदशदिने प्रतिपद्वर्द्धते, तदानीं प्रतिपच्चतुर्थांशस्येष्टि-कालत्व-भ्रान्त्याऽनुष्ठानं प्रसक्तं वचनेन निवार्य्यते†। तच्च न्याय्यं, पूर्वाह्ण-सन्ध्युपेत-दिने एव इष्टेः कर्त्तव्यत्वेन निर्णीतत्वात्। यदा तु, महत्या वृद्ध्या षोड़शदिने अमावास्या सम्पूर्णा सप्तदशे दिने प्रतिपत् सम्पूर्णा, तदा न प्रतिषिध्यते।

ननु, बौधायनेन त्रयोदश-सप्तदश-दिनयोरन्वाधानं प्रतिषिध्यते;

"यत्रौपवसथं कर्म यजनीयात् त्रयोदशम्।
भवेत् सप्तदशं वाऽपि तत्प्रयत्नेन वर्जयेत्"—इति॥

अत्र, यजनीयं प्रतिपद्दिनमारभ्य पञ्चदशदिनमौपवसथस्य मुख्यः कालः, तिथि-क्षये चतुर्द्दशन्दिनम्, तिथि-वृद्धौ षोड़शदिनम्। तथा

* नत्वनौकार्थपक्षान्तरविवक्षया,—इति वि॰ पुस्तके पाठः।

† भ्रान्त्याऽनुष्ठानप्रसक्तावनेन वचनेन निवार्य्यते,—इति वि॰ पुस्तके पाठः।

-न्ति, चयोदश-सप्तदशयोः प्रसक्तिरेव नास्ति, तत्कथं प्रतिषिध्यते,—इति चेत्। एवं तर्ह्ययमप्रसक्त-प्रतिषेधोनित्यानुवादोऽस्तु। अस्ति ह्यप्रसक्त-प्रतिषेधरूपोनित्यानुवादोवेदे, "न पृथिव्यां नान्तरीक्षे न दिव्यग्निश्चेतव्यः"—इति। पूर्वत्र पर्वप्रतिपदोः सन्धिमुपजीव्याऽन्वाधानेष्टि-कालौ व्यवस्थापितौ। तत्र, तिथि-क्षय-वृद्ध्योः सन्धि-विषये कञ्चि-द्विशेषमाह कात्यायनः—

"परेऽह्नि घटिका-न्यूनास्तथैवाभ्यधिकाश्च याः।
तदर्द्धं कृत्वा पूर्वस्मिन् ह्रास-वृद्धी प्रकल्पयेत्"—इति॥

लौगाक्षिरपि,—

"तिथेः परस्याघटिकास्तु याः स्यु-
र्न्यूनास्तथा चाभ्यधिकास्तु तासाम्*।
अर्द्धं वियोज्यञ्च तथा प्रयोज्यं
ह्रासे च वृद्धौ प्रथमे दिने तत्"—इति॥

पूर्वेद्युरमावास्या पञ्चदशघटिका परेद्युः प्रतिपदपि तावती, तदा यथा-स्थितत्वमेवोपजीव्य सन्धिर्विज्ञेयः। यदा प्रतिपदः षट् घटिकाः क्षीयन्ते, तदा घटिका-त्रय-ह्रासोऽमावास्यायां योजनीयः। तस्मिन् योजिते द्वादशघटिकाऽमावास्या भवति। तदाऽऽवर्त्तनात् पूर्वं सन्धिः सम्पद्यते। अनेनैव न्यायेन घटिका-त्रय-वृद्धौ योजितायामष्टादशघटिकाऽमावास्या भवति। तथा सत्यावर्त्तनादूर्ध्वं सन्धिर्भवति। इत्येवं† सन्धिं विज्ञाय तदनुसारेणान्वाधानेष्टी अनुष्ठातव्ये।

---

* यासाम्,—इति वि॰ पुस्तके पाठः।
† तदेवं,—इति वि॰ पुस्तके पाठः।

इतीष्टि-निर्णयः।

ननु, इष्टि-कालवद्ग्रहण-कालोऽप्यत्र निर्णेतव्यः। पर्व-प्रतिपत्-सन्ध्युपजीवनेन प्रवृत्तत्वात्। तथा च वृद्धगार्ग्यः,—

"पूर्णिमा-प्रतिपत्-सन्धौ राहुः सम्पूर्ण-मण्डलम्।
ग्रसते चन्द्रमर्कञ्च दर्शप्रतिपदन्तरे"—इति॥

ब्रह्मसिद्धान्ते,—

"यावान् कालः पर्वणः स्यात्तावान्* प्रतिपदादिमः।
रवीन्दु-ग्रहणेऽनेहा स पुण्योमिश्रणाद्भवेत्"—इति॥

अनेहा कालः। बाढम्। यद्यप्यस्ति सन्ध्युपजीवनं, तथापि निर्णेतव्यांशस्य तिथि-विषयस्याभावादस्मिन् प्रकरणे न तद्योग्यम्। कर्त्तव्य-विशेषस्तूपरितन-प्रकरणे निरूपयिष्यते।

॥०॥ इति माधवीये काल-निर्णये द्वितीयादि-तिथि-निर्णयाख्यं चतुर्थं प्रकरणम् ॥०॥

## अथ प्रकीर्णकाख्यं पञ्चमं प्रकरणम्।

तृतीय-चतुर्थाभ्यां प्रकरणाभ्यां प्रतिपदाद्याः पञ्चदशसङ्ख्याः सर्वास्तिथयोनिर्णीताः। अथ प्रकीर्णकरूपे पञ्चमप्रकरणे नक्षत्र-योगादयः† काल-विशेषेषु कर्त्तव्य-विशेषाश्च संक्षेपेण निरूप्यन्ते। अत्रापि तिथिवत्

* तावत्,—इति मु० पुस्तके पाठः।

† नक्षत्रविशेषादयः,—इति मु० पुस्तके पाठः।

सम्पूर्ण-नक्षत्रे सन्देहाभावात् खण्ड-नक्षत्रे निर्णयोऽभिधीयते। स च निर्णयोऽदर्शितो विष्णुधर्मोत्तरे,—

"उपोषितव्यं नक्षत्रं यस्मिन्नस्तमियाद्रविः।

युज्यते यत्र वा राम, निशीथे शशिना सह"—इति॥

अत्रास्तमययोगो निशीथयोगश्चेति योग-द्वयं प्रयोजकम्। अस्तमय-योगो मुख्यः कल्पः, निशीथयोगोऽनुकल्पः। योग-द्वये लब्धे सत्यनुष्ठान-मतिप्रशस्तम्। यदा तु पूर्वेद्युः केवलो निशीथ-योगः परेद्युः केवलोऽस्त-मययोगः, तदा मुख्यकल्पानुसारेण परेद्युरेवोपवासः। तथा सति, प्रातः सङ्कल्प-काले नक्षत्र-सद्भावोऽपि लभ्यते। निशीथे शशिना युज्यते,—इति ज्योतिःशास्त्र-सिद्धस्य शशि-योगस्य विवक्षितत्वात् नक्षत्र-सद्भावमात्रमभिधीयते,—इत्यवगन्तव्यम्। दिनद्वयेऽप्यस्तमय-योगाभावे निशीथ-योगेन पूर्वेद्युरेवोपवासः। तदाह सुमन्तुः,—

"यत्रार्द्धरात्रादर्वाक् तु नक्षत्रं प्राप्यते तिथौ।

तन्नक्षत्र-व्रतं कुर्यादतीते पारणं भवेत्"—इति॥

नात्र तिथिवद्विवेकभक्त-नक्तयोर्मध्याह्न-प्रदोष-व्याप्तिभ्यां निर्णयः। किन्तूपवास-नक्षत्र एव तदुभयोः कर्म्मव्यता। तदुक्तं स्कन्दपुराणे,—

"तत्र चोपवसेदृक्षे यन्निशीथादधो भवेत्।

उपवासे यदृक्षं स्यात्तद्धि नक्तैकभक्तयोः"—इति॥

यत्तु विष्णुधर्मोत्तरे,—

"सा तिथिस्तच्च नक्षत्रं यस्यामभ्युदितो रविः।

तथा कर्म्माणि कुर्वीत ह्रास-वृद्धी न कारणम्"—इति॥

तदुपवास-व्यतिरिक्त-व्रतादि-विषयम्। यदपि बौधायन-वचनम्,—

"सा तिथिस्तच्च नक्षत्रं यस्यामभ्युदितो रविः।
वर्द्धमानस्य पक्षस्य हीने त्वस्तमयं प्रति"—इति।

तत्पितृ-कार्य-विषयम्॥ यदपि मार्कण्डेयेनोक्तम्,—

"तन्नक्षत्रमहोरात्रं यस्मिन्नस्तमितो रविः।
यस्मिन्नुदेति सविता तन्नक्षत्रं भवेद्दिनम्"—इति॥

तस्यायमर्थः। द्विविधो नक्षत्र-संबन्धी काल-विशेषः, अहोरात्रो दिनञ्च। तत्रोदितं कर्मापि द्विविधम्, अहोरात्र-साध्यं दिन-साध्यञ्च। उपवासैकभक्तादिकमहोरात्र-साध्यम्। यद्यपि, विशिष्ट-काल-निष्पाद्यं भोजनमेकभक्तादेः स्वरूपं, तथापि तस्मिन्नहोरात्रे भोजनान्तरस्यैकभक्तादि-नियम-प्राप्ततया भोजनान्तर-परित्याग-सहितस्यैव भोजनस्यैकभक्तादि-स्वरूपत्वादहोरात्र-साध्यत्वमप्यविरुद्धम्। दिनमात्र-साध्यानि तु दान-व्रत-श्राद्धानि, तेषामहन्येव विधानात्। तत्रोपवासादौ नाक्षत्रोऽहोरात्रो ग्रहीतव्यः। व्रतादौ तु नाक्षत्रं दिनङ्गृहीतव्यम्। अहोरात्रस्य नाक्षत्रत्वं, सूर्यास्तमयकाले नक्षत्र-व्याप्त्या सम्पद्यते। दिनस्य तु नाक्षत्रत्वं, सूर्योदये नक्षत्र-व्याप्त्या सम्भवति,—इति। यद्यपि, 'यस्मिन्नुदेति सविता',—इत्यत्र सूर्योदय-काले नक्षत्र-सद्भावमात्रं प्रतीयते, न तु परिमाण-विशेषः; तथापि, त्रि-मुहूर्त्त-परिमाणस्य तिथौ * क्लृप्तत्वात्तदेवात्रानुसन्धेयम्।

ननु, दान-व्रतवच्छ्राद्धेऽपि नाक्षत्र-दिन-स्वीकारे प्रातःकालमात्रव्यापि-नक्षत्रेऽपि श्राद्धं प्रसज्येत। नैवम्। अपराह्णस्य श्राद्ध-कालत्वेन तद्व्याप्तेरपेक्षितत्वात्। तथा च स्मृतिः,—

---

* तिथिषु,—इति वि० पुस्तके पाठः।

"नक्षत्रे खण्डिते येन प्राप्तः कालस्तु कर्मणः ।
नक्षत्र-कार्य्याण्यत्रैव तिथि-कर्म तथैव च"—इति ॥

अथानेनैव न्यायेनैकभक्ते मध्याह्न-व्यापि-नक्षत्रं ग्राह्यमिति मन्त-नीयम् । उपवास-नक्षत्रस्यैवैकभक्ते प्रतिपदोक्तत्वात् । यदपि स्मृति वचनम्,—

"तिथीनामन्तिमोभागस्तिथि-कर्मसु पूजितः ।
ऋक्षाणां पूर्व्व-भागस्तु ऋक्ष-कर्मसु पूजितः"—इति ॥

तत्र, तिथ्यन्तस्य पूज्यत्वं दान-व्रत-विषयम् । नक्षत्र-पूर्वभाग-पूज्यत्वं उपवासादि-विषयम् । उपवासादि-व्यतिरिक्ते तु दैवे कर्मणि नक्ष-त्रस्याप्यन्त्यभाग-पूज्यत्वं द्रष्टव्यम् । नक्षत्र-विशेषेषु पूर्वरूपस्य निन्द्रत्वस्य,

"श्रवणेन तु यत्कर्म उत्तराषाढ-संयुतम् ।
संवत्सर-कृतोऽध्यायस्तत्क्षणादेव नश्यति ॥
धनिष्ठा-संयुतं कुर्याच्छ्रावणं कर्म यद्भवेत् ।
तत्कर्म सफलं विद्यादुपाकरण-संज्ञकम्"—

इति निषिद्धत्वात् ।

योगेषु तु कस्य चिन्निन्द्यस्य पूर्वेद्युर्निशीथमात्र-व्याप्तिं प्रत्यस्तमयका-लायत्तादि-व्याप्तिर्ग्राह्या । यदि योगः पूर्व्वेद्युर्निशीथमात्रं व्याप्नुयात्* तदा परेद्युरहनि पारणं प्राप्नुयात्, रात्रौ पारणस्य निषिद्धत्वात् । अतोऽत्रान्येव व्यतीपात-पारणं अवश्यास्तं पूर्वेद्युर्दिवसे सायङ्कालादि-योगं प्रयोजकं सूचयति । तस्मादिष्कम्भादि-योगस्योपवासादौ पूर्वे-

* प्राप्नुयात्,—इति मु०, क० पुस्तकयोः पाठः ।

विद्धोपग्रहीतव्यः, दान-व्रतयोरुदय-व्यापी ग्राह्यः, श्राद्धस्य तु कर्म-काल-व्यापी,—इति निर्णेतव्यम्।

बव-बालवादि-करणानामिष्यर्द्ध-परिमितत्वेन दिनद्वयाव्यापित्वात्सन्देहोनास्ति। तस्मादुदयेऽस्तमये वा यस्मिन्दिने करण-सद्भावः, तस्मिन्नेव दिने तत्कर्मानुष्ठेयम्। यदा तु सायंसन्ध्यामारभ्य परेद्युरुदयात्प्रागेव करणं समाप्यते, तत्र कथमिति चेत्। तदा, भद्रा-करणोक्त-न्यायेन सर्वेषु करणेषु निर्णयः,—इति ब्रूमः। भद्रा-करणे च निर्णयोभविष्योत्तरे भद्रा-व्रते पठ्यते,—

"यस्मिन्दिने भवेद्भद्रा तस्मिन्नहनि भारत।
उपवासस्य नियमङ्कुर्यान्नारी नरोऽपिवा॥
यदि रात्रौ भवेद्विष्टिरेकभक्तं दिन-द्वये।
कार्यं, तेनोपवासः स्यादिति पौराणिकोविधिः॥
प्रहरस्योपरि यदा स्याद्विष्टिः प्रहर-त्रयम्।
उपवासस्तदा कार्यएकभक्तन्ततोऽन्यथा"—इति॥

उदयादारभ्य यावदस्तमयं विष्टि-सत्तायां नास्त्युपवासे सन्देहः। यदा तु प्रहरमात्रे विष्टिर्नास्ति तस्योपरि प्रहर-त्रयं विष्टिर्भवति, तदा कृत्स्न-दिन-व्याप्तेर्भद्रायाअभावेऽपि एकदेश-व्याप्तेः सद्भावादुपवासोऽनुष्ठेयः। 'अन्यथा'—इत्यनेनैकदेश-व्याप्त्यभावोऽपि विवक्षितः। तस्मिन् पक्षे समनन्तरातीत-वचनाद्दिनद्वयेऽप्येकभक्तं कार्यम्। यस्तु भद्राव्रतं सङ्कल्प्याहोरात्रमुपोषितुं न शक्नुयात्, असौ भद्रा-युक्त-घटिकासु भोजनम्परित्यजेत्। भद्रा-रहित-काले भुक्त्वाऽपि उपवासान्न हीयते। तथा च भविष्योत्तरे पठ्यते,—

"स्नातः सम्पूज्य तामेव ब्राह्मणं च समर्चितः।
ततोभुञ्जीत राजेन्द्र, यावद्भद्रा न जायते॥
अथवाऽन्तेऽपि भद्रायाः कामतोवाग्यतः शुचिः।
न किञ्चिद्भक्षयेत् प्राज्ञोयावद्भद्रा प्रवर्त्तते"—इति॥

अन्त्यचरमभागे यदा भद्रा-प्रवेशस्तदानीमेकदेशे भद्रा-योगिनो-दिनस्य तद्व्रतार्हत्वादशक्तस्य भद्रा-प्रवेशात् प्रागेव भोजने प्राप्ते सत्यभुक्तेन पूजादेरनुष्ठेयत्वाद्भद्रा-रहितेऽपि काले पूजादिकं न विरुध्यते। यदा तु भद्रायामन्ते भुङ्क्ते, तदा-कर्म-काल-व्याप्ति-शास्त्राद्भद्रोपेतकाल एव पूजादिकं कर्त्तव्यम्। पञ्चदशेऽपि भद्रा-युक्त-घटिकासु न किञ्चिद्भक्षयेत्, तावतैव भद्रोपवासः पूर्य्यते।

बवादि-करणेषु कस्यापि विशेषस्य शास्त्रेणानुक्तत्वात् भद्रायां कृत्स्नस्य न्यायस्यातिक्रमे कारणाभावाच्चायमेव निर्णय-प्रकारः सर्वोऽपि योजनीयः। न च, तिथि-नक्षत्र-योग-करणानां पञ्चाङ्गान्तःपातिनां निर्णयं कृत्वा तदन्तःपाती शास्त्रीय-कर्मोपयोगी वारः कुतउपेक्षितः,—इति शङ्कनीयम्। अहोरात्र-परिमितत्वेन वासरे सन्देहाभावात्॥

तदेवं नक्षत्र-योग-करणानि निर्णीतानि॥

## अथ संक्रान्तिर्निर्णीयते॥

मेषादिषु द्वादशराशिषु क्रमेण सञ्चरतः सूर्य्यस्य पूर्वस्माद्राशेरुत्तरराशौ संक्रमणं प्रवेशः संक्रान्तिः। अतस्तत्तद्राशि-नाम-पुरःसरं सा संक्रान्तिर्व्यपदिश्यते। राशयश्चामी, मेष-वृष-मिथुन-कर्कट-सिंह-कन्या-तुला-वृश्चिक-धनुर्-मकर-कुम्भ-मीन-नामकाः। तेषु द्वादशसु चत्वारि त्रिकाणि भवन्ति। तत्रैकैकस्मिंस्त्रिके क्रमेण चर-स्थिर-द्विस्वभावाख्यौराशयः।

तथाच, चतुर्षु त्रिकेषु मध्ये ये मध्यमा वृषभ-सिंह-वृश्चिक-कुम्भ-नामकाः स्थिरराशयश्चत्वारः, तेषां विष्णुपदमिति* नाम स्मृतिषु प्रसिद्धम्। ये त्वन्तिमा मिथुन-कन्या-धनुर्-मीन-नामका द्विस्वभावाराशयस्ते षड़शीतिमुख-संज्ञकाः। ये पुनः प्रथमे मेष-कर्कट-तुला-मकररूपाश्चत्वारश्चरराशयः, तेषु मेष-तुले विषुव-संज्ञके। कर्कट-मकरावयन-संज्ञकौ। तदेतत् सर्वं वृद्धवशिष्ठः प्राह,—

"अयने द्वे विषुवे द्वे चतस्रः षड़शीतयः।
चतस्रो विष्णुपद्यश्च संक्रान्त्योद्वादश स्मृताः॥
मघ† कर्कट-संक्रान्ती द्वे तूदग्दक्षिणायने।
विषुवे तु तुला-मेषौ गोल-मध्ये ततोऽपराः॥
कन्यायां मिथुने मीने धनुष्यपि रवेर्गतिः।
षड़शीतिमुखाः प्रोक्ताः षड़शीतिगुणाः फलैः॥
वृष-वृश्चिक-सिंहेषु कुम्भे चैव रवेर्गतिः।
एतद्विष्णुपदं नाम विषुवादधिकं फलैः—इति॥

विषुवाभ्यामयनाभ्यां च युक्तं राशि-चतुष्कं‡ गोलइत्यभिधीयते। तत्र, मेषाख्य-विषुवस्य कर्कटाख्यायनस्य च मध्ये विष्णुपद-संज्ञको वृषभः षड़शीति-संज्ञकं मिथुनञ्च तिष्ठति। तथा, कर्कटाख्यायनस्य तुलाख्य-विषुवस्य च मध्ये सिंह-कन्यके। तुला-मकरयोर्मध्ये वृश्चिक-धनुषी। एवमन्यदप्युदाहार्य्यम्। गालवोऽप्याह,—

---

* विष्णुपदी,—इति वि० पुस्तके पाठः।

† मृग,—इत्यन्यत्र पाठः।

‡ राशिचक्रं,—इति वि० पुस्तके पाठः।

"स्थिरभे विष्णुपदं षड़शीतिमुखं द्विततुभे तुला-मेषौ।

विषुवत्तुर्ये दक्षिणमयनं सौम्यं मृगे सूर्य्ये"—इति।

भमक्षवाच्योराशिः। स्थिरराशौ स्थिते सूर्य्ये सति विष्णुपदं भवति। द्विस्वभावराशौ सूर्य्ये स्थिते सति षड़शीतिमुखं भवति। तुला-मेष-द्वये सूर्य्ये स्थिते सति विषुवं भवति। तुर्य्ये कर्कटके दक्षिणायनम्। मृगे मकरे सौम्यं सोमदिङ्नामकमुत्तरायणम्। तैरेतैः संज्ञाभेदैः राशयोव्यवह्रियन्ते। तद्राशि-संबन्धात्तद्राशि-संक्रान्तीनामपि तान्येव नामानि। तासु च संक्रान्तिषु होमस्नानादिकमन्वय-व्यतिरेकाभ्यां शातातपश्चाह,—

"संक्रान्तौ यानि दत्तानि हव्य-कव्यानि दातृभिः।

तानि नित्यं ददात्यर्कः पुनर्जन्मनि जन्मनि॥

रवि-संक्रमणे पुण्ये न स्नायाद्यदि मानवः।

सप्तजन्मसु रोगी स्याद् दुःख-भागीह जायते"—इति॥

स्नानदानादिविध्यङ्गभूते संक्रान्तिकाले मुख्यकल्पस्यासम्भवादनुकल्पएवादर्त्तव्यः। तदाह देवलः,—

"संक्रान्ति-समयः सूक्ष्मोदुर्ज्ञेयः पिशितेक्षणैः।

तद्योगादप्यधश्चोर्ध्वं त्रिंशन्नाड्यः पवित्रिताः"—इति॥

देशाव्यवधानादत्यन्तसंश्लिष्टयोः पूर्वोत्तर-राश्योर्मध्ये सूर्य्यः पूर्वराशिं परित्यज्य यावता कालेनोत्तरराशिं प्रविशति, स लेशोयोग-दृष्टिं विना मांस-दृष्ट्या दुर्लक्ष्यः। अतोऽनुष्ठाने मुख्य-संक्रान्तिकालासम्भवात् संक्रान्ति-संबन्धिनौ पूर्वोत्तरकालौ ग्रहीतव्यौ। संक्रान्तेः पूर्वोत्तरयोः कालयोरेकैकस्मिंस्त्रिंशद्घटिकाः पुण्याः,—इति सामान्येनोक्तम्। तत्र विशेषमाह वृद्धवशिष्ठः,—

"अतीतानागते पुण्ये द्वे उदग्दक्षिणायने।
त्रिंशत्कर्कटके नाड्यो मकरे विंशतिः स्मृता"—इति॥

उदगयनमतीतं सत्पुण्यं भवति, दक्षिणायनमनागतं पुण्यम्। त्रिंशदित्यादिना तदेव स्पष्टीक्रियते। कर्कटाख्याद् दक्षिणायनात् प्राचीनास्त्रिंशद्घटिकाः पुण्याः। मकराख्यादुत्तरायणादूर्ध्वकालीना विंशतिघटिकाः पुण्याः। वृहस्पतिरपि,—

"अयने त्रिंशतिः* पूर्वा मकरे विंशतिः परा।
वर्त्तमाने तुलामेषे नाड्यस्तूभयतोदश"—इति॥

न चात्र त्रिंशद्घटिका-वादिना सामान्यवचनेन विरोधः शङ्कनीयः। सामान्यवचनस्याभ्यनुज्ञा-परत्वात्। विशेषवचनोक्तो घटिका-सङ्कोच एव प्रशस्तः,

"यायाः सन्निहितानाड्यस्तास्ताः पुण्यतमाः स्मृताः"—

इति देवलेनोक्तत्वात्। केनापि निमित्तेन सन्निहित-घटिकास्वनुष्ठानासम्भवे त्रिंशद्घटिकाः परमावधित्वेनाभ्यनुज्ञायन्ते। षडशीतिषु ततोऽपि दीर्घमवधिमाह वृद्धवसिष्ठः,—

"षडशीत्यामतीतायां षष्टिरुक्तास्तु नाडिकाः"—इति।

विष्णुपद्यां प्रशस्तकालं स एवाह,—

"पुण्यायां विष्णुपद्याञ्च प्राक् पश्चादपि षोडश"—इति।

सङ्क्रान्तीनां पूर्वापरौ पुण्यकालौ निर्णीतौ। तास्तु संक्रान्तयः कदाचिदह्नि भवन्ति कदाचिद्रात्रौ भवन्ति। तद्भेदादनुष्ठान-भेदमाह वृद्धवसिष्ठः,—

* विंशतिः,—इति वि॰ पुस्तके पाठः।

"अह्नि संक्रमणे पुण्यमहः कृत्स्नं प्रकीर्त्तितम् ।
रात्रौ संक्रमणे भानोर्द्दिनार्द्धं स्नान-दानयोः ॥
अर्द्धरात्रादधस्तस्मिन् मध्याह्नस्योपरि क्रिया ।
ऊर्द्ध्वं संक्रमणे चोर्द्ध्वमुदयात्प्रहर-द्वयम् ॥
पूर्णे चेदर्धरात्रे तु यदा संक्रमते रविः ॥
प्राक्तद्दिनद्वयं पुण्यं मुक्त्वा मकर-कर्कटौ"—इति ।

अह्नि यदा संक्रान्तिर्भवति, तदा कृत्स्नस्याह्नः पुण्यत्वं, रात्रौ संक्रमणे पूर्वोत्तर-दिनार्ध्वयोः पुण्यत्वं विदधता वचनेनार्थाद्रात्रौ स्नान-दानादिकं प्रतिषिध्यते। एवं सत्युदयानन्तरभाविनि दक्षिणायने पूर्वभागे प्राशस्त्यं बाधित्वोत्तरभागेऽनुष्ठानं भवति। अस्तमय-प्राचीन-क्षण-भाविन्युत्तरायणे चोत्तर-भाग-प्राशस्त्यं परित्यज्य पूर्वभागेऽनुष्ठा-तव्यम्। उत्तर-भाग-प्राशस्त्यन्तु मध्याह्नादि-संक्रमण-विषयम्। तत्राह-न्येव हेयोपादेययोः पूर्वोत्तरभागयोः सम्भवात्। अनेनैव न्यायेन कर्कटेऽपि मध्याह्नभाविनि पूर्वभाग-प्राशस्त्यं भवति। अस्तमय-प्राचीन-भाविषु षड़शीतिमुखेष्वप्युत्तरभाग-प्राशस्त्यं परित्यज्य मकर-न्यायेन पूर्वभाग-प्राशस्त्यं विधातव्यम्। उदयानन्तरभाविषु तेष वचनान्तराविरोधेनोत्तरभागएवानुष्ठान-सम्भवात्तदिहर्द्धं पूर्वभाग-प्रा-शस्त्यं न विधीयते। उभयभागप्राशस्त्योपेतेषु विषुवद्विष्णुपदेषु मध्याह्न-भाविषु पूर्वचोत्तरत्र वा स्वेच्छयाऽनुष्ठातव्यम्। उदयानन्तरभाविषु तेषु पूर्वभाग-प्राशस्त्यं बाध्यते। अस्तमयप्राप्तेषु तेषु उत्तरभाग-प्राशस्त्यं बाध्यते,—इति विवेकः। एतद्वचनानुसारेण यस्य संक्र-मणस्य यस्मिन् भागेऽनुष्ठानं तस्मिन्नेव भागे व्यवस्थिता नाड्यः पुण्याः,

दूयनसन्निहिताः पुण्यतराः, अयनसन्निहिताः पुण्यतमाद्रष्टव्याः ।

यदा रात्रौ भानोः संक्रमणं भवति, तदा तस्यारात्रेः पूर्वस्य चोत्त-रस्य वा दिनस्यार्द्धं प्रहर-द्वयं स्नान-दानयोः पुण्यम् । कुत्र पूर्व-दिनं कुत्र परदिनमिति विवचायां तदुभयम् अर्द्धरात्रादिति वचनेन व्यवस्थाप्यते । रात्रेरर्द्धमर्द्धरात्रः, द्वितीयप्रहरस्य चरमघटिका तृती-यप्रहरस्य प्रथमघटिकेत्येवं घटिकाद्वय-युक्तः कालः । तस्मादर्धरात्रादधः संक्रमणे सति पूर्वदिनमध्याह्नस्योपरितने प्रहरद्वये क्रिया कार्य्या । अर्द्ध-रात्रादूर्ध्वं संक्रमणे सति उत्तरकालीनादुदयादूर्ध्वं प्रहरद्वयं पुण्यम् । पूर्णेऽर्द्धरात्रे घटिकाद्वये संक्रान्तौ पूर्वोत्तरदिनद्वयं कृत्स्नं पुण्यम् । तदुक्तं भविष्योत्तरेऽपि,—

"संक्रमस्तु निशीथे स्यात् चतुर्यामाः* पूर्वपश्चिमाः ।
संक्रान्ति-कालोविज्ञेयस्तत्र स्नानादिकञ्चरेत्"—इति ।

अत्रेयं व्यवस्था । अर्द्धरात्रे यदा षडशीतिः स्यात्, तदानीमेतद्वचना-नुसारेण पूर्वोत्तरदिनद्वयस्य पुण्यत्वाद् यद्यप्यैच्छिकोविकल्पः प्राप्नोति, तथाप्युत्तरदिने षष्टिघटिका-प्रतिपादक-प्रातिस्विक-वचनानुग्रह-लाभा-त्तत्रैवानुष्ठातव्यम् । विषुवयोर्विष्णुपदेषु च प्रातिस्विकवचनं न नियाम-कम्, तस्य वचनस्य पूर्वोत्तरभागयोः सामान्येन प्राशस्त्य-प्रतिपाद-कत्वात् । प्रकृतवचनं पूर्वोत्तरदिने साम्येन विधत्ते । तस्मात् पूर्वस्मि-न्नुत्तरस्मिन्वा स्वेच्छयाऽनुष्ठानमिति विकल्प्यते । अयनयोस्तु प्रका-रान्तरं वक्ष्यते ।

अयनव्यतिरिक्तासु दशसु संक्रान्तिषु मध्यरात्रादूर्ध्वं प्रहत्तासु

* चत्वारः,—इति पाठान्तरम् ।

परेद्युरनुष्ठानमित्यत्र न कोऽपि सन्देहः । अर्द्धरात्रात् पूर्व्वं प्रवृत्तासु तासु दशसु मध्ये षडशीति-व्यतिरिक्तानां षसां पूर्व्वेद्युरनुष्ठानमित्यत्रापि नास्ति सन्देहः । षडशीत्यां तु प्रकृतवचनेन पूर्वेद्युरनुष्ठानं प्राप्तम्, षष्टिघटिका-प्राशस्त्य-प्रतिपादक-प्रातिस्विकवचनेन परेद्युः प्राप्नोति । अतः सन्देहे सति पूर्वेद्युरनुष्ठानमिति निर्णयोद्रष्टव्यः । कुतः ?

"विष्णुपद्यां धनुर्मीननृयुक्कन्यासु* वै यदा ।
पूर्वोत्तरगतं रात्रौ भानोः संक्रमणं भवेत् ॥
पूर्वाह्णे पञ्च नाड्यस्तु पुण्याः प्रोक्तामनीषिभिः ।
अपराह्णे तु पञ्चैव श्रौते स्मार्त्ते च कर्मणि"—इति—

स्मृतेः । यदा रात्रौ पूर्वभाग-गतं विष्णुपदी-षडशीति-संक्रमणं भवेत्, तदा पूर्वेद्युरपराह्णे पञ्च नाड्यः पुण्याः । उत्तरभाग-गते तत्संक्रमणे परेद्युः पूर्वाह्णे पञ्च नाड्यः पुण्याः । न चैवं सति प्रहरद्वय-पुण्यत्व-विरोधः,—इति वाच्यम् । पञ्चनाडिका-वचनेषु पुण्याधिक्यस्य विवक्षितत्वात् । अतः प्रहर-द्वय-वाक्यं पुण्यमात्राभिप्रायम् । एतस्मिन्नेव विषये देवीपुराणे पठ्यते,—

"असम्पूर्णेऽर्द्धरात्रे तु उदयेऽस्तमयेऽपि च ।
मानार्द्धं भास्करे पुण्यमपूर्णे शर्वरीदले ॥
अर्द्धरात्रे त्वसम्पूर्णे दिवा पुण्यमनागतम् ।
सम्पूर्णे उभयोर्ज्ञेयमतिरिक्ते परेऽहनि"—इति ॥

अत्र भास्करशब्देन सूर्ययुक्तं दिनमुपलक्ष्यते । यद्वा, भास्करशब्दो-न सूर्ये रूढ़ः किं तु यौगिकः, भासं करोतीति व्युत्पत्ति-सम्भवात् ।

* मृगः कन्यासु,—इति वि॰ पुस्तके पाठः ।

तथाच, सूर्यइव दिनेऽपि भास्करशब्दोमुख्यः। तस्यापि भावं प्रत्यधि-करणकारकत्वात्। भास्करे दिवसे विद्यमानं* प्रहरचतुष्टयं, तस्यार्द्धं प्रहरद्वयम्। आदित्यास्तमयस्योपरितनआगामिसूर्योदयात्प्राचीनः कालोरात्रिः। उदयोपरि अस्तमयात्प्राचीनः कालोदिनम्। उदयास्त-मयकालौ सन्धिरूपतया प्रोक्ताभ्यां रात्रि-दिवसाभ्यां पृथक्,—इत्येके। रेखामात्रस्यापि सूर्यमण्डलांशस्य दृश्यमानतया दिवसान्तःपातिनौ,—इत्यपरे। सर्वथाऽपि न रात्रौ तयोरन्तर्भावः। सा च रात्रिस्त्रेधा भि-द्यते; मध्यवर्त्तिघटिकाद्वयात्मकएकोभागस्तस्मात्पूर्वोत्तरौ द्वौ भागौ। तत्र, पूर्वभागः, असम्पूर्णेऽर्द्धरात्रे,—इत्यनेन विवक्ष्यते। तस्मिन् यदा संक्रान्तिस्तदानीं सूर्यास्तमये प्रत्यासन्नं यत्पूर्वदिनस्योत्तरार्द्धं तत्पुण्यम्। अपूर्णे शर्वरीदले,—इत्यनेनार्द्धरात्रादनन्तरभावी रात्रिभागोविव-क्षितः। पूर्वोत्तरयोर्निशादलयोरेकैकस्याः घटिकायाअर्द्धरात्रकालार्द्धस्य पृथक्कृतत्वादसम्पूर्त्तिरवगन्तव्या। तस्मिन् घटिकान्यूने परभागे यदा संक्रान्तिस्तदानीं भाविसूर्योदये प्रत्यासन्नं दिनार्द्धं पुण्यम्। अयमे-वार्थोद्वितीयश्लोके प्रपञ्च्यते। घटिकान्यूनत्वेनासम्पूर्णार्द्धरात्रे पूर्वभागे यदा संक्रमणं भवति, तदा यद्यपि दिवा संक्रमणमनागतं, तथापि तस्य दिवसस्य उत्तरार्द्धं पुण्यं, यदा सम्पूर्णेऽर्द्धरात्रे घटिकाद्वयात्मके निशीथे संक्रमणं भवेत्तदानीं पूर्वोत्तरयोर्दिनयोः पुण्यत्वं ज्ञेयम्। अतिरिक्ते परभागे संक्रान्तौ परेऽहनि पूर्वार्द्धं पुण्यम्। देवलोऽपि,—

"आसन्नसंक्रमं पुण्यं दिनार्द्धं स्नानदानयोः।
रात्रौ संक्रमणे भानोर्विषुवत्ययने दिने"—इति॥

* मानं प्रमाणं,—इति वि° पुस्तके पाठः।

अयमर्थः। रात्रौ भानोः संक्रमणे विषुवन्नामके जाते सति संक्रमण-प्रत्यासन्न-दिनार्द्धं पुण्यम्। तत्र, पूर्वरात्र-संक्रमणे पूर्वदिनस्योत्तरार्द्धं पुण्यं, अपररात्र-संक्रमणे परदिनस्य पूर्वार्द्धमित्यवगन्तव्यम्। अयने अयननामके भानोः संक्रमणे दिवा जाते सति यथायोगं तद्दिनार्द्धं पुण्यं द्रष्टव्यम्। कर्कटे पूर्वार्द्धं मकरे उत्तरार्द्धम्। एतच्च मध्यंदिनायन-विषयम्। उदयास्तमय-प्रत्यासन्ने त्वयने पूर्वोत्तरभाग--प्राशस्त्य-बाधया कृत्स्न-दिवस-पुण्यत्व-निर्णयः पूर्वमेवोक्तः। अयन-व्यतिरिक्तेषु दशसु संक्रमणेषु रात्रिगतेषु योनिर्णयस्तं सर्वं पर्युदसितुं तद्वचः-शेषः, "मुक्त्वा मकर-कर्कटौ" इति वर्णितम्।

याया: सन्निहितानाद्यस्तास्ताः पुण्यतमाः,—इत्युक्तेन सामान्य-वचनेन सर्व्वेषु रात्रि-संक्रमणेषु रात्रावेवानुष्ठानं प्रसक्तं, तदपोद्य दशसु संक्रान्तिषु दिवाऽनुष्ठानं विधाय, मकर-कर्कटयोस्तत्पर्युदासे सति पूर्वप्रसक्तं रात्रा-वनुष्ठानमेव पर्य्यवस्यति। एवं सति रात्रौ संक्रान्ति-स्नानमभ्युपगच्छतो-याज्ञवल्क्यवचनस्यापि कश्चिद्विषयः सम्पद्यते। तथाच याज्ञवल्क्यः,—

"राहुदर्शन-संक्रान्ति-विवाहात्यय-वृद्धिषु।
स्नानदानादिकं कार्यं निशि काम्यव्रतेषु च"—इति॥

सुमन्तुरपि,—

"रात्रौ स्नानं न कुर्वीत दानं चैव विशेषतः।
नैमित्तिकञ्च कुर्वीत स्नानं दानञ्च रात्रिषु॥
यज्ञे विवाहे यात्रायां तथा पुस्तक-वाचने।
दानान्येतानि शस्तानि रात्रौ देवालये तथा॥
ग्रहणोद्वाह-संक्रान्ति-यात्रा-ऽऽर्त्ति-प्रसवेषु च।

श्रवणे चेतिहासस्य रात्रौ दानं प्रशस्यते"—इति ॥

ननु, यथोक्तपर्युदासानुग्रहीतैः पुण्यतमत्ववादि-देवल-याज्ञवल्क्य-सुमन्तु-वचनैर्मकर-कर्कटयोर्निश्यनुष्ठान-प्रापणं शास्त्रान्तरेण विरुद्धम्। तथाच भविष्योत्तरे,—

"मिथुनात्कर्क-संक्रान्तिर्यदि स्यादंशुमालिनः।
प्रभाते वा निशीथे वा कुर्यादहनि पूर्वतः॥
कार्मुकन्तु परित्यज्य झषं संक्रमते रविः।
प्रदोषे वाऽर्द्धरात्रे वा स्नानं दानं परेऽहनि"—इति ॥

वृद्धगार्ग्योऽपि,—

"यदाऽस्तमयवेलायां मकरं याति भास्करः॥
प्रदोषे वाऽर्द्धरात्रे वा स्नानं दानं परेऽहनि॥
अर्द्धरात्रे तदूर्ध्वं वा संक्रान्तौ दक्षिणायने।
पूर्वमेव दिनं ग्राह्यं यावन्नोदयते रविः"—इति ॥

नैवम्। भविष्योत्तर-वृद्धगार्ग्य-वचनेषु रात्र्यनुष्ठान-प्रतिषेधस्याप्रतीतेः। दिवसानुष्ठानविधानेनैवार्थात् रात्र्यनुष्ठान-प्रतिषेध-कल्पने च पर्युदासानुग्रहीत-वचनानामानर्थक्यं प्राप्नोति। तस्माच्छास्त्र-द्वयेन विकल्प-प्राप्तौ तत्तद्देश-प्रसिद्ध-शिष्टाचारेण व्यवस्था द्रष्टव्या। यथोक्तानां द्वादश-संक्रान्तीनां यथोक्तेषु पुण्य-कालेषु मन्दादिसंज्ञोपजीवनेन कश्चिद्विशेषःदेवीपुराणे दर्शितः,—

"द्वादशैव समाख्याताः समा-संक्रान्ति-कल्पनाः।
सप्तधा तु प्रबोद्धव्याएकैकैव यथा शृणु॥
मन्दा मन्दाकिनी ध्वांक्षी घोरा चैव महोदरी।

राक्षसी मिश्रिता प्रोक्ता संक्रान्तिः सप्तधा ध्रुवम्* ॥
मन्दा ध्रुवेषु विज्ञेया मृदौ मन्दाकिनी तथा।
क्षिप्रे ध्वाङ्क्षीं विजानीयादुग्रे घोरा प्रकीर्त्तिता ॥
चरे महोदरी ज्ञेया क्रूरर्क्षैस्तु राक्षसी।
मिश्रिता चैव विज्ञेया मिश्रऋक्षैस्तु संक्रमे ॥
द्वि-चतुः-पञ्च-सप्ताष्ट-नव-द्वादशएवच।
क्रमेण घटिकाश्चैतास्तत्पुण्यं पारमार्थिकम्"—इति ॥

अत्र समा-शब्दः संवत्सरवाची। समा-संबन्धिन्यः संक्रान्ति-कल्पनाः मेषादीनां द्वादशैव समाख्याताः। तासु द्वादश-संक्रान्तिष्वेकैकां मन्दा-दिभिर्नामभिर्व्यवहार्य्या। तानि च नामानि नक्षत्र-विशेषोपजीवनेन प्रवृत्तानि। तद्यथा। ध्रुवेषु नक्षत्रेषु प्रारब्धा संक्रान्तिर्मन्दा। एवं मृदु-क्षिप्रादिनक्षत्रेषु प्रारब्धा संक्रान्तिः क्रमेण मन्दाकिनी-ध्वांक्ष्यादि-नामभाग्भवति। रोहिण्युत्तरात्रयं चेति चत्वार्य्येतानि नक्षत्राणि ध्रुवाणि। रेवती-चित्रा-ऽनुराधा-मृगशीर्षाणि चत्वारि मृदूनि। हस्ताश्विनी-पुष्याभिजिन्नक्षत्राणि चत्वारि क्षिप्राणि। भरणी पूर्वा-त्रयं मघा चेत्येतानि पञ्चोग्राणि। श्रवण-पुनर्वसु-शतभिषक्-धनिष्ठा-स्वात्याख्यानि पञ्च चराणि। अश्लेषा-मूलार्द्रा-ज्येष्ठानि चत्वारि क्रूराणि। कृत्तिका-विशाखा-ऽश्विन्याख्यानि मिश्राणि। सेयं सप्तधा नक्षत्र-व्यवस्था ज्योतिर्ग्रन्थे मुहूर्त्तविधानसारे पठिता,—

"क्षिप्रञ्च स्थिरमुग्रञ्च दारुणं चरमेवच।
मृदु साधारणं चत्वं सप्त भेदाः प्रकीर्त्तिताः ॥

* वेदवादिभिः,—इति वि॰ पुस्तके पाठः।

करास्विनी वाक्पतिभं तथाऽभिजि-
ल्लघूनि पुण्ये गमने विभूषणे ।
हिरण्यगर्भाधिपमुत्तरात्रयं
ध्रुवाख्यमेतद्धि तथाऽनुनामतः* ॥
युतम्भरण्या सह पूर्विका-त्रयं
मघा तथोग्राख्यमिदं भ-पञ्चकम् ।
भुजङ्गमं नैर्ऋतमैन्द्रमार्द्रा-
भवन्ति तीक्ष्णानि हि तानि सर्वदा ॥
चराणि पञ्च श्रवणं पुनर्वसु
जलेशभं वासवमानिलं तथा ।
मृदूनि पौष्णं सुरवर्द्धकीश्वरं
तथाऽनुराधाऽमृतरश्मि-दैवतम् ॥
कृताशमर्च्चेण सह द्विदैव-
मुशन्ति साधारण-संज्ञमस्मिन्"—इति ॥

यथोक्तनक्षत्रविशेषोपजीवनेन प्रवृत्तैर्मन्दादिभिः सप्त-नामभिर्युत-मेषादिसंक्रान्तौ क्रमेण द्विचतुरित्यादि-सप्तविध-सङ्ख्यानाड्यः पुण्याः,—इति यदुक्तं, तत्र नास्ति सन्देहः,—इत्यस्मिन्नर्थे पारमार्थिक-शब्दः प्रयुक्तः। मन्दायां प्रत्यासन्नं घटिकाद्वयं पुण्यं, मन्दाकिन्यां घटिका-चतुष्टयम्, ध्वाङ्क्षे पञ्चकम्, घोरायां सप्तकम्, महोदर्यामष्टकम्, राक्षस्यां नवकम्, मिश्रितायां द्वादशकम् । मेषसंक्रान्तावुदाहृतः सोऽयं

* नवामुनामृतम्,—इति मु० पुस्तके पाठः।

प्रकारोऽतृषभादिष्वेकादशसु संक्रान्तिष्वनुसन्धेयः। देवीपुराणोदाहरणात् प्राचीनग्रन्थे तत्तत्-संक्रान्तिषु यः पुण्यः कालोनिर्णीतस्तस्मिन्काले देवीपुराणोक्तोद्विचतुरित्यादिकः पुण्यातिशय-प्रतिपादकोविशेषोद्रष्टव्यः। निर्णीतेषु संक्रान्त्यादीनां पुण्यकालेषु यत्कर्त्तव्यं स्नानदानादिकं, तत् सर्वमेव शातातप-वचन-द्वयेनोदाहृतम्। ब्रह्मपुराणेऽपि,—

"नित्यं द्वयोरयनयोस्तथा विषुवतोर्द्वयोः।
चन्द्रार्कयोर्ग्रहणयोर्व्यतीपातेषु पर्वसु॥
अहोरात्रोषितः स्नानमर्घ्यं दानं तथा जपम्।
यः करोति प्रसन्नात्मा तस्य स्यादक्षयञ्च तत्॥
अयने विषुवे चैव चन्द्र-सूर्य-ग्रहे तथा।
कृतोपवासः सुस्नातः सर्वपापैः प्रमुच्यते"—इति॥

वसिष्ठोऽपि,—

"उपोष्यैव तु संक्रान्तौ स्नातोयोऽभ्यर्चयेत् रविम्।
प्रातः पञ्चोपचारेण स काम्यं फलमश्नुते॥
अयने विषुवे चैव चन्द्र-सूर्य-ग्रहे तथा।
त्रिरात्रोपोषित-नरः सर्वपापैः प्रमुच्यते॥
स्नात्वा यः पूजयेदीशं सर्वान् कामान्समश्नुते।
सप्तोपोष्य रवेर्वारानादौ स्नात्वा तु संक्रमे॥
अर्कमभ्यर्चयेद्यस्तु सोऽदुःखी सुखमश्नुते"—इति॥

शातातपः,—

"अयनादौ सदा देयं द्रव्यं नित्यं गृहे च यत्।
षडशीतिमुखे चैव मोक्षे वै चन्द्र-सूर्य्ययोः"—इति॥

उक्तस्य स्नानदानादि-कर्त्तव्यस्य संक्रान्ति-विशेषमुपजीव्य काल-वि-शेषमाह शातातपः,—

"कुर्यात् सदाऽयने मध्ये विष्णुपद्यां विषुवति ।
षड़शीत्यामन्तभागे स्नानादि-विधिमादृतः"—इति ॥

गालवोऽपि,—

"मध्ये विषुवति दानं विष्णुपदे दक्षिणायने चादौ ।
षड़शीतिमुखेऽतीते तथोदगयने च भूरिफलम्"—इति ॥

अयनादिषु यत्र यावान्पुण्यः कालः पूर्वं निर्णीतस्तत्र तावन्तं कालं त्रेधा विभज्य मध्ये विषुवतीत्याद्यवगन्तव्यम् । तस्मिन्नपि मध्यादिभागे सन्निहितानां नाड़ीनां पूर्वोदाहृत-वचनेन पुण्यतमत्वं द्रष्टव्यम् । संक्रान्तिषु फलमाह भरद्वाजः,—

"षड़शीत्यां तु यद्दानं यद्दानं विषुव-द्वये ।
दृश्यते सागरस्यान्तस्तस्यान्तोनैव दृश्यते"—इति ॥

वृद्धवसिष्ठः,—

"अयने कोटिपुण्यं च सहस्रं विषुवे फलम् ।
षड़शीत्यां सहस्रं तु फलं विष्णुपदेषु च"—इति ॥

मेषादि-संक्रान्तयो यस्मिन्दिने भवन्ति तस्माद्दिनात्पूर्वेभ्य एकादश-दिनेभ्यः प्राचीने दिने मेषायनं वृषायनमित्येवं तत्तन्नामाङ्कितमयनं भवति । तस्मिन्नयने स्नानादिषु पुण्यकालमाह जाबालिः,—

"संक्रान्तिषु यथाकालस्तदीयेऽप्ययने तथा ।
अयने विंशतिः पूर्वा मकरे विंशतिः परा"—इति ॥

मकर-व्यतिरिक्तैकादश-संक्रान्ति-संबन्धिषु अयनेषु तत्तत्-संक्रान्ति-

वत् पुण्यकालोऽवगन्तव्यः। मकरसंक्रान्ति-संबन्धिनि त्वयने संक्रान्ति-वैलक्षण्यम्। तद्यथा। मकरायने प्राचीनाविंशतिघटिकाः पुण्याः, मकर-संक्रान्तौ तु पाश्चात्याविंशतिघटिकाः पुण्याः। न केवलमादित्यस्यैव संक्रमायने पुण्यकालः, किं तु सर्वेषामपि ग्रहाणां नक्षत्र-राशि-सङ्क्रमे पुण्यकालोभवति। तदुक्तं ज्योतिः शास्त्रे,—

"नक्षत्र-राश्योरवि-संक्रमे स्यु-
रर्वाक् परस्ताद्दश-षड्-नाड्यः।
पुण्यास्तथेन्दोस्त्रिधरापलैर्यु-
गेकैव नाडी मुनिभिः शुभोक्ता।
नाड्यश्चतस्रः सपलाः कुजस्य
बुधस्य तिस्रः पल-विंश-युक्ताः॥
*सार्द्धाश्चतस्रोघटिकाः पलानि
गुरोस्तु सप्तैव भृगोश्चतस्रः।
नाड्यः पलैकं, घटिका द्व्यशीतिः
पलानि सप्तैव शनैश्चरस्य* ॥
आद्यन्त-मध्ये जप-होम-दानं
कुर्वन्नवाप्नोति सुरेन्द्रधाम"—इति॥

अयमर्थः। आदित्यस्य राशि-नक्षत्र-गमने अर्वाक् परतश्च षोडश-घटिकाः पुण्यकालः। तथा, चन्द्रस्यापि घटिकैका प्रपलानि चयादशा-

* अष्टार्द्धनाड्यः पलसप्तयुक्ता गुरोश्चतस्रः सपलाश्च शुक्रे।
द्विनागनाड्यः पलसप्तयुक्ताः शनैश्चरस्याभिहिताश्च पुण्याः,—इति
वि० पुस्तके पाठः।

र्वाक् परतश्च पुण्यकालः। एवं, मङ्गलस्य घटिकाश्चतस्रः पलमेकञ्च पुण्यकालः। तथा, बुधस्य तिस्रोघटिकाश्चतुर्दश पलानि पुण्यकालः। बृहस्पतेरपि सार्द्धचतस्रोघटिकाः सप्त पलानि पुण्यकालः। शुक्रस्य चतस्रोघटिकाः पलमेकञ्च पुण्यकालः। शनैश्चरस्य द्व्यशीतिघटिकाः पलानि सप्त पुण्यकालः। स्कान्दे नागरखण्डे,—

"एकान्ते ते मया प्रोक्ताः कालाः संक्रान्तिपूर्वकाः।
नैतेषु विद्यते विघ्नो* यतश्चाघय-संज्ञिताः॥
अश्रद्धयाऽपि यद्दत्तं कुपात्रेभ्योऽपि मानवैः।
अकालेऽपि हि तत् सर्वं सत्यमक्षयतां व्रजेत्"—इति॥

इति संक्रान्ति-निर्णयः।

---

## अथ ग्रहणं निर्णीयते।

तत्र वृद्धगार्ग्यः,—

"पूर्णिमा-प्रतिपत्-सन्धौ राहुः सम्पूर्ण-मण्डलम्।
ग्रसते चन्द्रमर्कञ्च दर्शप्रतिपदन्तरे"—इति॥

तत्र पर्वणोऽन्तभागः स्पर्श-कालः प्रतिपदश्चाद्योभागोमोक्ष-कालः। तदुक्तं ब्रह्मसिद्धान्ते,—

"यावान् कालः पर्वणोऽन्ते तावान् प्रतिपदादिमः।
रवीन्दुग्रहणानेहा स पुण्योमिश्रणाद्भवेत्"—इति॥

ग्रहणानेहा राहु-ग्रहण-कालः। तत्र कर्त्तव्यमाह वृद्धवसिष्ठः,—

---

* विद्यतेऽनिष्टं,—इति वि॰ पुस्तके पाठः।

"गङ्गातोये* तु सम्प्राप्ते इन्दोः कोटीरवेर्दश ।
गवां कोटि-प्रदानेन सम्यग्दत्तेन यत्फलम् ॥
गङ्गास्नाने तत्फलं स्याद्राहु-ग्रस्ते निशाकरे ।
दिवाकरे पुनस्तच्च दशसङ्ख्यमुदाहृतम्"—इति ॥

अस्य श्लोकद्वयस्य प्रथमार्द्धमपेक्षित-पदाध्याहारेण योजनीयम् । तद्यथा । इन्दोर्ग्रहणे सम्प्राप्ते सति गङ्गातोयेऽवगाहनं कोटिगोदान-समं भवति, रवेर्ग्रहणे ततोदशगुणं फलम् । अयमेवार्थउपरितनेनार्द्धं-त्रयेण स्पष्टीकृतः । व्यासोऽपि,—

"इन्दोर्लक्षगुणं पुण्यं रवेर्दशगुणं ततः ।
गङ्गातोये तु सम्प्राप्ते इन्दोः कोटीवरेर्दश ॥
गवां कोटि-प्रदानस्य† यत्फलं लभते नरः ।
तत्फलं जाह्नवी-स्नाने राहु-ग्रस्ते निशाकरे ॥
दिवाकरे तु स्नातस्य दशसङ्ख्यमुदाहृतम् ।
चन्द्र-सूर्य्य-ग्रहे चैव योऽवगाहेत जाह्नवीम् ॥
स स्नातः सर्वतीर्थेषु किमर्थमटते महीम्"—इति ॥

गङ्गा-व्यतिरिक्त-महानदी-तोये लक्षगुण-दशलक्षगुणत्वम् । गङ्गातोये तु कोटिगुण-दशकोटिगुणत्वम् । ब्रह्मपुराणेऽपि,—

"तिस्रोमत्योमहापुण्याः वेणी गोदा च जाह्नवी ।
गां हरीशदि्वकात्प्राप्ता गङ्गा इतिह‡ कीर्त्तिताः"—इति ॥

* गङ्गातीरे,—इति वि० पुस्तके पाठः ।
† कोटिसहस्रस्य,—इति मु० पुस्तके पाठः ।
‡ गङ्गाइतीह,—इति मु० पुस्तके पाठः ।

हरिरीश्वरश्च हरीशौ। अङ्घ्रिः पादः, कं शिरः। अङ्घ्रिश्च कञ्च अङ्घ्रिकम्। हरीशयोरङ्घ्रिकम्, तस्मात्; हरेः पादादीश्वरस्य शिरसश्च गां भूमिम्प्राप्ता गङ्गा। यद्यपि जाह्नव्येव तादृशी, न तु वेणी-गोदे, तथापि छत्रिणोगच्छन्तीति न्यायेन जाह्नव्या सह निर्दिष्टयोस्तयोरपि गङ्गात्वमविरुद्धम्। यद्वा, जाह्नवी-जलमेव केनचिन्निमित्तेन ब्रह्म-गिरि-वायुगिर्य्योरुद्गतमिति कृत्वा तयोरपि मुख्यमेव गङ्गात्वम्। तासु गङ्गासु स्नानं मुख्यम्। तदसम्भवे नद्यन्तरेषु स्नायात्। तदुक्तं महाभारते,—

"गङ्गास्नानं प्रकुर्वीत ग्रहणे चन्द्र-सूर्य्ययोः।
महानदीषु वाऽन्यासु स्नानं कुर्याद्यथाविधि"—इति॥

महानद्योब्रह्मपुराणे दर्शिताः,—

"गोदावरी भीमरथी तुङ्गभद्रा च वेणिका।
तापी पयोष्णी विन्ध्यस्य दक्षिणे तु प्रकीर्त्तिताः॥
भागीरथी नर्मदा च यमुना च सरस्वती।
विशोका च वितस्ता च विन्ध्यस्योत्तरतस्तथा"—इति॥

महानद्यसम्भवे जलान्तराण्याह शङ्खः,—

"वापी-कूप-तड़ागेषु गिरि-प्रस्रवणेषु च।
नद्यां नदे देव-खाते सरसीषूद्धृताम्बुनि॥
उष्णोदकेन वा स्नायाद्ग्रहणे चन्द्र-सूर्य्ययोः"—इति॥

एतत्सर्वमभिप्रेत्याह व्यासः,—

"सर्वं गङ्गा-समं तोयं सर्वे व्यास-समाद्विजाः*।

* सर्व्वोब्रह्मसमोद्विजः,—इति वि॰ पुस्तके पाठः।

सर्वं भूमि-समं दानं ग्रहणे चन्द्र-सूर्य्ययोः"—इति ॥

उष्णोदकस्यातुर-विषयत्वं व्याघ्रआह,—

"आदित्य-किरणैः पूतं पुनः पूतञ्च वह्निना ।

अतोव्याध्यातुरः स्नायाद् ग्रहणेऽप्युष्णवारिणा"—इति ॥

गङ्गा-तोयमारभ्योष्णोदकान्तेषु उत्तरोत्तरस्यानुकल्पत्वमुक्तम् । एतदेवाभिप्रेत्योष्णोदकादिषु समुद्र-जलान्तेषु उत्तरोत्तरस्य प्राशस्त्य-माह मार्कण्डेयः,—

"शीतमुष्णोदकात्पुण्यमपारक्यं परोदकात् ।

भूमिष्ठमुद्धृतात्पुण्यं ततः प्रस्रवणोदकम् ॥

ततोऽपि सारसं पुण्यं ततः पुण्यं नदी-जलम् ।

तीर्थ-तोयं ततः पुण्यं महानद्यम्बु पावनम् ॥

ततस्ततोऽपि गङ्गाम्बु पुण्यं पुण्यस्ततोऽम्बुधिः"—इति ॥

मास-विशेषेण नदी-विशेषोदेवीपुराणेऽभिहितः,—

"कार्त्तिके ग्रहणं श्रेष्ठं गङ्गा-यमुन-सङ्गमे ।

मार्गे तु ग्रहणं प्रोक्तं देविकायां महामुने ॥

पौषे तु नर्मदा पुण्या माघे सन्निहिताशुभा* ।

फाल्गुने वरणापुण्या चैत्रे पुण्या सरस्वती ॥

वैशाखे तु महापुण्या चन्द्रभागा सरिद्वरा ।

ज्यैष्ठे तु कौशिकी पुण्या आषाढ़े तापिका नदी ॥

श्रावणे सिन्धुनामा तु तथा भाद्रे तु गण्डकी† ।

---

* सन्निहिताश्रुता,—इति मु॰ पुस्तके पाठः ।

† चन्द्रिका,—इति वि॰ पुस्तके पाठः ।

आश्विने सरयूः श्रेष्ठा तथा पुण्या तु नर्मदा"—इति ॥

ग्रहण-विशेषे नदी-विशेषस्तत्रैवाभिहितः,—

"गोदावरी महापुण्या चन्द्रे राहु-समन्विते ।

सूर्य्ये च राहुणा ग्रस्ते तमोभूते महामुने ॥

नर्मदा-तोय-संस्पर्शे कृतकृत्याभवन्ति हि"—इति ॥

स्नानवत्स्मरणादिष्वपि पुण्यमाह,—

"स्मृत्वा शतक्रतुफलं दृष्ट्वाऽग्निष्टोमजं फलम्* ।

स्पृष्ट्वा गोमेध-पुण्यं तु पीत्वा सौत्रामणेर्लभेत्† ॥

स्नात्वा वाजिमखं पुण्यं प्राप्नुयादविचारतः ।

रवि-चन्द्रोपरागे च अयने चोत्तरे तथा"—इति ॥

क्षेत्र-विशेषमाह,—

"गङ्गा कनखलं पुण्यं प्रयागः पुष्करं तथा ।

कुरुक्षेत्रं महापुण्यं राहुग्रस्ते दिवाकरे"—इति ॥

ग्रहणे श्राद्धं विहितं लिङ्गपुराणे,—

"व्यतीपात-क्षणोयावान् चन्द्र-सूर्य्य-ग्रह-क्षणः ।

गजच्छाया तु सा प्रोक्ता पितॄणां दत्तमक्षयम्"—इति ॥

महाभारतेऽपि,—

"सर्वस्वेनापि कर्त्तव्यं श्राद्धं वै राहु-दर्शने ।

अकुर्वाणस्तु नास्तिक्यात् पङ्के गौरिव सीदति"—इति ॥

व्यासशृङ्गेऽपि,—

† सर्व्वाधनाशनम्,—इति मु॰ पुस्तके पाठः ।

‡ सौत्रामणीं लभेत्,—इति वि॰ पुस्तके पाठः ।

"चन्द्र-सूर्य्य-ग्रहे यस्तु श्राद्धं विधिवदाचरेत् ।
तेनैव सकला पृथ्वी दत्ता विप्रस्य वै करे"—इति ॥

विष्णुरपि,—

"राहु-दर्शन-दत्तं हि श्राद्धमाचन्द्र-तारकम् ।
गुणवत्सर्वकामीयं पितृणामुपतिष्ठते"—इति ॥

ग्रहणे रात्रावपि स्नानादेर्न निषेधः । तथा च शातातपः,—

"स्नानं दानं तपः श्राद्धमनन्तं राहु-दर्शने ।
आसुरी रात्रिरन्यत्र तस्मात्तां परिवर्जयेत्"—इति ॥

देवलः,—

"यथा स्नानञ्च दानञ्च सूर्य्यस्य ग्रहणे दिवा ।
सोमस्यापि तथा रात्रौ स्नानं दानं विधीयते"—इति ॥

श्राद्धं प्रकृत्य कूर्मपुराणे,—

"नैमित्तिकन्तु कर्त्तव्यं ग्रहणे चन्द्र-सूर्य्ययोः ।
बान्धवानाञ्च मरणे नारकी स्यादतोऽन्यथा ॥
काम्यानि चैव श्राद्धानि शस्यन्ते ग्रहणादिषु"—इति

वार-विशेष-योगे फलातिशयमाह व्यासः,—

"रवि-ग्रहः सूर्य्यवारे सोमे सोम-ग्रहस्तथा ।
चूड़ामणिरिति ख्यातस्तदाऽनन्त-फलं भवेत्* ॥
वारेष्वन्येषु यत्पुण्यं ग्रहणे चन्द्र-सूर्य्ययोः ।
तत्पुण्यं कोटिगुणितं ग्राम चूड़ामणौ स्मृतम्"—इति ॥

अतिथिप्राप्त्यादिवद्ग्रहणस्यापि श्राद्धकालत्वमाह मार्कण्डेयः,—

---

* तत्र दत्तमनन्तकम्—इति वि० पुस्तके पाठः ।

"विशिष्ट-ब्राह्मणे प्राप्ते सूर्य्येन्दु-ग्रहणे दिने ।
असर्त्त-ग्रह-पीड़ासु श्राद्धं कुर्यात्तथोत्क्षये"—इति ॥

अत्र श्राद्धं नान्नेन, किं तु हेमादिना । तदाह बौधायनः,—

"अन्नाभावे द्विजाभावे प्रवासे पुत्र-जन्मनि ।
हेम-श्राद्धं सग्रहे च कुर्याच्छूद्रः सदैव हि"—इति ॥

तथा,—

"दर्शे रविग्रहे पित्रोः प्रत्याब्दिकउपस्थिते ।
अन्नेनासम्भवे कुर्याद्धेम्ना वाऽऽमेन वा पुनः"—इति* ॥

शातातपोऽपि,—

"आपद्यनग्नौ तीर्थे च चन्द्र-सूर्य्य-ग्रहे तथा ।
आमश्राद्धं द्विजोदद्याच्छूद्रोदद्यात्सदैव हि†"—इति ॥

आशौचिनोऽपि ग्रहणे स्नानादि न निषिद्धम् । तथा च वृद्धवशिष्ठः,—

"सूतके मृतके चैव न दोषोराहु-दर्शने ।
तावदेव भवेच्छुद्धिर्यावन्मुक्तिर्न दृश्यते"—इति ॥

इयं च शुद्धिः सर्व-स्मार्त्त-कर्म-विषया, अविशेषोक्तेः । एतदेवाभिप्रेत्य व्याघ्रपदाह,—

"स्मार्त्तकर्म-परित्यागोराहोरन्यत्र सूतके ।
श्रौते कर्मणि तत्कालं स्नातः शुद्धिमवाप्नुयात्"—इति ॥

यत्तु ग्रहण-निमित्तमाशौचं, तत्स्नानेन निवर्त्त्यम् । तदुक्तं ब्रह्माण्ड-पुराणे,—

* तथा इत्यादिः,—'इति'—इत्यन्तोयन्थोनास्ति मु० पुस्तके ।
† आमश्राद्धं प्रकुर्व्वीत हेमश्राद्धमथापि वा,—इति वि० पुस्तके पाठः ।

"आशौचं जायते नृणां ग्रहणे चन्द्र-सूर्य्ययोः।
राहु-स्पर्शे तयोः स्नात्वा स्नानादौ कल्पते नरः"—इति॥

षट्त्रिंशन्मतेऽपि,—

"सर्व्वेषामेव वर्णानां सूतकं राहुदर्शने।
स्नात्वा कर्म्माणि कुर्वीत शृतमन्नं विवर्जयेत्"—इति॥

ग्रहणस्याद्यन्तयोः स्नानं विहितं स्मृत्यन्तरे,—

"ग्रस्यमाने भवेत्स्नानं ग्रस्ते होमोविधीयते।
मुच्यमाने भवेद्दानं मुक्ते स्नानं विधीयते"—इति॥

होमदानवद्देवार्चनमपि स्नान-द्वय-मध्ये कार्य्यम्। तदुक्तं ब्रह्मवैवर्त्ते,—

"स्नानं स्यादुपरागादौ मध्ये होमः सुरार्चनम्"—इति॥

तत्काले स्वापादिकं न कुर्यात्। तदुक्तं शिवरहस्ये,—

"सूर्य्येन्दु-ग्रहणं यावत् तावत्कुर्याज्जपादिकम्।
न स्वपेन्न च भुञ्जीत स्नात्वा भुञ्जीत मुक्तयोः"—इति॥

मोक्षानन्तरभावि यत्स्नानं तस्य शुद्ध्यर्थतया तत्सचेलं विधेयम्। तदाह वृद्धवशिष्ठः,—

"सर्व्वेषामेव वर्णानां सूतकं राहुदर्शने।
सचेलन्तु भवेत् स्नानं सूतकान्नञ्च वर्जयेत्"—इति॥

ग्रहणकाले ततः पूर्वं वा यावत् पक्वं तत्सूतकान्नं, तच्च पश्चादपि न भुञ्जीत। आदिमध्यावसानेषु यद्यद्विहितं, तस्य फलातिशयमुक्तं ब्रह्म-पुराणे,—

"उपमर्दे लक्षगुणं ग्रहणे चन्द्र-सूर्य्ययोः।
पुण्यं कोटिगुणं मध्ये मुक्तिकाले त्वनन्तकम्"—इति॥

अत्र ग्रहणे यद्दानं तत्सत्पात्रे कर्त्तव्यम् । तदुक्तं महाभारते,—

"अयने विषुवे चैव ग्रहणे चन्द्र-सूर्य्ययोः ।

पात्रभूताय विप्राय भूमिं दद्यात्सदक्षिणाम्"—इति ॥

पात्रलक्षणमाह याज्ञवल्क्यः,—

"न विद्यया केवलया तपसा वाऽपि पात्रता ।

यत्र वृत्तमिमे चोभे तद्धि पात्रं प्रकीर्त्तितम्[१]"—इति ॥

पात्रे मुख्यानुकल्पावाह बौधायनः*,—

"श्रोत्रियोऽश्रोत्रियोवाऽपि पात्रं वाऽपात्रमेववा ।

विप्रब्रुवोऽपिवा[२] विप्रोग्रहणे दानमर्हति"—इति ॥

अत्र भूमिवस्त्रादीन्यपि देयानि । तदुक्तं महाभारते,—

"भूमिर्गावः सुवर्णं वा धान्यं वा यद्यदीप्सितम् ।

तत्सर्वं ग्रहणे देयमात्मनः श्रेयइच्छता"—इति ॥

प्रतिग्रहीतृ-भेदेन फल-तारतम्यं दक्षेणोक्तम्,—

"सममब्राह्मणे दानं द्विगुणं ब्राह्मणब्रुवे ।

श्रोत्रिये शतसाहस्रं पात्रे त्वानन्त्यमश्नुते"—इति ॥

* कात्यायनः,—इति वि० पुस्तके पाठः ।

(१) वृत्तं, "गुरुपूजा घृणा सत्यं शौचमिन्द्रियनिग्रहः । प्रवर्त्तनं हितानाञ्च तत्सर्व्वं वृत्तमुच्यते"—इत्युक्तलक्षणम् ।

(२) विप्रब्रुवोब्राह्मणब्रुवः । स च ब्राह्मणमात्मानं ब्रवीति न तु ब्राह्मणवृत्तः । तदुक्तम् । "धर्म्मकर्म्मविहीनस्य ब्राह्मैर्लिङ्गैर्व्विवर्जितः । ब्रवीति ब्राह्मणस्त्वाहं स ज्ञेयो ब्राह्मणब्रुवः"—इति । "गर्भाधानादिसंस्कारैर्युक्तश्च नियतव्रतः । नाध्यापयति नाधीते सज्ञेयोब्राह्मणब्रुवः"—इत्युक्तलक्षणो वा ।

अह्नि सूर्य्यग्रहणं रात्रौ चन्द्रग्रहणमिति हि प्रसिद्धिः सार्वजनीना, तादृशे ग्रहणे यत्कर्त्तव्यं तदुक्तम् । यत्तु काल-विपर्य्यासेन प्राप्यमाणं ज्योतिःशास्त्रमात्र-प्रसिद्धं ग्रहणं, तत्र स्नानादिकं न कर्त्तव्यम् । तदुक्तं निगमे,—

"सूर्य्य-ग्रहो यदा रात्रौ दिवा चन्द्रग्रहस्तथा ।
तत्र स्नानं न कुर्वीत दद्याद्दानञ्च न क्वचित्"—इति ॥

ग्रस्तास्तमये जाबालिराह,—

"संक्रान्तौ पुण्यकालस्तु षोडशोभयतः कलाः ।
चन्द्रसूर्य्योपरागे च यावद्दर्शन-गोचरः"—इति ॥

ग्रस्तस्यास्तमनपर्य्यन्तं दर्शन-गोचरत्वात्तावान् पुण्यकालोभवति । ग्रहणे भोजन-व्यवस्थामाह मनुः,—

"चन्द्र-सूर्य्य-ग्रहे नाद्यादद्यात्स्नात्वा विमुक्तयोः ।
अमुक्तयोरस्तगयोर्दृष्ट्वा स्नात्वा परेऽहनि"—इति ॥

ग्रहे ग्रहणकाले । स्पर्शमारभ्य मोक्षपर्य्यन्तोग्रहणकालः । तस्मिन्काले न भुञ्जीत, किं तु राहुणा चन्द्रसूर्य्ययोर्मुक्तयोः सतोः पश्चात्स्नात्वा भुञ्जीत । यदा तु ग्रस्तास्तमयस्तदा परेद्युर्विमुक्तौ तौ दृष्ट्वा भुञ्जीत । न केवलं ग्रहणकाले भोजनाभावः, किं तु ग्रहणात्प्रागपि । तदाह व्यासः,—

"नाद्यात्सूर्य्य-ग्रहात्पूर्वमह्नि सायं शशि-ग्रहात् ।
ग्रहकाले च नाश्नीयात्स्नात्वाऽश्नीयाद्विमुक्तयोः ॥
मुक्ते शशिनि भुञ्जीत यदि न स्यान्महानिशा ।
अमुक्तयोरस्तगयोरद्याद् दृष्ट्वा परेऽहनि"—इति ॥

पूर्वकाल-भोजन-निषेधे विशेषमाह वृद्धवसिष्ठः,—

"ग्रहणन्तु भवेदिन्दोः प्रथमादधि यामतः।
भुञ्जीतावर्त्तनात्पूर्वं पश्चिमे प्रथमादधः।
रवेस्त्वावर्तनादूर्ध्वं अर्वागेव निशीथतः॥
चतुर्थे प्रहरे चेत्स्याच्चतुर्थप्रहरादधः"—इति॥

रात्रौ प्रथमयामादूर्ध्वं चन्द्र-ग्रहणञ्चेत्, आवर्त्तनान्मध्याह्नात्पूर्वं भुञ्जीत; रात्रि-पश्चिमयामे च रात्रि-प्रथम-यामादर्वाग्भुञ्जीत। अह्न-स्तृतीयप्रहरे चेद्रविग्रहस्तदा पूर्वदिनस्यार्द्धरात्रात्प्राग्भुञ्जीत। अह्नश्च-तुर्थप्रहरे रवि-ग्रहणञ्चेद्रात्रेश्चतुर्थप्रहरादधोभुञ्जीतेत्यर्थः। निशीथो-मध्यरात्रः। शशि-ग्रहणे याम-त्रयेण व्यवधानमपेक्षितम्, सूर्य्य-ग्रहणे-याम-चतुष्टयेनेति तात्पर्यार्थः। तथा च वृद्धगौतमः,—

"सूर्य्य-ग्रहे तु नाश्नीयात्पूर्वं याम-चतुष्टयम्।
चन्द्र-ग्रहे तु यामांस्त्रीन्बालवृद्धातुरैर्विना"—इति॥

बालवृद्धातुर-विषये मत्स्यः,—

"सायाह्ने ग्रहणं चेत्स्यादपराह्णे न भोजनम्।
अपराह्णे न मध्याह्ने मध्याह्ने न तु सङ्गवे।
भुञ्जीत सङ्गवे चेत्स्यान्न पूर्वं भुजिमाचरेत्"—इति॥

समर्थस्य तु भोजने प्रायश्चित्तमुक्तं कात्यायनेन,—

"चन्द्र-सूर्य्यग्रहे भुक्त्वा प्राजापत्येन शुद्ध्यति।
तस्मिन्नेव दिने भुक्त्वा त्रिरात्रेणैव शुद्ध्यति"—इति॥

शशि-ग्रहे याम-त्रयस्यापवादमाह वृद्धवसिष्ठः,—

"ग्रस्तोदये विधोः पूर्वं नाहर्भोजनमाचरेत्"—इति॥

ग्रस्तास्तमये विशेषमाह भृगुः,—

"ग्रस्तावेवास्तमागन्तु रवीन्दू प्राप्नुतोयदि।

परेद्युरुदये स्नात्वा शुद्धोऽभ्यवहरेन्नरः*"—इति॥

वृद्धगार्ग्योऽपि,—

"सन्ध्याकाले यदा राहुर्ग्रसते शशि-भास्करौ।

तदहर्नैव भुञ्जीत रात्रावपि कदाचन"—इति॥

विष्णुधर्मोत्तरेऽपि,—

"अहोरात्रं न भोक्तव्यं चन्द्र-सूर्य्य-ग्रहोयदा।

मुक्तिं दृष्ट्वा तु भोक्तव्यं स्नानं कृत्वा ततः परम्"—इति॥

ननु, मेघाद्यन्तर्द्धाने चाक्षुषं दर्शनं न सम्भवतीति चेत्। न, दर्शन-शब्देन शास्त्रीय-ज्ञानस्य विवक्षितत्वात्। तदाह वृद्धगौतमः,—

"चन्द्र-सूर्य्य-ग्रहे नाद्यात्तस्मिन्नहनि पूर्वतः।

राहोर्विमुक्तिं विज्ञाय स्नात्वा कुर्वीत भोजनम्"—इति॥

एवं तर्हि, परेद्युरुदयात्प्रागपि शास्त्र-विज्ञान-सम्भवात्, तदैव भोजनं प्रसज्येत। तन्न। "परेद्युरुदयेऽभ्यवहरेत्" "अहोरात्रं न भोक्तव्यम्"—इति वचन-द्वयेन तदप्रसक्तेः। यत्तु स्कन्दपुराणे,—

"यदा चन्द्र-ग्रहस्तात, निशीथात्परतोभवेत्।

भोक्तव्यं तात, पूर्वाह्ने नापराह्णे कथञ्चन"—इति॥

यच्च,—

"पूर्वं निशीथाद्ग्रहणं यदा चन्द्रस्य वै भवेत्।

तदा दिवा न कर्त्तव्यं भोजनं शिखिवाहन"—इति॥

तदिदं याम-चयाभिप्रायम्। "चन्द्र-ग्रहे तु यामांस्त्रीन्"—इति

* तयोः परेद्युरुदये स्नात्वाऽभ्यवहरेन्नरः,—इति वि॰ पुस्तके पाठः।

विशेषस्य वृद्धगौतमेनाभिधानात्। पाप-क्षय-कामोपवस्य-दिनमुपवसेत्।
तदाह दक्षः,—

"अयने विषुवे चैव ग्रहणे चन्द्रसूर्य्ययोः।
अहोरात्रोषितः स्नातः सर्वपापैः प्रमुच्यते"—इति ॥

पुत्री तु नोपवसेत्। तदाह नारदः,—

"संक्रान्त्यामुपवासञ्च कृष्णैकादशि-वासरे।
चन्द्र-सूर्य्य-ग्रहे चैव न कुर्यात्पुत्रवान् गृही"—इति ॥

तस्य प्रतिषिद्धे उपवासे भोजनकालः स्मृत्यन्तरे दर्शितः,—

"सायाह्ने सङ्गवेऽश्नीयात्प्रातर्दे सङ्गवादधः।
मध्याह्ने परतोऽश्नीयान्नोपवासोः"—इति ॥

शारदोऽपराह्णः, "यदाऽपराह्णोऽथ शारदः"—इति श्रुतेः,* ।
ग्रस्तास्तमये तु पुत्रिणोऽप्युपवास एव। "अहोरात्रं न भोक्तव्यम्"—इति
भोजन-प्रतिषेधात्†" ॥

॥०॥ इति श्रीमाधवीये कालनिर्णये ग्रहण-निर्णयः ॥०॥

समाप्तोऽयं ग्रन्थः ॥

---

* 'तस्य'—इत्यादिः 'श्रुतेः'—इत्यन्तोग्रन्थोनास्ति वि० पुस्तके।

† अत्र, "विष्णुशातातपौ,—

'नाद्याच्चन्द्रग्रहात् पूर्व्वमह्नि सायं रविग्रहात्।
ग्रहकाले च नाश्नीयात् स्नात्वाऽश्नीयात्तु मुक्तयोः॥
मुक्ते शशिनि भुञ्जीत यदि न स्यान्महानिशा।
दृष्ट्वा स्नात्वा परेद्युस्तु ग्रस्तास्तमितयोस्तयोः।

मत्स्यपुराणे,—

चन्द्रसूर्य्यग्रहे नाद्यादद्यात् स्नात्वा तु मुक्तयोः।
ग्रस्तयोरस्तं गतयोर्दृष्ट्वा स्नात्वा परेऽहनि"।

इत्यधिकः पाठः वि० पुस्तके।